अञ्जसाकृताभ्यञ्जनमहानन्दिनि मिहिरनन्दिनीविहितमहितस्नाने मानुषजाले नीलच्छायदृश्यमानगगनवितानावरोपणेनेव विरचितायां विस्तीर्णतरभुक्ति-शालायाम् अत्यादरमुपहूते यथोचितपदावनेजनादिपूर्वकवितीर्णहिमाम्बुकीर्ण-दिव्याङ्गरागमाल्यतल्लजघूर्णमानगन्धपूर्णदिगन्तराले तरुणतरणिमण्डल-लक्षसदृक्षकाञ्चनभाजनाञ्चितासु पङ्क्तिषु मणिपीठिकागणसुनिविष्टे परिहृष्टे परिमृष्टवेष-धृष्टद्युम्नाद्यनुद्रुत-द्रुपदराज-सपरितोषपरिगृहीत-परिवेषणकृत्यं प्रमुदितभीष्मद्रोणादिसमवेक्ष्यमाणं यादवकुलमिव मधुराज्यासङ्गविवर्धितं वर्षोपवनमिव सञ्जातिकादलजनितामोदं शिशिरजृम्भितमिव परिबृंहितबृहतिकाग्रहणरसं रसिकसभान्तरमिव सरसवार्ताकविकृतिविलोभनीयं समुद्रोदरमिव बहुरसरुचिमद्गुलसिताभोगं समुज्ज्व- लान्नमयतारकापुञ्जरागातिरेकापतितराकेन्दुबिम्बकदम्बविम्बोक-धरसितोज्जवलपर्पटप्रकरतर्पितनयनरसनं विविधखाद्यपेयलेह्यादितेमनगणा-मृतरसांतिगामिस्वादिमसीमाकामाधिकास्वादनकणेघातसमयममालिह्यमानकटु-काम्लरसनिष्ठानपुष्टानन्दभरव्यतिकरविवशतया विनिन्द्यमानम-धुररसमात्रधृताशसुधाशनकुलचरितं निखिलजनघृतस्यामधुस्यादधिस्यादि-परिपूरणभूरिपरिश्राम्यदारालिकपलिकासमाकुलम् अश्नीतपिबतखादत-मोदततृप्यतदृप्यतमद्भुततरमभ्यवहारचरित्रमवर्तिष्ट।

आगच्छन्त्वधिभुक्तिशालमशनायन्तो दिगन्तागताः
किं दध्यस्त्यथ किं घृतस्यथ किमु क्षीरस्यथ क्ष्मासुराः।
इत्थं खादततृप्यतासुचतुरे सूदोत्करे पृच्छति
स्त्यायत्तेमनचारुजेमनभरं ते बोभुजाञ्चक्रिरे॥२९॥

भूपास्त्विन्धनबन्धनाहृतिजनस्कन्धानयस्नापना-
गन्धोन्मर्दनमार्जनोक्षणसुगन्धासेकवासोर्पणैः।
पङ्क्त्यारोपणतालवृन्तजलदानोच्छिष्टहाराल्लल-
च्छय्यासंस्करणदिकैरपि मुदामभ्येयुरल्पेतराम्॥३०॥

तत्तादृशाशनरसावसितौ विराज-
च्छय्यासनादिजुषि दिव्यसभादिदेशे।
ताम्बूलमाल्यमुखभोगविनोदयोगै-
र्मिश्रे विशश्रमुरपश्रममेव सर्वे ॥३१॥

हैमी सर्वा गृहाली कनकविरचितास्तोरणास्तालकल्पाः
स्वल्पं वा भूरि खारीमितमपि कलधौतोत्थमेवात्र पात्रम्।
शय्याः कौशेयमय्यः कनकविरचिताः खट्विका नो दुकूलं
नारत्नं नाप्यहैमं कुहचन ददृशे तत्पुरे वस्तुजालम् ॥३२॥

एवं प्रत्यहमेव तत्र सुमहारम्भो महे प्रस्तुते
सर्वैरव धुरन्धरैः प्रववृते वीतप्रमादश्रमैः।
भीष्मद्रोणमुखाः कृताकृतसमीक्षादीनकार्षुः स्वयं
ये त्वन्ये धृतराष्ट्रवाह्लिकमुखास्ते स्वामिवद् रेमिरे ॥३३॥

एवं प्रवर्तमाने प्रवृद्धतरे समस्तनरप्रमोदे सुरप्रमोदकरणे विधृतत्वर इव द्रुततरमवततार फाल्गुनमासः।

दुःसाधदिग्जयात् पूर्वं यज्ञोपक्रमसाधकः।
फाल्गुनोऽभूद् भुजोल्लासो मासस्त्वजनि साम्प्रतम्॥३४॥

षड्भिस्तु सोमयजनैरभिषेचनीय-
घुष्टैस्तथा द्विपशुनेष्टिशतैः प्राधानैः।
सर्वैः सहैक इह राजति राजसूयो
यः सार्धसप्तदशमाससमापनीयः ॥३५॥

शाला तावन्महीभृत्पदविमितमहाप्रक्रमोत्थप्रमाणा
प्राग्वंशोद्यत्सदोमण्डपमहितहविर्धानशाला विशाला।
मार्जालीयान्विताग्नीध्रकपरिलसिता शङ्कुसङ्कीलितोर्व्यां
कल्पं शिल्पं च बुद्ध्वा व्यरचि बहुमणिस्तम्भहेमच्छदाङ्का॥३६

कार्याणि बन्धुषु निवेश्य स फाल्गुनाख्य-
मासादिमप्रतिपदि क्षितिपालमौलिः।

दर्शेष्टिमाशु विनिवर्त्य कृताततितुङ्ग-
मङ्गल्यदानविभवो विततान दीक्षाम् ॥३७॥

तत्राग्निचित्यासंयोगादुखासम्भृतिमाचरन्।
वायव्यपशुना चेष्ट्वा नान्द्यादीनुपचक्रमे ॥३८॥

स भीष्ममुख्यानभिवाद्य पूर्वं
रक्षादिकृत्ये हरिमेव वव्रे।
धौम्यप्रधानानपि याजकत्वे
तथार्त्विजीनान् परिकर्मकार्मान् ॥३९॥

स्नानाद्यैः शुद्धवर्ष्मा सह नृपसुतया राजसूयेन यक्ष्ये
सोऽहं स्वाराज्यकामस्त्विवति फलमुपसङ्कल्प्य कृष्णार्पितात्मा।
अध्वर्युब्रह्ममुख्येष्वकुरुत वरणं श्लाघ्यमध्यांदिपूर्वं
सर्वे सर्वङ्कषा अप्युचितगुणवशादृत्विगाद्या विभक्ताः ॥४०॥

अध्वर्युर्याज्ञवल्क्यः शतपथविदृचां पालकः पैलनामा
होतोद्गाता सुषामा निखिलविदभवद् ब्रह्मभूतश्च रैभ्यः।
एषां पुत्राश्च शिष्या निजनिजसयुजामृत्विजां कृत्यमापुः
सादस्यं प्राप पराशरमुनिवृषभो नारदाद्यैरुपेतः ॥४१॥

आरोप्याग्नीनरण्योर्नृपतिरथ वधूबन्धुऋत्विक्परीत-
स्तत्तत्सम्भारशुम्भत्करमणिगणभृद्भूसुरालीपुरोगः।
सर्वोर्वीपालपालीनिबिडितसरणिर्भूरिवादित्रघोषः
श्चेतच्छत्रादिशोभी मणिकनकमयीं प्रविशद् यज्ञशालाम्॥४२॥

तत्र च सकलमुनिनृपविद्वज्जनयथोचिताधिरूढमणिपीठे यज्ञवाटे मुनिजनानुगतधौम्यानुस्मारितक्रमादग्नीन् निधाय यथाक्रमविहितत्रिहविष्कदीक्षणीयेष्टयबधिविधृतमृगाजिनमेखलोष्णीषदण्डादिदीक्षितचिह्न परिचिह्नितो विहितोखाधारणो राजसूयप्रारम्भरूपं त्रिदिनदीक्षं त्रिदिनबिहितप्रवर्ग्योपसदं साग्निचयनसप्तमदिनक्लृप्तसुत्याविधानं पवित्राख्यमग्निष्टोमं प्राक्रमिष्ट।

स्वाख्यन् मन्त्रान् क्रियालिं निपुणमतनिषुः सोममक्रैषुरिष्टी-
रादिश्टाश्चानुतष्ठुस्त्रिभिरपि दिवसैरिष्टकाः सुष्ट्वचैषुः।
आग्नीषोमाद्यमालप्सत पशुमुदितं पर्यषौषुर्न्यहौषुः
सोमं व्यातानिषुस्त्रीननुषवणविधीनृत्विजः कृत्यधीराः ॥४३॥

तत्र च,

प्रागेव व्योमपूर्णास्तदनु सुरवरा यज्ञशालान्तिकान्तं
व्याकर्षन्तो विमानान् प्रतिहविरवतीर्यागलं बोभुजानाः।
पश्यन्तो विश्वनाथं तदुपचितमहासम्पदाडम्बरांश्च
श्लाघं श्लाघं सकान्तास्त्रिदिवधुतरसा रेमिरे व्योमरङ्गे ॥४४॥

सम्यग् भोजनतोऽपि सम्मदमधात् कर्मावलीदक्षता-
संप्रेक्षैव ततोऽपि सूरिपरिषत्साररज्ञचारूक्तयः।
सर्वारम्भधुरन्धरस्य तु हरेरानन्दिरूपामृत-
स्यन्दास्वादरसस्ततोऽपि च सतां सर्वोत्तरां निर्वृतिम्॥४५॥

सादस्यं कलयन् क्रियासु विमतौ पादावनेजी क्वचि-
न्मञ्जुव्यञ्जनमाहरन्नपरतः शिञ्जानभूषागणम्।
उच्छिष्टानि हरन् क्वचित् सुतपसां हेमासनाध्यासितो
जुष्टः शिष्टजनैः कुतोऽपि ददृशे कृष्णो जगन्नायकः ॥४६॥

शुभोत्तरैः सर्वत एव सर्वदा
कयापि वृत्त्या ददृशे जनार्दनः।
क्वचित् कदाचित्त्विह मध्यमैर्जनैः।
कदापि नीचैः समदर्शि वा न वा ॥४७॥

तत्र च सप्तभिर्दिनैः पवित्राग्निष्टोमे निर्वृत्ते पुनरष्टसु दिनेष्वनुमत्यादितत्तद्देवत्याः पृथक् पृथगिष्टीर्विधाय पञ्चदशेऽह्नि चातुर्मास्य प्रथमविहितां वैश्वदेवेष्टिमिष्ट्वा प्रतिपदपौर्णमासेष्टिं च निर्वर्त्य तदुत्तरेऽहन्यारम्भ सुत्रामेन्द्रदेवत्यामंहोमुगिन्द्रदेवत्यां च सनतनीसंज्ञिते इष्टी दिनपर्यायेण पर्यावर्तयन् तत्तत्कालप्राप्तनिष्टिपशुबन्धाग्रयणादीनपि यथाप्राप्तां

ससन्तनीकमेव विदधानश्चतुरो मासानतीत्याषाढपौर्णमास्यां सन्तनीपूर्वकं वरुणप्रघासेष्टिं ततः पौर्णमासेष्टिमपि प्रविधाय प्राग्वदेव सन्तन्यौ सन्तन्वानः कार्तिकमासपौर्णमासीप्राप्तौ साकमेधेष्टिविधायी पुनरपि सन्तनीभ्यामेवातिवृत्ते वत्सरे फाल्गुनपौर्णमास्यामेव प्राप्तायां, तस्यां शुनासीरीयेष्टिमिष्ट्वा पुनरपि सप्तदिन्यां सन्तन्यावेव सन्ततान।

ततः समाप्तेषु सन्तनीदिनेषु पुनरष्टदिवस्यां पृथक् पृथगिष्टिषु कृतासु पूर्णास्त्रयोदश मासाः सम्प्राप्तश्च विकस्वरपिकस्वरोन्मेषसूचित-भाविमहोद्घोषातिरेको द्वितीयो वसन्तारम्भः।

तत्र च प्रतिपद्यमावास्येष्टचनन्तरमारोपिताग्निः गरिष्ठाडम्बरं प्रतिष्ठाय वरिष्ठतमब्रह्मगेहमेत्य कृतबार्हस्पत्येष्टिः स्वगृहमेत्य च सन्तनीमिष्ट्वा पुनरप्येवमेव राजन्यमहिषीसेनान्यादिप्रवरप्रकृतिगृहानेत्य तत्तदिष्टीः कुर्वन् द्वादश दिनानि निनाय।

ततश्च त्रयोदशदिने मैत्राबार्हस्पत्याम् अतिमहतीमिष्टिं निर्वाह्य तस्मिन्नेव वळक्षपक्षे महितोद्घोषमभिषेचनीयाख्योक्थ्यसंस्थात्मकं सोमयागं समधिका-डम्बरमणिकाञ्चनादिनिखिलोपकरण जाललेलायन्त्यां शालायामग्नि-चयनानुगुणक्रियासहितं प्राग्वदेव प्राक्रमत।

**अमावास्यादिने सुत्यासिद्ध्येऽनुगुणा कृता।**
**तस्यापरिमिता दीक्षा षडवोपसदोऽभवन्।।४८।।**

ततश्च दीक्षाकर्मणि प्रस्तुते–

**कुशैः पवं कुम्बकुरीरबन्धनं**
**कुतोऽपि साशङ्कुधृतिं च कुर्वती।**
**अकुत्सिताशेषगुणापि पार्षती**
**कुशब्दयोगं बहुधा गता बत ।।४९।।**

**प्रतिप्रस्थातुरनुगा तदैवासावसूचयत्।**
**सहानुयानं विपिनं प्रति प्रस्थायिभिः प्रियैः ।।५०।।**

भाविद्विषत्क्षोभमिवाभिशङ्क्य
राजा नवाज्यादृतमूर्तिरासीत्।
स्वाङ्के पुनर्मानितमेखलेऽसौ
दण्डं तथास्यानुगुणं बभार ॥५१॥

सुमहितकृत्यासङ्गी बहुगुणमुख्यं धनञ्जयं राजा।
कण्ठे जग्राह तदा दिग्विजयादागतं यथैव पुरा॥५२॥

सदैव भूरिदानेषु मुक्तहस्तोऽपि भूपतिः।
बद्धमुष्टिश्च मौनी च दीक्षाकाले किलाभवत् ॥५३॥

विष्णुक्रमोक्ताचरणैश्च भूयो
धनञ्जयोपस्थितिकर्मणा च।
धृतव्रतः सोऽथ निनाय दीक्षां
तथैव नेष्यन्निखिलं निजायुः ॥५४॥

न दीक्षणीयादिकसंस्क्रियागणै-
र्नृपः परं सोमलतामवाप्तवान्।
नरात् स्वयं मूजवतः समागतात्
समग्रहीत् सोमलतां प्रथीयसीम् ॥५५॥

राजस्वनेकेषु गुणैर्नृपेन्दोः
क्रीतेषु वश्येष्वपि चर्त्विजोऽमी॥
शतेन गोभिर्धृतयत्नमेकं
राजानमक्रीणत किं किलैतत् ॥५६॥

विप्रवर्ग्यैः प्रवर्ग्यैश्च प्रदीप्ता यज्ञवाटिका।
सद्भिरप्युपसद्भिश्च सङ्गता नितरां बभौ ॥५७॥

मुख्यः स महावीरः स्नेहमभिप्रास्य दीपितो बहुभिः।
अविसोढमहाहवतो हेतिगणानुत्सृजन्नुदज्वालीत्॥५८॥

**प्रकटमहल्याजारेत्याहूते प्रमुदिते मघोनि तदा।**
**आश्रितपत्नीशाला गौतमगृहिणी तु सत्रपा नितराम्॥५९॥**

तेषु चोपसद्दिनेषु गाङ्गेयलाङ्गलाञ्चितसङ्कर्षणविदलितसन्निवेशायां हस्तिनपुर्यामिव सत्यामुत्तरवेद्यां प्रथमं खलु प्रथनपृथिवीतलमिव समरनिहताश्वपुरुषशीर्षसमाचितं मुहूर्तदुषणमिव अहिमस्तकसमवेतं क्षितिमण्डलमिव अधोगतमहाकूर्माधिष्ठितं रविमण्डलमिव अन्तर्गतहिरण्मय पुरुषं पाण्डवपुरमिव निखिलप्राणभृद्भिरापूरितं वैयाकरणवाक्यमिव यथोचितयोजितविभक्तिकार्यं गगनतलमिव अश्विनीकृत्तिकादिक्लृप्तोदयं जगदादिवृत्तमिव सृष्टिसम्पन्नविराडन्तस्थनाकसन्मण्डलं श्रीकृष्णबाल्यमिव यशोदानुगम्यमानं शूर्पणखाङ्गमिव विकर्णीकृतसंस्थानं परमान्नमिव घृताक्तबहुशर्करोपचितं निर्गुणात्मतत्त्वमिव नवपुरीषच्छुरितं मध्यस्थवचनमिव दर्शितोभयपक्षमुखं वर्णजालमिव पञ्चवर्गोदञ्चितं स्वाहादेवीहृदयमिव अग्निप्रणयास्पदीभूतं भिषग्विचेष्टितमिव दर्शितक्षरघृतधारानिधानम् अग्निचित्यापदमदीप्यत॥

**ऋत्विक्प्रयोयुजितनिस्तुषमन्त्रतन्त्र-**
**निर्घुष्टमिष्टकचितं तदिदं व्यलासीत्।**
**इष्टस्वरूपशिपिविष्टसमुद्दिधीर्षा-**
**संविष्टपक्षिवरपृष्ठगरिष्ठरूपम् ॥६०॥**

तत्र चाग्नीषोमप्रणयनानन्तरमारब्धेक्रमादग्नीषोमीयपशुविधाने,

**एक एव हरिरेष सुत्वनां**
**नाथ इत्यभिनयं विवृण्वती।**
**यूपमङ्गुलिमिवोदनीनमद्**
**भूश्चषालकलिताङ्गुलीयकम्॥६१॥**

**आश्चर्योऽयं यजनमहिमा यो वधादौ निषेध-**
**प्रत्याख्यायिप्रबलविधिशक्त्यैव निर्धूतदोषः।**

अग्नीषोमाद्यमरपरितोषोत्थविश्वेशमोदा-
त्रिश्शेषाघक्षपणनिपुणः श्रेयसां भाति मौलौ ॥६२॥

ततश्च क्रमादेव देवसूहविर्यजनसहितेऽग्नीषोमीयपशुविधाने पर्यवसिते प्रतिदिशं दुन्दुभिलम्बनादिषु च कृतेषु सुत्यादिने प्रस्तुते सत्युक्थ्यसंस्थानुगुणं प्रातःसवनम् आग्नेयपश्वनन्तरविदितैन्द्राग्निपशुयुतं व्याततान॥

सोमेन पूर्वमुदसूयत राजवंश-
स्तेनास्य निष्कृतिपरा इव यज्ञविज्ञाः।
सोमं तदा सुषुविरे वृषचर्मक्लृप्तं
ग्रावप्रहारनिनदैरभिघोषयन्तः॥६३॥

पुरा हि परिजग्राह सोम एवं सुतं बुधम्।
तदानीं तुं बुधाः सर्वे सुतं सोममगृह्णत ॥६४॥
अर्थानुस्मृतिगुरुभिर्मन्त्रैर्विहितानि साधुकर्माणि।
उरुफलजनकान्यासञ्छतपथनयवेदिनस्तदाध्वर्योः॥६५॥

उद्गातृभिः सुविहितेष्वपि सामभेदे-
ष्वासन्नुपद्रवयुता निधनप्रसङ्गाः।
शस्त्रप्रयोगमसृजन् बहुहोतृमुख्याः
संसूचयन्त इव चैद्यरणानुबन्धम्॥६६॥

प्रैषप्रयोगो निखिलोऽपि मान्यो
बभूव मैत्रावरुणस्य सर्वैः।
नृपात्तदण्डस्य हि तिष्ठतोऽस्य
प्रशास्तृनाम्नो ननु युक्तमेतत्॥६७॥

ऋत्विक्चतुर्व्यूहसमस्तकर्म
दृष्ट्वा चतुर्वक्त्र इव स्थितोऽसौ।
सम्यग् वितन्वन् मनसैव सर्वं
ब्रह्मा बभौ कुण्डिकया समेतः॥६८॥

अध्वर्युहोत्रादिमनुक्रियैकत-
स्तद् ब्रह्मणो मानसमेव चैकतः।

चक्रद्वयेन ह्यमुनाध्वरो रथः
शक्राधिराज्याक्रमणे प्रगल्भते ॥६९॥

विद्वद्भिरास्तिक्ययुतैरुपास्ति-
विज्ञैश्च तैः संविहितानि तानि।
पूर्णाङ्गशोभीन्यतिवीर्यवन्ति
कर्माणि गीर्वाणकुलानि चासन् ॥७०॥

राजानं पूर्वमाशीर्भिरध्वर्युः समवर्धयत्।
तत्पानमुदिताः पश्चात् सर्वेऽपि त्रिदशोत्तमाः॥७१॥

उपगम्य हूयमाने ग्रहे सहैवानुदुद्रुवुश्चमसाः।
नृपतौ सुवृत्तबहुले चतुरश्रीभाविता यथा सचिवाः ॥७२॥

ग्रहेषु सर्वेष्वपि भासमानं
सोमं हि पीयूषरसस्रुतं तम्।
हुतं चुचूषुर्विबुधा यथेष्टं
हुतावशिष्टं सममृत्विजोऽपि॥७३॥

सोममिह चर्मपूरं सुतमपिबन्नुदरपूरममरवराः।
यावद्वेदं मोदात् स्वादुङ्कारं च चरुपुरोडाशैः ॥७४॥

सोमस्य तूर्णमथ पूर्णतमाः सुरौघाः
सर्वेऽपि भूरि जहृषुर्जहसुः समन्तात्।
नेदुश्च केळिसमरानसृजन् नभोन्ते
मर्त्योत्सवाच्छतगुणस्त्रिदशोत्सवोऽभूत् ॥७५॥

अग्नौ च सोमे च सहैव नृत्तं
प्रकुर्वतोस्तत्र हविष्प्रमोदात्।
स्फुलिङ्गतोयैर्व्यतिकीर्यमाणै-
स्सिमात्सिमादित्युदगान्निनादः ॥७६॥

आयान्तु दानवगणाः सममेव सर्वे-
र्योत्स्ये छिनद्मि च भिनद्म्यखिलं ददामि।

दोर्भ्यां पिनष्मि पृथिवीं च दिवं च नाहं
सोढास्मि सोममदमित्यनदन्महेन्द्रः ॥७७॥

ततश्च समारब्धे माध्यन्दिनसवने सवनमुखभक्षणमुखेषु दाक्षिणहोमेषु च कृतेषु हविष्प्रमोदितसुरप्रवरप्रहितकामधेनुस्तोमसमकामनीयकहेममणिगणोस्त्रज्वलदुस्त्रासहस्त्राभिजुष्टया निष्कनिष्कलितबहुपट्टवसनभारपुष्टतरतुरङ्गममतङ्गजगणपुरुषादिलक्षणया दक्षिणया दक्षिणतरानृत्विग्जनानत्यन्तप्रत्युदयत्प्रमोदभारान् विधाय पुनर्गुणसमग्रसकलाग्रिमतमपुरुषयोग्यामुदग्रसामग्रीमग्य्रपूजां नृपाग्रेसरः कर्तुमारभत।

तत्र च,

जानन्नप्येष विश्वोत्तरमिह पुरुषं सन्तमेकं सभायां
लब्धुं वृद्धानुमत्या निजमतिदृढतां प्रौढधीराजमीढः।
पूजार्हज्ञाननिस्संशयमतिसहदेवानुयातः सभान्ते
भान्तं शान्तं विरिञ्चप्रतिममभिययौ वैरिभीष्मं स भीष्मम् ॥७८॥

बद्धाञ्जलिस्तदनु भूपतिरेनमूचे
सर्वज्ञ शान्तनव शान्तनवोत्थबुद्धे।
प्राप्तोऽग्र्यपूजनविधिः सदसीह को वा
सम्पूजनीय इति सम्प्रति मे वदेथाः ॥७९॥

पृष्टोऽथ पुष्टविनयेन युधिष्ठिरेण
दृष्ट्वा स दृष्टिवलनैः सुजनानशेषान्।
उत्कृष्टकृष्णमहिमस्मृतिहृष्टरोमा
स्पष्टं गरिष्ठतरया गिरया बभाषे ॥८०॥

ज्ञानं वा ज्ञानभाजां बलमपि बलिनां तापसानां तपो वा
यस्यामी भूमलेशाः क्रतुनिगमसुपर्वादिसर्वात्ममूर्तेः।
यस्यालाभेन यत्प्रीणनमिति सुधियः कुर्वते सर्वपूजां
तं कृष्णं भाग्यलब्धं महय महय भोः किं त्वया चिन्त्यतेऽस्मिन्॥८१॥

विश्वात्मनोऽस्य विहिते परिपूजनेऽस्मिन्
विश्वं जगत् ससुरमानवमर्चितं स्यात्।
जालप्रभां नमति मूर्च्छति कः पतङ्ग
श्रौतानले ज्वलति वा जुहुयात् स्फुलिङ्गे ॥८२॥

तत्र च प्रहर्षबहुमानभारभरिताभ्यां नरदेवसहदेवाभ्यां साञ्जलिबन्ध-मत्यादृते शान्तनवशासने–

हृष्टा बभूबुरखिलाः शिशुपालमुख्या-
स्त्वासन् परस्परविलोकगभीरभावाः।
एकात्मना स्थितमपीह सदस्तदानीं
द्वेधा विभक्तमिव सूक्ष्मदृशां चकाशे ॥८३॥

सहदेवस्तु पुरत एवं तां परिषदवयवोन्मिषितां दोषविकृतिमुपशमयन्निव वचनौषधेन किमपि भिषजाञ्चकार–

शान्तोऽद्य शान्तनववद् बहुविन्न लोके
दृष्टा च पर्षदपि हर्षवतीह कार्ये।
सम्मन्तुमर्हथ समेऽत्र यदुप्रबर्हं
सर्वार्हमर्हयति सम्प्रति भूमिपालः ॥८४॥

तदनन्तरं चोपान्त एवं समान्तरे विलसन्तं भगवन्तं जगदन्तरात्मानं क्षितिबन्धुरयम् अतिबन्धुरविनयमुपगम्य धौम्यगिरा पुरःप्रणनाम।

कृष्णपादरुचिभिस्तदा नृपः
शोणिमानमनयन्निजं शिरः।
तावदेव च स चेदिभूपति-
र्लोचनाञ्चलममर्षरोचिषा ॥८५॥

तदनु च सहजभक्त्याकुलसहदेवादिसहजजनसमम्भ्रमसम्भृतेषु सकलसम्भावनासम्भारेषु दिव्यमणिमयभव्यासननिवेशिते क्लृप्ताभिवादने दत्ताशिषि च नित्यानन्दमये पुरुषे–

भक्त्युद्रेकार्द्रबाष्पद्रुपदनृपसुतापाणिपद्मानुषङ्गि-
त्वङ्गद्भृङ्गारवारा पदनळिनयुगं पुण्यलभ्यं मुरारेः।
पाणिभ्यां नेनिजानः सुकृतनिधिरहो शम्भुलाल्यं तदम्भो
मूर्ध्ना मूर्धाभिषिक्तः सममनुजवधूनन्दनैः सन्दधार ॥८६॥

ततश्च,

पीताम्बरप्रवरभूषणरत्नजालं
दिव्यं यदुत्तरकुरूनभिभूय लब्धम्।
निःशेषकोशभरसारतमं ददौ तद्
विश्वेश्वराय सकलं सजलं स भक्त्या ॥८७॥

तत्तादृशेन बलिना भुवने समस्ते
न्यस्तेऽपि हस्तभुवि तृप्तिमवाप नैवम्।
भक्त्यादरोन्नतिभिरुत्तरलेन राज्ञा
दत्ते यथा स हरिरुत्तमवित्तसारे ॥८८॥

भूयोऽप्येतावता किं बत भुवनपतेरित्यहो लज्जयेव
स्पष्टं स्वात्मानमेव स्वजनसुतपुरीराष्ट्रकोशादिजुष्टम्।
सम्प्राप्याष्टाङ्गपातं नतवति नृपतौ हन्त भोस्तस्य मौलौ
शौरेश्च स्फारभेरीरवयुतमपत् पुष्पवृष्टिः सुराणाम् ॥८९॥

झटिति निपतदानन्दाश्रुरानन्दमूर्ति-
र्नृपतिमधिकभक्त्यां मग्नमुत्थाप्य दोर्भ्याम्।
त्रिभुवनविजयोद्यत्पट्टबन्धाभमस्य
न्यधित शिरसि शोणं पाणियुग्मं मुरारिः ॥९०॥

तत्तादृशे च तत्र समर्हणे परमपरितृप्तात्मनि निखिलजगदात्मनि कृष्णाख्ये परमात्मनि सकलजनेष्वपि तन्मुख एवं सम्मोदनिर्मग्नदृष्टिषु तन्मयीभूतेष्विव स्थितेषु जय जय नारायणेति सगद्गदविनिर्गतप्रशस्तिविधोषणेषु ततस्ततः समुत्थाय समुत्तरलगात्रेषु प्रवृत्तनृत्तेषु समस्तनारदादिमुनिस्तोमेषु नभस्तले च गभस्तिमालिनि शरच्चन्द्र शीतलायमानभानुविताने सुरप्रवरेषु च

हविष्प्रभोजनतोऽपि भृशप्रमोदमग्नेषु सपाण्डवेषु च भीष्मविदुरद्रोणादिषु जिह्मातिगब्रह्मानन्दार्णवमेवावतीर्णेषु शिशुपालादिष्वपि झटिति हठात् तटिन्निपातमापतितप्रहर्षप्रकर्षक्षणमुषितामर्षप्रसरेषु इतरमहाजनेषु च प्रमोदमूर्च्छया मूहूर्तमिव स्वात्मानमप्यनवबुध्यमानेषु समकालमेव च रासातलसौतलवैतलसाप्तसैन्धवद्वैप्यद्वैपान्तस्मरकिकार्न्तुहिकनादेयपौरेयगैरेय-वानेयाकाश्यसौवादिषु विधिहरविष्णुमुखधिष्ण्यगतेष्वपि जीवकाण्डेषु अकाण्ड एव किं किमिदमिति सङ्कुलेषु यं कमपि प्रमोदभारमङ्कुरि-तरोमाञ्चमनुभवत्सु सोषुप्यमाणप्राणिष्वपि तोषप्रसरविद्रावितनिद्रेषु निवसत्सु चञ्चूर्यमाणजन्तुष्यपि तृप्तिरसभरात् सुप्तेष्विवावस्थितेषु स्थावरेष्वपि नवामृतसिक्तेष्विव सद्यः समुल्लसितपल्लवदलेषु निर्लक्ष्यमाणेषु आविरिञ्चमातृणपिपीलिकमखिलभुवनमप्येकानन्दमयमेतन्मुहूर्ते पर्यवर्तत।

शिशुपालस्तु तमिमं यदुवर्यस्य वरिवस्योत्सवं निखिलमुनिनृपसूरिमुख्येषु च पारिमुख्यं प्रसादं समीक्षं समीक्षं क्रमोत्क्षुभितरूक्षत-रामर्षोत्कर्षभृशतरधर्षितात्मा हरित्राकृतविचित्रमणिप्रकाण्डैः सह प्रकामलोहिनीं प्रभां नयनाभ्यामुद्वमन् नृपकुञ्जरोन्मुक्तदानतोयैः समं समुन्मिषितघर्मजलोर्मिवर्मितमूर्तिरखिलजनहर्षोल्लासहासैः सह गभीराट्टहा समुद्घटयन् जनसञ्चयरोमाञ्चैः सहाञ्चितमणिपीठपृष्ठान् समुत्तिष्ठन् अर्घ्यनवाप्तिदुर्भगतरौ करो निर्भररोषान्निर्भङ्क्तुकाम इव मुहुर्मुहुरुन्मर्दयन् निर्दयदुर्वादकरणनिर्वेदधरमिवाधरं दन्तपङक्तिसन्तोदनैः समुत्साहयन् प्राप्तकालमूर्ध्वश्वासमिव निःश्वासधारया प्रसारयन् पार्श्वतीयैमुखतीयैश्च पौण्ड्रकदन्तवक्रादिदुर्भूपैस्तद्भावमेवोद्भाव्य समुद्दीप्यमानः समुञ्चल-दतुच्छरोषच्छिन्नाक्षरां रूक्षतरामाक्षेपवाचमाचचक्षे।

माद्रेयामरसैन्धवावनिपतीन् कच्चीनिमान् धिक्तमा-
मत्राग्रीयसमर्हणं धकिदसत्पात्रे च कात्त्रेयकम्।
सूरिम्मन्यतमान् गतानुगतिकान् धिङ् नारदादीन् मुनीन्
येऽमी मोमुदतीह वारिधिनिकाय्येऽस्मिन् प्रणाय्येऽर्चिते ॥९१॥

जात्या वा कर्मणा वापि च सकलगुणैर्वर्जितो मुख्यवृत्ते-
र्भ्रष्टो वाचापि वाच्यो न भवति सुधियां किं पुनर्लक्षणीयः।

निर्मर्यादं सुखं स्वं वहति परमसावप्यनेनैक्यमानी
नश्यत्कर्माधिकारो भवति कथमयं निगुर्णः पूजनीयः ॥९२॥

मायामात्रं जगत् सुन्दरमयति वपुर्वस्तुतोऽसौ विरूपो
गोपीर्व्यामोह्य साध्वीः स्वरतिमुपनयन् लोकबाह्याश्चकार।
यो नामाप्यस्य शंसेत् स च खलु परधामाश्रयः स्वान् गृहादीं-
स्त्यक्त्वा भिक्षाचरः स्यात् कथमिव स किलामङ्गलः पूजनीयः
॥९३॥

भुञ्जानाः साकमेकामगणितगुरवो ब्रह्महन्तुस्तनूजा
मुण्डापौत्राश्च रण्डाजठरसमुदिताः पण्डिताः पाण्डुपुत्राः।
भ्रूणघ्न्याः सूनुमेनं द्विजनकतनयं भ्रातरं पीतशीथो-
रेनं यन्माननायां जगृहुरिदमलं वर्तते युक्तरूपम् ॥९४॥

यद्वा सिन्धुभुवो जराप्रलपितैर्मुह्यन्त्वमी पाण्डवाः
कृष्ण त्वं त्वनृपो नृपार्हमहनं हास्यं न किं मन्यसे।
युक्तो वा सरमापतेरसदृशे भक्तप्रदानेऽप्यहो
सम्मोदो ननु भूतिलाभमुदितो निष्किञ्चनः खल्वयम् ॥९५॥

धिक् पाण्डुपुत्रचरितं स्थविरप्रमाणं
बालप्रमाणमपि कष्टमहो विनष्टम्।
हे धर्मज द्रुपदजामपि पृच्छ कार्ये
नारीप्रमाणमपि तेऽस्त्विह राज्यतन्त्रम् ॥९६॥

कृष्णश्चेदर्चनीयस्तव किमिति नृपानुत्तमांस्तत्तदर्थे
यत्तानत्राभ्यनैषीर्नहि ददिम वयं भीतिहेतोः करं ते।
धर्मप्रीत्या च धर्म्यस्त्वमिति च कृपया तत्तु नो मन्यसे त्वं
धर्मभ्रष्टाभिपूजाविगळितगुणबन्धोऽयमासीन्मखस्ते ॥९७॥

कार्ये कृष्णो यज्ञचिन्तासु कृष्णो
दाने कृष्णः पूजनीयश्च कृष्णः।

दृष्ट्वा श्रुत्वा कृष्ण इत्येव सर्वं
, प्रागेवेह त्वत्प्रियायैव सोढम्॥९८॥

बाह्लीकः पार्षतो वा स्थविरक इह चेद् द्रोण एको गुरुश्चेद्
गन्धर्वेशः सखा चेदथ तु बुधवरो व्यास एवार्चनीयः।
सम्बन्धी चेत् स शल्यः प्रहरणनिपुणः कोऽपि चेदेकलव्यो
भो भोः पर्यस्त एव प्रभवति पशुपालैकवर्णे हितं वः ॥९९॥

एवं तत्यापवर्णैर्मुनिषु पिहितकर्णेषु कम्प्रे जनौघे
पार्थादिष्वात्तरोषार्तिषु सविधगतस्वास्त्रदत्तेक्षणेषु।
प्रोत्थायास्थानदेशात् कुमतिरभिमतिग्रन्थिलो बन्धुभिः स्वै-
रन्धः सन्धां बबन्धापि च सुदृढममुं सप्ततन्तुं विहन्तुम् ॥१००॥

क्षितिभृन्महिमावलोकतापं
विफलत्वाद् विनिगूह्य वर्तमानैः।
बहुषु क्षुभितेष्वहर्षि गूढं
हृदि दुर्योधनकर्णसौबलाद्यैः ॥१०१॥

निर्यान्तं वीक्ष्य चैनं नृपतिरनुगतश्चैद्य कोऽद्य भ्रमस्ते
वृद्धेष्वध्यासितेष्वित्यनुसृतिनिरतः सिन्धुजेनाबभाषे।
किं साम्नां भूप भूम्ना क्षणमिह शुनकैर्भर्ष्यतां वृष्णिसिंहः
सुप्तोऽद्यैव प्रबोधिष्यति बिभृयुरमी तत्क्षणे भक्ष्यवावम् ॥१०२॥

इति तदुक्त्या निवृत्ते धरित्रीपतौ कथय कथय भोः शिशुपालगृहपालभक्षी तव पशुपालसिंहः कस्कोऽयमिति न्यक्काररोषविवशवादिनि चेदिपतौ श्रावय देवव्रत देवस्वरूपं सकलसमितिजनानिति क्षितिनाथेनाप्यनुनाथितः समक्षमेव तक्ष्यमाणं जगत्क्षेमहेतुं स्वचक्षुर्भ्यामापीय क्षणमिवनिमीलिताक्षः साक्षात् स पैतामहो मुनिजनमुखेभ्यो निशमितं किमपि कथयामीति निगदितुं प्राक्रमत।

श्रोतुमश्रोतुमप्येतच्चेदिक्ष्मापतिरक्षमः।
विवृण्वन् कोपसंरम्भान् प्रशृण्वन्नेव तस्थिवान् ॥१०३॥

पूर्णं ब्रह्मैकमेव स्वयमलसदसौ सच्चिदानन्दमादौ
सर्वप्राप्तौ तु मायां पृथगिव विसृजन् बिम्बितोऽभूदमुष्याम्।
स्वच्छन्दं स्वच्छसत्त्वप्रकृतिलवसमुद्भूतभूतेन्द्रियत्वा-
दच्छन्नैश्वर्यपूर्णं हरिरिति विदधे चाथ लीलाशरीरम् ॥१०४॥

मायामिश्रात्मनासौ गमनपवनतेजोम्बुभूमीर्वितन्वं-
स्तत्संयोगोद्यदन्तःकरणफलनतो धातृजीवात्मकोऽभूत्।
भूतैः सृष्ट्वेन्द्रियासूंस्तनुभुवनमनूत्पाद्य पञ्चीकृतैस्तै-
र्धात्रात्मान्यांश्च सृष्ट्वा जयति जगदवन् भुक्तिमुक्तिप्रदोऽयम्
॥१०५॥

एष एव मधुकैटभौ झटिति पाटयन्नकृत मेदिनी
पीनमीनवपुरानिनाय खुलु दानवेन मुषिता श्रुतीः।
सिन्धुमन्थनधुरन्धरेषु च पुरन्दरादिषु चिरन्तनो
बन्धुरेष किल मन्दरं झटिति सन्दधार कमठात्मना ॥१०६॥

योगीन्द्रोदीतशापाज्जयविजयनिजद्वाःस्थयोर्दैत्यजात्यां
भूत्वा धूत्वा सुरादीन् जगति विचरतोस्तं कनिष्ठं बलिष्ठम्।
दृष्ट्वा धृष्टोष्मकृष्टक्षितिवलयमसौ पोत्रिगात्रो हि धात्रीं
पोत्रेणोद्धृत्य दैत्यं मृधभुवि कदलीकाण्डखण्डं व्यखण्डीत्
॥१०७॥

एतस्यैव तदग्रजासुरभुजस्तम्भाहतात् स्तम्भतः
सम्भूतं नमृगं नमानुषमहो तद् घोररूपं वपुः।
तप्तस्वर्णसवर्णघूर्णदतिरूक्षाक्षं शशाङ्कप्रभं
व्यात्तव्याप्तमुखाग्रवल्गिरसनादंष्ट्रायुगोड्डामरम् ॥१०८॥

भूयः सङ्ख्यमुखे महासुरममुं प्रोद्गृह्य दोर्भ्यामयं
द्वारेऽथोरुयुगे निपात्य नखरान् व्युत्खाय वक्षोभुवि॥
निर्भिन्दन्नधिगर्भनिर्भरगलद्रक्ताम्बुबद्धोत्सवं
पायंपायमुदस्तवान् बहुजगत्संहारिसिंहारवान् ॥१०९॥

दत्तं ह्यत्र भवेत् तनिष्ठमतिभूयिष्ठं प्रतीपक्रिया-
प्यस्याभीष्टदुधैव दृष्टमुभयं त्रैविक्रमप्रक्रमे।
बालस्यास्य पदत्रयीवितरणं त्रैलोक्यदानात्मकं
जातं नाम बलाल्ललास च बलेर्बन्धोऽपि मोक्षावहः ॥११०॥

एष ह्यर्जुनबन्धुरेव भगवान् प्रागर्जुनोद्यद्भुजा-
साहस्रप्रवदास्रविस्रपरशुप्रक्षेपविक्षारितैः।
क्षुभ्यत्क्षुद्रत्तरक्षमापतिघटामांसास्थिरक्तच्छटा-
मेदोभिः खलु मेदिनीं पुनरहो विन्यास्थदन्यामिव ॥१११॥

लीलातोलितनीलकण्ठशिखरिव्यालक्ष्यदोर्विक्रम-
प्रक्षोभः ह हि रक्षसां परिवृढस्त्रैलोक्यकालोपमः।
एतेनैव निहीनवानरचमूजुष्टेन पृष्ठोच्चलद्रक्षो-
लक्षसुरक्षितोऽपि विशिखस्यैकस्य लक्षीकृतः ॥११२॥

श्रुत्वा तावत् प्रसक्तां जयविजयकथां खिद्यते ह्यकस्माद्
वीर्योदन्ते हिरण्यासुरदशमुखयोरात्तहर्षोऽयमास्ते।
प्रोज्जृम्भे नारसिंहे रघुपतिसुमहाविक्रमेऽप्यक्रमोद्यद्-
भीतिकोधत्रपान्धो निवसति विकसद्वासनो दामघोषिः ॥११३॥

एष एव निहतप्रलम्बमधिकप्रलम्बभुजभासुरं
मुष्टिपिष्टखलमुष्टिकं कलितनीलचेलमतिपाण्डरम्।
घोरसीरधरमाजियागकृतमागधाधिकपराक्रम-
स्थेमहोममतिकोमलं वहति कामपालवपुरन्तिके ॥११४॥

अयं पुनः स्ववशीकृतमायस्य श्रेयस्यामीश्वरावस्थायां स्थितस्य निर्मलब्रह्मणो नारायणाख्यस्य सततप्रकटसार्वज्ञ्यादिसकलनिजानुभावः पूर्ण एवं प्रादुर्भावो वासुदेवाख्यः।

सौहार्दवैरभयरागमुखैः समेषां
सद्योविमुक्तिकरणैकधृतत्वरोऽयम्।

भूभारहानिरनुषङ्गकृता तदेनं
मानन्त्यतीव मुनयः सुखसेवनीयम् ॥११५॥

अत एवं निरवग्रहानुग्रहत्वरया वैरयोगभाजां भोजराजादीनां व्योमवादनारदवचनादिना वैरदीपनवेगकारी भक्तितुन्दिलनन्दाद्यभिनन्दनत्वरया पुरत एवं गोकुलयातः पूतनाशकटासुरपवनवत्सबकाघमुखानां निधनेनैव निजपदप्रदायी स्वोपयुक्तस्यानन्तफलदायित्वाद् दत्तमदत्तमपि गोपीनां गोरसादिकमुपयुञ्जानः सर्वथा मनोविलयनार्थं च क्वचिद् बाललीलादिहास्यानि क्वचिद् विविधदास्यलास्यादिकरुणास्पदानि क्वचिल्लोकोत्तरशैलोद्धरणाद्यनेकाद्भुततराणि क्वचित् कालियवेष्टनादि-स्वनिधनभयानि क्वचिदरिष्टकेशिवधादिवीरकर्माणि क्वचिद् भुवनललितमुरलीगानरासविलासविप्रलम्भसम्भोगादिश्रृंङ्गाररसतरङ्गितानि च विश्रृंङ्खलीकुर्वन् गोगोपालमृगतृणवीरुदादिमुक्तिप्रदानायैव च नित्यं नित्यमरण्यसञ्चरणरसं प्रपञ्चयन् विरिञ्चवञ्चनबहुरूपविहरणे च निखिलगोमातृस्नेहप्रसरानात्मगोचरानेव चिरतरं विरचयन् कदाचिदखिलगोकुलवासिनां करतलामलकवद् ब्रह्मानन्दमेव साक्षात्कुर्वन् यथाकथञ्चिद् गत्यर्हांश्च हस्तिमल्लमल्लवरकंसपञ्चजनसृगालहंसडिम्भ-कशतधन्वमुरनरकादीनात्मनैव परिहिंसन् अनधिगत स्ववधसुकृतेषु यवनमगधादिषु चान्तकाले कान्ततररूशान्तपप्रदर्शनेन मुक्तिकरवासनाङ्कुरमावपन् अखिलदेवाप्सरसामपि सम्प्रति सम्भृतनिजसेवया देवत्वान्ते विमुक्तिरस्त्विति यदुनृपस्वदयितारूपेणावतारं प्रागेव प्रचोद्य तत्प्रियानुगुणकल्पितवेषो नित्यमेव तत्तादृशविनोदैर्मनांसि विलापयन् अमूनेव मनुजलोकदुरवलोकां निजलोकसम्पदमिहैव पृथगनुभावयितुं जलधिदुर्गकारितद्वारकाख्यदिव्यपुरविहारी गान्दिनेयधनायापरिपूरण-प्रधानप्रयोजनार्थमेव च स्यमन्तकोदन्तदैन्यमुत्पादयन् अवश्यानु-भाव्यदुरितानुभावनेनापि निरतिशयशुभकरणार्थमेव पार्थादीनामपि किमपि पीडामिव प्रदर्शयन् स्वतनुपश्यविश्वजनदुरितनिःशोषणभक्तवश्यतादि-प्रकटनाय च राजसूयादिकमपि प्रारम्भयन् क्वचिन्मनःप्रेरणैः क्वचिन्नयनप्रयोगैः

क्वचिन्निजप्रभावपप्रकाशनैश्च पुरः प्रज्ञातं परप्रयोजनार्थमेव सकलकर्मलवमपि नर्ममात्रेण निर्मिमाणो निश्चलसच्चिदानन्दाम्भोधिमात्रधिया त्रिदशोत्तमबुद्ध्या मनुजोत्तमबुद्ध्या च तत्तदधिकारिभिरत्यास्वादितनित्यशुद्ध-सत्त्वमयनिष्कलनिर्विशेषमूर्तिरस्मत्सुकृतवशादिह प्रत्यक्षमेवास्ते।

भूयोऽपि चास्य बहु खल्ववतारकार्य-
मास्ते श्रुतं खलु मया मुनिवर्यवाक्यैः।
नैवाधुना प्रकटयांमि तदा तदा तं
पश्यन्तु विश्वजनता भगवद्विलासम्॥११६॥

एष एव खलु बद्धबुद्धवपुरुद्धरिष्यति पुरत्रयी-
मुत्कटोत्कलितकल्किमूर्तिरपि खड्गयिष्यति खलोत्करान्।
भूयसा किमयमेव सर्गलयपालनैकरसिकः पुमान्
याज्य एष खलु पूज्य एष नृप योज्य एष हृदि योगिनाम्
॥११७॥

तद् दुर्विबोधमपि दुर्वचमात्मतत्त्वं
हर्षाश्रुसम्प्लुतसमाजनिशम्यमानम्।
श्रृण्वन् मुरारिरपि हर्षविकारवेगा-
नात्मस्तुतिस्त्विति निगूह्य कथञ्चिदस्थात्॥११८॥

चैद्यस्तु वैरिगुणवर्णनकर्णशूल-
तूर्णप्रदीर्णहृदयोऽधिकपूर्णरोषः।
मन्थाद्रिघूर्णितमहार्णववद् विघूर्णन्
प्रोद्गीर्णवान् वचनहालहलं तदापि ॥११९॥

प्रागेवासौ विसारः क्वचिदसुरवधे हीनसौकर्यखिन्नः
स्तम्भं प्राप्तः कथञ्चिद् व्यदलयपरं सर्वदं तु न्यबध्नात्।
मुन्यात्मा वीरहत्यां व्यधित निरवधिं स्वस्य दारानदोषा-
नत्याक्षीद् राघवात्मा हरिचरितमहो सर्वमेवाभिरामम्॥१२०॥

स्त्रीघ्नो गोघ्नो गुरुघ्नः खगफणिभिदधान्नाकुमात्रं किलाद्रिं
पर्यास्तद् दारुमात्रं शकटमरमयद् गोपिकागव्यमोषी।
ब्रह्मण्यं मागधं तं मुहुरपकृतवांस्तद्भयाद् दाशदेशा-
नातिष्ठन् द्वेष्टि लोकान् मणिममुषदहो स्तौषि दोषानशेषान् ॥१२१॥

षण्डत्वाद् ब्रह्मचर्यच्छलभृदपनयाम्भोधिरम्बापहारात्
कं नानर्थं गतोऽभूः सभयमसहथा गायकाद् भ्रातृघातम्।
त्वं भीरुत्वाच्चिरायुर्वससि कपटधर्मोक्तिभिः प्राप्तमानो
रे रे मिथ्योद्य चैद्यस्त्विह न हरिकथाभीषिकाभिर्बिभेति ॥१२२॥

रे रे वर्षिष्ठ तिष्ठत्विह यदुकुहकश्लाघिका मोघिका ते
गच्छ स्वच्छन्दमृत्युब्रुव समरभुवं खाद्यसे चैद्यवाणैः।
जूर्णे वा पूर्णलज्जैस्त्वयि किमिषुगणैराह्वयेऽहं त्वसाह्वान्
पार्थाः सार्धं स्वकैर्मां रिपुमथनधनुर्धारयं वारयन्तु॥१२३॥

इत्थङ्कारमदमघोषप्रसविनि दमघोषप्रसवे सभाङ्कणसङ्गिनि तुङ्गरोषभङ्गुरभ्रुकुटीके भङ्गाकटभङ्गावहनयनपैङ्गलीजुषि लाङ्गलपाणौ जाङ्गलिकोऽस्म्यहमेव सुनीथभुजङ्गमस्येति लाङ्गलमुद्वहति स्वाङ्गतरङ्गितरोषविकारेषु च गाङ्गेयप्रभृतिषु रथाङ्गपाणौ च शशाङ्कधवलस्मिताङ्कुराङ्कितमुखे निरादर एव स्थितवति भृशाक्षमेषु च प्रतीक्षिततदाह्वानेष्ववस्थितेषु व्याप्तरोषतात्वर्यमाणसात्यकियुतेषु रणशौण्ड-भुजदण्डप्रकाण्डताण्डवितगाण्डिवादिहेतिषु पाण्डववीरेषु रोषचण्डि-मखण्डितसन्देहेषु सममेवोत्थितेष्वप्युग्रतरकोपादग्रतःसरो निर्गलद्विष्फुलि-ङ्कनयनोदरो वृकोदरो गगनाट्टघट्टननिष्ठुराणि त्रिचतुराणि गर्जितानि निर्जनयन् अर्जुनधनुर्ज्यागर्जितैः सममुद्ववाम वाणीम्।

चेदीशानां शतं वा प्रसरतु पुरतो दन्तवक्त्राः सहस्रं
काशीशाः पौण्ड्रका वाप्ययुतमयमयं जृम्भते भीमसेनः।

**ये ये कृष्णार्चनायामसहनमनसस्ते किलैकैकशोऽद्य**
**प्रोद्यद्दोर्दण्डचण्डभ्रमितगुरुगदाघोरघातान् सहन्ताम् ॥१२४॥**

इति परिराटिनं साटोपसमुत्पतिष्णुमधिकासहिष्णुमखिलाभिभूष्णुं गदाविभ्रान्तिविभ्राजिष्णुं जिष्णुज्यायांसमेनं द्वित्रैः पदैरेव चैद्यमूर्धानमधिरोक्ष्यन्तमभिवीक्ष्य पीठिकोत्थायं समुत्थाय हस्तग्राहमभिगृह्णन् जह्नुजासूनुरन्वगादीत्।

**दोर्भिर्नेत्रैश्च पूर्वं हरिहरसदृशं त्यक्तुमैच्छत् पितामुं**
**कस्याप्यङ्के विजह्यात् तनुविकृतिमसावस्य हन्ता स एव।**
**इत्यभ्रोक्त्याद्भुतोपागतनृपतिजनाङ्केषु मात्रार्पितोऽयं**
**वर्धिष्णुर्मातृवीक्षागतयदुवृषभस्याङ्कतोऽभूद् गताङ्कः ॥१२५॥**

**आगः सहस्वेति वृतो जनन्या**
**कृष्णः शनागः सहनं न्यगादीत्।**
**तेनान्यनिर्भीतिरसौ खलोऽस्मा-**
**नाह्वास्त भोःक्षाम्य परामिषे त्वम् ॥१२६॥**

इत्थमुक्ते हस्तधृते च कथञ्चित् तस्थुषि निस्सहज्वलितभीमे भीमे,

**उच्चैरूचे स्वमर्मप्रकटनकटुकक्रोधबाधः सुनीथो**
**रे रे कृष्ण त्वमागः सहसि किल वयं त्वामिषत्वं गतास्ते।**
**एह्येहि क्षुद्र लज्जाविकलचपल गोपाल भूपालमानिन्**
**दक्षश्चेद् रक्ष दक्षक्रतुमिव गिरिशो निर्धुनोम्यध्वरं ते ॥१२७॥**

इति वादिन्येव चण्डभुजदण्डकुण्डलितकोदण्डे सन्तेजितशरकाण्डैः खण्डयितुमेव पाण्डवयज्ञशालां प्रत्यापतति पापिष्ठचेतसि चेदिश्रेष्ठे भूसुरजालकेषु च भीलुकेषु आशयाभिज्ञदारुकपूर्वसज्जितमेव निभृतनिहितं रथप्रवरं लघुप्रपातमारुढः तटित्प्रकाशमिलितनवप्रलयाम्बुदप्रतिमतेजा दृढप्रकृष्टधनुष्प्रकाण्डमण्डलान्तर्गतो रिपुप्रतिमुखमेव ददृशे मुरप्रमाथी॥

**ततस्तु चेदिभूमिभृत्सुहृत्त्वदत्तचेतसः**
**समस्तदुष्टभूपतीनभिप्रचार्य संहतान्।**

जगत्त्रयेश्वरः स्वयं निवर्त्य चापवल्लरीं
घनप्रणादसोदरीं किमप्युवाच भारतीम् ॥१२८॥

भो भोः सज्जनव्यसनसज्जनाच्चिरादेव जयपदविच्युतो मयि नित्यवैरितया मदभेदयोग्योऽयं चेदिराजः।

छिद्रेऽधाक्षीत् पुरीं मे यदुगणमहरद् रैवताद् बभ्रुपत्नीं
जह्रेऽमुष्णान्मखाश्वं मयि मगधसुतार्थे च किं किं न चक्रे।
दुर्वादाः सर्वलोकैरिह च निशमिता यज्ञबाधे शतागः
पूर्णोऽयं तूर्णमस्मादपसरत नृपा घूर्णितं मे रथाङ्गम् ॥१२९॥

इति निशम्य निशाम्य च शार्ङ्गिणः
प्रतिघभारतरङ्गितमिङ्गितम्।
स्वगतिकालमनाप्य भियाप्यलं
क्षितिभृतः सबलाः प्रपलायिताः ॥१३०॥

यान्तु यान्तु किममीभिरद्य मम कातरैर्मृतिभयातुरै-
रेक एव पुनरीश्वरोऽस्मि ननु गोपसूनुघटनाविधौ।
इत्युदीर्य भृशतिग्मधारमिह रुक्मिणीकुचपदाङ्किते
माधवोरसि शरं किरन् गरकिरं गिरं च पुनराददे ॥१३१॥

भो भो गोपवटुं हठान्मम वधूचोरं बलादीनमून्
कृत्स्नान् पाण्डवखेटकानपि मखं चामुं सुखं चूर्णयन्।
बद्धे युद्धमहाध्वरेऽत्र हि जरासन्धस्य बन्धोरहं
स्कन्धावारधुरन्धरोऽद्य वितनोम्यानृण्यमाकर्ण्यताम् ॥१३२॥

ततश्च,

अन्योन्यच्छन्नगात्रध्वजरथमिषुभिस्तत्क्षणं निष्प्रयासं
प्रास्तापास्ताखिलास्त्रत्रसभुवनमदृष्टश्रुतं नारदाद्यैः।
चैद्येनोद्यत्प्रकोपप्रतिभयवदनं शौरिणा स्मेरवक्त्रं
हंहो किं किं न चित्रं निरघटि घटिकामात्रतः शात्रवाभ्याम्
॥१३३॥

ततस्तु नमोऽस्तु भगवन् बाध्यतां न माध्यन्दिनसवनवेला तव लीलारसैरिति दारुकेणापि दारुणशरविदारितेन धीरतां विहाय वारितः शौरिरेनमारचितचारुस्मितमीरयति स्म।

पूर्वं घोरनखाङ्कुशैरथ शराङ्कूरैः कृताङ्को मया
दत्तद्वेषवरः स चेदिभृदसौ मद्भृत्यमुख्यो जयः।
पश्यन्त्वस्य बलं जना इति मया यत्किञ्चिदुत्क्रीडितं
यच्छाम्यद्य मनोरथं पृथुमहश्चक्राय चक्राय मे ॥१३४॥

आरोक्ष्यामि तवाङ्गमात्ममहसा रे कृष्ण कृष्णेत्यलं
क्षिप्तेषोर्द्विषतः सुदर्शनमसौ दुर्दशनं प्रोद्वहन्।
उच्चैर्धर्मपथो जयत्विति वदन् मार्ताण्डचण्डत्विषा
तेनाकुण्ठजवं चखण्ड कुमतेः कण्ठं विकुष्ठेश्वरः ॥१३५॥

जन्मत्रय्यात्तविष्णुस्मरणबलसमुद्बुद्धविद्धामदीप्तं
बुद्ध्याद्यं चैद्यदेहादुदितमुरुमहोरूपि सूक्ष्मं शरीरम्।
कृष्णं प्राविक्षदालक्षितमखिलजनैः सर्वकामाढ्यपूर्ण-
ब्रह्मानन्दं स भेजे परमसगुणसायुज्यमावृत्तिहीनम् ॥१३६॥

हृष्टैः सुरैः कुसुमवृष्टिरमोचि कृष्णे
तुष्टाः समे जय जयेति जना विनेदुः।
दष्टाधरोष्ठमपि पिष्टकरं क्षणार्धं
दुष्टाः स्थिता अपि भियैव पुनर्ननन्दुः ॥१३७॥

एवं चैद्ये तमाद्यं पुरुषमुपगते तत्सुतं न्यस्य राज्ये
निर्मास्यन् कर्मशेषं नृपतिरयमुपानीय दानीयलोकान्।
वित्तः स्वस्यैव हस्त्यैर्मणिगणगुरुभिर्द्रौणिपात्रप्रणीतैः
कर्णोत्कीर्णैश्च पूर्णानकुरुत निखिलान् वित्तमप्रत्यनीकान्
॥१३८॥

रत्नाग्र्यस्वर्णकन्यावसनपशुघटायानभूषादि यद्यद्
यस्येष्टं यच्च धर्तुं क्षममखिमिदं राज्ञि देदीयमाने।

कालेनाशेषकामप्रतिहतिरवधिं हन्तकारेष्वकार्षीद्
गृह्णीतायात पूर्णं तनु कुरु भवनादीति घोषो निरैषीत् ॥१३९॥

ततः क्रमेण निवृत्ते मरुत्वतीयग्रहत्रितयहोमे दिव्यदुकूलजालोल्लसितोल्लोचादिवेल्लितशालाप्राग्विभागे गृहीतकोदण्ड- शरकाण्डस्य राजशार्दूलस्य शार्दूलचर्मास्तरणासीनस्य सर्वौषधादिभिरमिताघोषमभिषेककर्म निर्माय समभिषिक्तोऽयं युधिष्ठिरः पाण्डुसूनुरिति समुद्घोषयाञ्चक्रुः।

पुरस्तादभिषेकस्य परस्ताच्च कृतास्तदा।
पार्थहोमास्तु पार्थस्य यो सार्थकतां ययुः ॥१४०॥

बाहुः पृथिवीभरणाद् वराहकृत्यादृतः सदा नृपतेः
अवहदिह पादुकामयवराहकृत्त्यादरं सपादोपि ।१४१॥

माहेन्द्रस्तुतशस्त्रप्रयोगपरिशोभितेऽथ समितितले।
देवासुरसमरसमं समरमकुर्वन् प्रधाव्य वीरवराः ॥१४२॥

सङ्ग्रामडम्बरविधाविह दुन्दुभीन-
प्याजघ्नुरुग्ररवजृम्भितकम्पिताशान्।
चक्रुश्च वादचतुराःसदसि प्रकामं
तर्कादिपक्षशतसाधनबाधनानि ॥१४३॥

आग्नीध्रपश्चिमोद्यन्मणिभवने संस्थतोऽयमासन्द्याम्।
सूतादिप्रकृतिवरैर्देवनमतनिष्ट काञ्चनैरक्षैः ॥१४४॥

ततश्च नरकेसरिणेव हिरण्यकशिपुमाक्रम्यासीनेन होत्रा वेदभागगदितमेव शौनःशेपमाख्यानमाख्यापयन् विहितसरण्या हिरण्यासनगोसहस्रमयीं चास्य दक्षिणां दत्त्वा माहेन्द्रग्रहभक्षणादिरीत्या साध्वेव माध्यन्दिनं सवनं समाप्यत।

तृतीयसवने तावत् सोमग्रहममुद्यमे।
हन्तादित्यग्रहोऽप्यासीत् तूष्णीं ज्योतिर्विदोऽभवन् ॥१४५॥

ततस्तृतीयसवनेऽपि समाप्ते महिताघोषसम्भृतावभृथोदयनीय मैत्रावरुणीषु कृतासु गृहान्तरमासाद्योदवसानीयेष्ट्यवसाने निखिलाभरणादिपरिकपरिभूषितस्य महाराजस्य महाडम्बरविजृम्भितः पुनरभिषेकोऽपि विघोषितोऽभूत्।

एवं चैत्रमाससमाप्तौ समाप्तेऽभिषेचनीये तत्रैव सद्मनि कृतामावास्येष्टिः पुनराग्नेयीमिष्टिमन्वतिष्ठत्।

तदुत्तरदिने च तद्गृहात् पुरस्तात् षट्सु शम्यान्यासप्रदेशेषु प्रतिदिनं पृथक् पृथगिष्टीर्विधाय सप्तमदिने सप्तमशभ्याप्रासप्रदेशे प्रागेव प्रतिष्ठितामतुलमहाभोगशालिशाला- मष्टमीतिथौ प्रविष्टो यष्टा तस्यां दशपेयाख्यमेकदीक्षादिनारब्धं त्रिदिनोपसत्कं चदुर्थदिनसुत्यमग्निष्टोमसंस्थं सोमयागं प्रथमथितप्रक्रिययैव प्रक्रमते स्म।

**यद्दीक्षादिवसे बिभर्ति नृपतिः सत्पुण्डरीकस्रजं**
**प्रजापत्यकतूवरश्च सवने कायश्च यस्मिन् पशुः।**
**सोमं यत्र च भक्षयन्ति चमसान् हुत्त्वा शतं ब्राह्मणा**
**यस्मिन् वा मणिदर्पणद्वितयमप्यध्वर्यवे दक्षिणा ॥१४६॥**

ईदृशस्य चतुर्दिननिर्वर्त्यत्वादहर्दिवनिर्विशमस्य महाभोगमहनीयस्य दशपेयक्रतोरन्ते कृतश्मश्रुमात्रवपनो मेदिनीपतिर्द्वादशतिथाववेष्टिं नामेष्टिं पञ्चहविष्कामनुष्ठाय तदूर्ध्वेऽहन्यादित्यमारुतच्छागीद्वयवन्तं पशुबन्धमप्युपसन्तेने। ततश्चतुर्दश्यां पूषादिदेवत्यां पञ्चदश्यां च पूर्वप्रयुगाख्यामिष्टिमिष्ट्वा कृतपौर्णमास्येष्टिरुत्तरेऽहनि उत्तरप्रयुगाख्यामपि कृत्वा पुनर्द्वादशदिन्यां च जन्यार्थिनां जन्यप्रदानसन्नद्धो धृतव्रत एव ववृते।

**नाभविष्यदिह चेज्नार्दनो**
**नामरिष्यदथवा स चेदिराट्।**
**आपतिष्यदधुनात्र सङ्करो**
**घोर इत्यनुशुशोच नारदः ॥१४७॥**

**ततो वसन्तान्तिमदर्श आगते**
**तिस्रस्तदा दक्षिणमध्यमोत्तराः।**

शाला व्यदृश्यन्त कृता महाप्रभाः।
पुरो यथा पावकशक्रशूलिनाम् ॥१४८॥

तासु च दक्षिणशालां प्रविश्यापरिमितत्वविधेः द्वित्रिदिनमात्रदीक्षं द्वादशोपसदम् आसन्नपौर्णमासीव्यवस्थितसुत्याप्रयोगम् अतिरात्रसंस्थात्मकं केशवपनीयं नाम सोमयागं कृत्वा तदवसानकृतकेशादिकृत्स्नलोमवपनो बभूव भूमिपालः।

दीक्षाक्रमो मिलदुखाभरणः पुरोवद्
दीक्षावधौ क्रयविधिश्चयनं तु सर्वम्।
कार्यं प्रवर्ग्यदिवसेषु पशुस्तदन्ते
सुत्या तदूर्ध्वमिति सर्वमखे समानम् ॥१४९॥

एवं ग्रीष्माद्यवलर्क्षपक्षे गते मध्यमशालामध्याविश्य पक्षत्रयनिर्वर्तनीयं व्युष्टिद्विरात्राख्यमहीनमहीनाभोगं सोमयागमारभत।

सोऽप्यपरिमितदीक्षाविधानात् त्रिंशद्दिनप्रायदीक्षावसानोऽहीनत्वान्नियत-द्वादशोपसत्को ग्रीष्मावसानचतुर्दशीपञ्चदशीव्यवस्थिताग्निष्टोमातिरात्र-संस्थात्मकसुत्यात्मकदिनद्वयविद्योतमानः समुद्यदवभृथादिघोषः समाप्तिं ययौ।

तत्र श्रावणमासाग्रिमपक्षपक्षतेः परमेक्षताभोगामुत्तरशालां प्रत्युपेत्य क्षत्रस्यधृतिं नामाग्निष्टोमं त्रिदिनदीक्षं त्रिदिनोपसत्कं सप्तमदिनसुत्यम् अत्यन्तप्रोद्घोषितावभृथं प्राथमिकरीत्या प्रातनुत।

ततस्तदुत्तरदिनैः पूर्वदेविकेष्टिमुत्तरदेविकेष्टिं त्रैधातवीयामप्याधाय पक्षशेषेण पशुत्रितयसुराग्रहादिव्याप्तामात्तावघोषावभृथयात्रां सौत्रामणीम-प्यतिवाह्य श्रावणमासपूर्वपक्षान्ते राजसूयमहाक्रतुमतिक्रमयाञ्चक्रे।

तत्र च,

गङ्गायां तुङ्गरङ्गत्पटहपटुरवं सङ्गतानन्तभूभृद्-
भूषाशस्त्रौघतेजःकपिशदशदिशं विस्मिताशेषलोकम्।

व्योमान्ते पाण्डुनापि प्रमदभरगलद्बाष्पमालोक्यमानं
चक्रे शक्रातिगश्रीरतुलमवमृथाघोषमन्त्यं नरेन्द्रः ॥१५०॥

दिव्याध्वरावभृथपूततमे द्युनद्या-
स्तोये ममज्ज हरिणा सह सर्वलोकः।
आपाण्डुपाण्डुसुतकीर्तिपयः पयोधौ
तावच्चतुर्दशजगत्यपि पर्यमाङ्क्षुः ॥१५१॥

निर्वर्त्यावभृथं महोज्ज्वलमहाः कृष्णासखो राजरा-
डुत्तीर्णः सुरवृन्दकीर्णसुमनःसम्भारसम्भावितः।
कृष्णाभ्यां धृतचारुचामरमणिच्छत्रो धरित्रीभृतां
सार्थैः सार्धमगाद् विशेषविहितालङ्कारतुङ्गां पुरीम् ॥१५२॥

निर्वृत्ते सप्ततन्तौ सुमहितविभवे निर्वृते सर्वदेव-
व्राते निर्व्यूढकृत्यो नृपतिरथ समाहूय निश्शेषलोकान्।
बुद्ध्वोर्ध्वं धार्तराष्ट्रच्छलमतिमधुनैवाहमुद्धूलयिष्ये
वित्तौघानित्यभीप्सन्निव मणिकनकं मेघवर्षं ववर्ष ॥१५३॥

दिग्भ्यो बलाहृतमनन्तधनप्रपञ्चं
तत्रैव वर्तयितुकाम इवावनीन्द्रः।
तत्तद्दिशं गमिषु सर्वजनेषु किं किं
कस्मै ववर्ष न सहर्षमधर्षितोष्मा ॥१५४॥

नो देहेषु ममुर्विभूषणगणा गेहेषु नार्थावली
नैवाश्चर्यरसानुभूतिलहरी चित्तेषु वा देहिनाम्।
आविप्रं पुनरान्त्यजाति निखिलं मानुष्यकं तत्क्षणाद्
भूपप्रत्तदुकूलकाञ्चनमणिव्याप्त्या सुदीप्तं बभौ ॥१५५॥

दद्मो दद्मो धनालीर्नरवरतिलकायेति सर्वे नरेन्द्राः
सर्वं सम्पूरयामो द्विजमुखजनतास्वित्यमी पाण्डवेयाः।
एवं स्पर्धानुबन्धे महति सति जयं केवलं जानते ते
पूर्णोद्गीर्णोरुरत्नज्वलदररमुखाः कोशगेहप्रदेशाः ॥१५६॥

एवं निःसीमहृष्यन्मुनिसुरमनुजाशीर्भिरुद्घोषिताशं
प्रस्थानप्रत्तपुण्यद्धनगृहनगरक्षेत्रपात्रादिभारम्।
स्वर्णापूर्णावकीर्णव्रजदुरुजनताकांञ्चनीभूतविश्वं
चित्रं निर्वर्त्य तत्र क्रतुवरमतुलं धर्मराजो विरेजे ॥१५७॥

एतावन्मत्कृपायाः खलु विलसितमित्युच्यकैर्दशयित्वा
विश्वानन्दाभिवर्षी पुनरपि वसतिं प्रार्थ्यमानोऽपि पार्थैः।
दैवाद् भाविन्यवस्था मयि सविधगते मास्त्वितीवात्तचेता-
श्चैद्यारिः सौभरुद्धां सपदि निजपुरीमश्वयीद् विश्वसाक्षी
॥१५८॥

इति राजसूयप्रबन्धः समाप्तः ।

# दूतवाक्यप्रबन्धः

साकं राजा सगर्भ्यैः समयजलनिधिं दुस्तरं साधु तीर्त्वा
निर्मुक्तो वक्त्ररन्ध्राद्विधुरिव तमसो भासमानो नितान्तम्।
पाणिं पार्थात्मजेनाद्भुतभुजमहसा ग्राहयन्नुत्तरायाः
सन्तुष्यन् बन्धुवर्गैः सह शमनसुतो मात्स्यपुर्यां न्यवात्सीद् ॥१॥

सौभद्रस्य विराटजापरिणये वृत्ते समं पाण्डवै-
रास्थाने मिलितेषु रामशिनिभूपाञ्चालमात्स्यादिषु।
स्वैरालापकथावधौ स भगवान् दैत्यान्तकः सौहृदात्
पार्थानां करणीयशेषविषयामित्थं बभाषे गिरम् ॥२॥

कृष्णः—

विज्ञातं खलु सर्वमेतदखिलैर्यद्धार्तराष्ट्रैः कृतं
द्यूतच्छद्म विधाय पाण्डुतनयेष्वव्याजवृत्तेष्वपि।
एतैरप्यभिमर्षितं तदखिलं सत्ये स्थितैर्विग्रहे
शक्तैरप्यनुभूतदुःखनिवहैरेतावतो वत्सरान् ॥३॥

तत् सर्वैरपि चिन्तनीयमधुना लभ्यं यथा पैतृकं
राज्यं पाण्डुसुतैर्यथा च न भवेन्नाशः कुरूणां कुले।
अस्माकं तु मतं गतं तदखिलं विस्मर्यतां प्रेष्यतां
दूतः सामगिरा च सन्धिपरया राज्यार्धमादित्स्यताम् ॥४॥

लोकानामिदमेव सम्प्रति हितं पथ्यं च पृथ्वीभुजां
सर्वेषामयमेव दोषरहितः पन्थाः कुरूणामपि।

एतेषामियमेव पाण्डुजनुषां नीतिश्च साधीयसी
भुज्येत प्रविभज्य राज्यमखिलं सन्धाय यद् बान्धवैः ॥५॥
इत्थमुक्तवति भक्तवत्सले
सावहित्थवचने यदूत्तमे।
शिष्यवत्सलमनाः सभान्तरे
रेवतीरमण एवमूचिवान् ॥६॥

**बलभद्रः—**

उक्तं युक्तमनेन संसदि विदन् को वा वदेदन्यथा
पार्थानां धृतराष्ट्रजैःसह दृढं सन्धैव साधीयसी।
गान्धारं पुनरक्षदक्षिणमसावाहूय मोहान्निजै-
र्दोषैरेव पराजितोऽत्र शकुनेश्छद्मायितं कीदृशम् ॥७॥

इत्थं वदत्येव तदा यदूनां
वर्ये स धुर्यस्तरसा शिनीनाम्।
वाणीं कृपाणीमिव तीक्ष्णरूपां
समाददे सात्यकिरात्तरोषः ॥८॥

**सात्यकिः—**

हा धिक् कष्टमिदं सतामपि कथं पापीयसी हन्त धी-
रस्मिन् धर्मसुतेऽपि कस्य रसना दोषं विवक्षेन्मृषा।
अस्त्वेवं निजशिष्यवत्सलधियो नास्य प्रतिब्रूमहे
तं दुर्योधनमेव मे धनुरिदं वक्ता शरैरुत्तरम्॥९॥

पुङ्खानामस्तु सन्धिः सुदृढमिह गुणैर्नो पुनर्धार्तराष्ट्रैः
पार्थानां प्रेषितव्याः समरभुवि शरा एव शाता न दूताः।
स्नेहालिप्ता कृपाणी निपततु तरसा तेषु नो सामवाणी
भोक्तव्यं पांसुजालं ननु रणभुवि तैर्नार्धराज्यं कदापि॥१०॥

**द्रुपदः—**

कामं विग्रहसाध्य एव स रिपुः सामैव कार्यं तथा-
प्यारम्भो मृदुपूर्व एव महतां तीक्ष्णोत्तरो नान्यथा।
अस्मद्दूतगिरा च शान्तसमरोद्योगेषु तेषु क्षणा-
दर्थानां सुहृदां च संग्रहमितः साङ्ग्रामिकं कुर्महे॥११॥

तदनु स भगवान् पाञ्चरात्रप्रपञ्चितः पाञ्चालगिरं तां वाञ्छानुगुणामभिनन्दन् इतः परमपि निजप्रयत्नप्रकाशनेन माध्यस्थ्यदीक्षाभङ्गमाशङ्कमानस्तयोरेव पयोधिगम्भीरचेतसोः पाञ्चालमात्स्याधिपयोरधिरोप्य बन्धुकार्यभारं सिन्धुराजमध्यगामध्यगान्निजामेव नगरीम्।

नीतिज्ञो मधुरोक्तिभिः शमयितुं विद्वेषिणामुद्यमं
पाञ्चालः स्वपुरोहितं प्रहितवान् वेगेन नागाह्वयम्।
पूर्वामन्त्रणकर्मणा वशयितुं साधारणान् भूपतीन्
मात्स्येन्द्रोऽपि दिशासु दूतनिवहान् पार्थानुमत्या जवात्॥१२॥

प्रोत्साहिता दूतघनैर्भ्रमद्भिः
प्रत्याशयद्गीर्णनिदेशतोयैः।
उच्चेलुरुर्वीपतयस्तमाप्तुं
सरित्प्रवाहा इव वारिराशिम्॥१३॥

कर्णाटानर्तवङ्गद्रमिलनिषधकाम्बोजसौवीरभोजा-
न्ध्रारट्टावन्तिकुन्त्यश्मकमगधकलिङ्गाङ्गपुण्ड्राधिनाथाः।
अन्येऽपि क्षोणिपालाः क्षपितरिपुबला मूर्धभिर्दूरनम्रै-
राज्ञां राज्ञो गृहीत्वा समुदमुदचलन्नुत्सुका युद्धकेल्याम्॥१४॥

पार्थस्य विज्ञाय चरैः प्रवृत्तिं
विसृज्य राजन्यगणाय दूतान्।
अर्थी स्वयं द्वारवतीमगच्छत्
सुयोधनः सोऽपि सुतो मघोनः॥१५॥

तदनु तस्मिन् द्वारभुवि निवेशितबले दूरापसृतपौरजनकोरकितकरारविन्दवृन्ददन्तुरितोभयपार्श्वेन मार्गेण समतीत्य सप्तकक्ष्यान्तराणि प्रकटितकपटस्वापस्य कुहनामानुषस्य भगवतो वासुदेवस्य

वासभवनं प्रविश्य तत्र च शिरोभागनिहितमहितभद्रासनमध्यमध्यासीने मानधने सुयोधने, निभृतमुपगभ्य धनञ्जयोऽपि कृताञ्जलिस्तस्य वैकुण्ठस्य चरणोपकण्ठे कुण्ठेतरधियां वरिष्ठस्तिष्ठन्नेव प्रभोः प्रबोधसमयं प्रतिपालयामास।

काले तस्मिन् प्रबुद्धः किल मधुमथनो वीक्ष्य तिष्ठन्तमग्रे
जिष्णुं व्यावृत्य किञ्चित् कुरुपतिमपि तं रत्नपीठे निषण्णम्।
तौ सर्वज्ञोऽप्यजानन्निव कृतकुशलप्रश्न एवं बभाषे
किं तादृक् कार्यमद्य स्वयमुपगमनात् क्लेशितौ यद्भवन्तौ
॥१६॥

श्रुत्वा तयोरागमनस्य हेतुं
कार्यं समं कर्तुमियेष शौरिः।
भर्तुः कुरुणां प्रथमागतस्य
दृष्टस्य च प्राक् पुरुहूतसूनोः॥१७॥

कृष्णः—

नूनं पूर्वमुपागतः खलु भवान् दृष्टस्तु पूर्वं मया
जिष्णुस्तत् सदृशी दशेयमिह मे तुल्येऽद्य मित्रद्वये।
योधानां दशकोटयस्तदिह मे नारायणाख्यावतां
सन्त्वेकस्य परस्य चास्मि सचिवो युद्धे निरस्तायुधः॥१८॥

इति वादिनं मधुभेदिनमेव वृतवति कृतधियामग्रेसरे फल्गुने समग्रकौतुको नागकेतुरपि प्रगृह्य तत् परमबलमुल्बणभुजबलोद्भटानां भटानां पुनरपि कृतवर्मयुक्तया समस्तभुवनविक्षोभिण्या पुनरक्षौहिण्या परिवृतः स्वमेव नगरमयासीत्।

निर्यातेऽथ सुयोधने निजकरेणालम्ब्य सख्युः करं
प्रोन्मीलन्मधुरस्मितार्द्रतरया वाचा तमूचे हरिः।

कार्यं किं पुनराकलय्य तरसा योधानबाधानिमा-
नाधून्वन्नमितानशस्त्रमयि! मामेकं वृथैवावृथाः॥१९॥

अर्जुनः–

जानन्नेव किमद्य मोहयसि मां नाथ! त्वदेकाश्रयं
किं देवैरपि सासुरैर्मम यदि प्रत्यर्थिपक्षे भवान्।
कामं स्याद् बहुरेक एव यदि वा शस्त्री विशस्त्रोऽथवा
जेतुं त्रीणि जगन्त्यपि प्रभुरहं सान्निध्यमात्रेण ते॥२०॥

ततः स तेनार्थितमन्वमंस्त
सारथ्यमीशो जगतां त्रयाणाम्।
समाश्रितानामवनाय कर्म
नीचैरपि स्वीक्रियते महद्भिः॥२१॥

प्रीतः स तस्यां पुरि वासराणि
द्वित्राणि नीत्वा सह माधवेन।
लिप्सोर्निजां भूमिमजातशत्रो-
र्ययौ सकाशं विधिनेव यत्नः॥२२॥

अक्षौहिणीनां महता भरेण
क्षोणीमशेषामपि कम्पयन्तः।
युयुत्सवः क्ष्मापतयोऽध्यवात्सु-
र्विराटकौरव्यपुरोपकण्ठान्॥२३॥

कौन्तेयपार्श्वं महता बलेन गच्छन् प्रहृष्टः पथि सत्क्रियाभिः।
साह्यं प्रतिश्रुत्य सुयोधनाय मद्राधिपो मात्स्यपुरीमयासीत् ॥२४॥

स तत्र पार्थं श्रुतमार्गवृत्तं
भूत्वा नियन्ता तनयस्य पूष्णः।
तेजो निहन्यामिति भाषितेन
सन्तोष्य कौरव्यसकाशमागात्॥२५॥

सुमहति बलषण्डे पाण्डवान् कौरवान-
प्युपगतवति पाञ्चालेरितस्तत्पुरोधाः।
कुरुपुरमुपयातः पाण्डवानां बभाषे
बलविभवमशेषं सन्धिवाञ्छां च चित्ते॥२६॥

पुरोहितः–

सप्ताक्षौहिण्य एषां खलु परिमिलिताः सन्ति चान्याश्चतस्रो-
ऽप्यक्षौहिण्योऽनपाया नकुलतदनुजौ सात्यकिर्भीमसेनः।
उद्रिक्ताः षड्रथाश्चेत् पशुहरणरणे दृष्टकर्मा स एक-
स्तेभ्योऽलं सव्यसाची स पुनरतिशयश्चक्रिणो यत्कृपैषाम्
॥२७॥

एवं स्थितेऽपि बहुबन्धुवधानुबन्धात्
सन्धित्सवो न तु भृशं विजिधृक्षवोऽमी।
तच्चिन्त्यत्तां हितमिति प्रवदन् गतोऽसौ
भीष्मादयः शिशमिषाश्रवणात् प्रसेदुः॥२८॥

स्नेहान्धो जन्मनोन्धोऽप्यथ स कुरुपिता सामभिः साधयिष्यन्
पार्थानां शान्तिभाजां पुनरटविगतिं शीलमेषां प्रशंसन्।
तत्त्वज्ञं नीतिविज्ञं प्रियहितनिरतं प्राहिणोत् सञ्जयं तं
सोऽपि प्राप्याभितुष्ट्यै बहुविधकुशलप्रश्नकारी बभाषे॥२९॥

सञ्जयः–

स्नेहाधिक्येन युष्मानुपदिशति पिता भूतमैत्रीविचारः
शान्तिः क्षान्तिर्दया चेत्यखिलगुणगणैर्नित्ययुक्ता हि यूयम्।
आकिञ्चन्ये च राज्ये स्फुटमिह तुलया तोलिते राज्यमुच्चै-
र्न्यूनं प्राहुस्तदर्थं बहुविधदुरितं को नु कुर्याद् विवेकी॥३०॥

मर्तव्यं स्वशरीरमेव सुलभं भोक्तुं यथेच्छं फलं
शय्याश्चारुशिलातलानि सरितां तोयं च पेयं लघु।

साध्यं विश्वमपि स्थिरेण तपसा तद् भाग्यभाजामहो
सम्प्रार्थ्यो वनवास एव नगरीवासाद् गरीयस्तरः॥३१॥

बध्नात्येव हि यत्र यत्र ममतां तत्तद्विषादास्पदं
यस्त्वात्मम्भरिरेव तस्य गुणिनो राज्यं हि सर्वा मही।
तद् वो बन्धुतमस्य पुण्यसुलभस्यैतस्य लक्ष्मीपते-
र्गेहे सौहृदवास एव किमु न श्रेयान् वहूनां वधात्॥३२॥

ईदृग्गिरामफलतावगमात् सलज्जे
राजाज्ञयैव खलु शंसति सञ्जयेऽस्मिन्।
सर्वेषु च प्रतिविवक्षुषु पाण्डवेषु
धर्मात्मजः स्वयमुवाच वचो गभीरम्॥३३॥

धर्मपुत्रः—

सत्यं प्रेमातिरेकादनुगदितमिदं तेन पित्रा कुरुणां
श्रेयानप्येष मार्गो लगति न मनसि क्षात्रदोषाकुले नः।
सौहार्दादेव पूर्वं शकुनिरकृत नः किञ्चिदारण्यवासं
येन प्राप्तानि तानि त्रिपुरहरवरादीनि भूयः फलानि॥३४॥

जानास्येव सुयोधनस्य कुनयं राज्ञश्च तद्वश्यता
धीमन् सञ्जय! तत् किमीदृशगिरा क्षत्रान्वयोत्था वयम्।
किञ्चागांसि सुदुःसहान्यपि हृदि क्षन्तास्मि सन्धिं वृणे
शक्रप्रस्थपुरेऽर्धराज्यभुगहं प्राग्वत् प्रकल्प्येय चेत्॥३५॥

अथवा किमनेकजल्पितै-
र्वयमेते यदुनायकाश्रयाः।
स वदिष्यति नः क्षमं हितं
निगमः सद्गतिकामिनामिव॥३६॥

कृष्णः—

धीमन् गावल्गणे! मद्वचनमिदमपि श्रावयान्धं नृपं तं
मन्तूयद्भिः पृथासूनुषु यदपकृतं ते तनूजैरकस्मात्।
काकोलाग्निप्रदानादिभिरपि शकुनेस्तादृशैश्छद्मवृत्तै-
स्तत् सर्वं वासुदेवे मयि नियतमपाकारि नो पाण्डवेषु॥३७॥

एतत् तन्मम नापयाति हृदयादद्यापि मध्येसभं
कृष्टा केशभरे विकृष्टवसना दुश्शासनेनाकुला।
हा कृष्णेति विदूरवासिनमहो कृष्णा भृशं प्रारुदद्
यन्मां सञ्जय! किं जितेष्वपि कुरुष्वेतस्य शान्तिर्भवेत्॥३८॥

राज्ञानुज्ञा वितीर्णा समजनि मुदितो मारुतिः सानुजन्मा
क्रुद्धो गाण्डीवधन्वा वयमपि सुहृदो ब्रूहि तत् प्राप्य सर्वान्।
पुत्रैर्दारैश्च मित्रैर्विहरत मुदितैरन्नपानैश्च तृप्ताः
प्रीत्या पात्रेषु चार्थान् विसृजत कुरुत स्वानि कार्याणि चार्याः!॥

श्रुत्वैवं तर्हि यास्याम्यहमिति चलितं सञ्जयं प्राह राजा
प्रेमाब्धे! तत्र सर्वान् वद कुशलमयं पाण्डवः पृच्छतीति।
अन्ते च ब्रूहि दुर्योधनमनयनिधिं निर्दयं मुञ्च मास्मान्
ग्रामाणां पञ्चकं वा प्रदिश वितनुमो जीवितं तावतापि॥४०॥

व्यक्तार्थं च सुदुःश्रवं मधुरमप्युद्वेगदं तद्वचो
गत्वा नागपुरं व्यजिज्ञपदसौ राज्ञेऽञ्जसा सञ्जयः।
प्रज्ञाचक्षुरपि क्षयं निजतनूजानां विचिन्त्याकुलो
निर्निद्रो विदुरेण नीतिविदुषा चाश्वासितोऽभून्मिथः॥४१॥

पार्थानां समरोद्योगं श्रुत्वा सञ्जयतस्तदा।
दातुं राज्यमयाचन्त कुलवृद्धाः सुयोधनम्॥४२॥

सर्वेषामात्मबन्धूनां निरस्य वचनं हितम्।
उदयुङ्क्त रणायैव राज्यलुब्धः सुयोधनः॥४३॥

यावद् दौत्यनियुक्तसञ्जयमुखेनावेदितं वञ्चकः
पञ्चग्रामटिकाप्रदानमपि ही! दुर्योधनो नाशृणोत्।
तावत् पाण्डुसुताः समेत्य पुनरप्येकान्तबन्धुं हरिं
प्रोचुर्दौत्यविधिं चिकारयिषवः सन्धानबद्धाशयाः॥४४॥

धर्मपुत्रः–

युद्धं तैरुचितं तदेव रुचितं चित्ते तथापि प्रभो!
यावद्बाधमबाधनाय सुहृदां कार्यः शमाय श्रमः।
तत् कञ्जायतनेत्र! सञ्जयमुखेनादिष्टमेवाखिलं
त्वं दौत्येन समेत्य वर्णय पुनः सर्वान् कुरून् मे गुरून्॥४५॥

कृष्णः–

स्थाने धर्मतनूज! ते मतिरियं सन्धानमेतत् पुन-
र्दुःसाधं मम भाति सम्भृतरणोद्योगेऽद्य दुर्योधने।
यास्याम्यद्य वदामि संसदि रिपोर्दोषानदोषांश्च ते
लोकास्तान् प्रविदन्तु नान्यदमुना दौत्येन मन्ये फलम्॥४६॥

भीमः–

मैवं केशव तत्र रूक्षवचसा रोष्यस्त्वया कौरवः
सान्त्वैः शान्तिमुपेत्य यच्छतु स नस्तुच्छां महीमिच्छया।
येन स्वं कुलमप्रणाश्य नृपतीन् नोन्मथ्य वामभ्रुवा-
मश्रूण्यप्यनिपात्य भृत्यसमया वृत्त्यापि वर्तामहे॥४७॥

कृष्णः–

ही ही! हासवशात् सरन्ति न गिरो धिग्! भीम ते भाषितं
भोः! किं किं न करोषि रोषदहनज्वालाकुलस्त्वं पुरा।
अद्योरुः किमु वेपते विमृशतो दौर्योधनीं तां गदां
किं दुःशासनशोणितासवरसे जातं तवारोचकम्॥४८॥

एतन्निशम्य करुणामृदुतां क्षणोत्थां
दूरं क्षिपन् झटिति मारुतभूरुदस्थात्।
कल्पान्तरुद्र इव विष्टपमट्टाहासै-
र्भिन्दन् जगर्ज च ससर्ज च वाचमेवम्॥४९॥

भीमः—

को भीरुङ्कारमाक्रोशति भुवनजुषां भीतिदं भीमसेनं
भोः सम्प्रत्येष हस्तभ्रमितगुरुगदाघट्टनैर्धार्तराष्ट्रान्।
पिष्ट्वाहं दुष्टदुःशासनरुधिरजलैः क्रोधवह्निं विनेष्ये
सन्धातुं याहि दामोदर! सरणिमसृक्सिन्धवो रुन्धतां ते॥५०॥

प्रवृद्धं यद् वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्या हेतुर्न च खलु किरीटी न च यमौ।
जरासन्धस्योरःस्थलमिव विरुढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत॥५१॥

युष्मच्छासनलङ्घनांहसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव॥५२॥

इति वदन्तमन्तरमान्तं रोषमिवोद्वमन्तमन्तरान्तरा भवनाभ्यन्तरनिहितां महितामहितावमर्दिनीं गदामादित्समानं बीभत्सुपूर्वजं श्रीवत्सलाञ्छनस्तावत् सहासमवादीत् —

अयथापुरभावमार्य ते परिमार्ष्टु परमेतदीरितम्।
अभिशाम्यतु सौम्य! ते मतिः समरं प्राप्स्यसि
पञ्चषैर्दिनैः ॥५३॥

अर्जुनः—

मन्ये गोविन्द! सन्धौ विमुख इव भवान् येन दुःसाधमेनं
ब्रूते सम्यक् प्रयत्नैर्न खलु नयविदां दुष्करं नाम लोके।

त्वं तु त्रैलोक्यकर्ता भवति हि भवतः काममात्रेण सर्वं
तत् सन्धौ साधु यत्नं कुरु करुणमतिर्याचते ते वयस्यः॥५४॥

कृष्णः–

साधिष्ठोऽपि प्रयत्नो विधिशरणफलो गीष्पतेरप्यवश्यं
यत्नैकव्यापृतानां त्विह फलविलये शोकमात्रं विशेषः।
यत्नः श्रेयान् मतश्चेद् वद सगरसुतैः केन नाप्तस्तुरङ्गो
यूयं वा केन बुद्ध्वा मुहुरपि पतिताः कैतवद्यूतपङ्के॥५५॥

जिष्णो! जानीहि यत्नान्मम तु न भुवने दुष्करं नाम किञ्चित्
कार्ये त्वस्मिन् करिष्ये ध्रुवमहमधुना मानुषं यत्नमेव।
नो चेन्निःशेषदोषात्मनि कुरुवृषभे यत्नतो रक्ष्यमाणे
नश्येत् सर्वेयमुर्वी कथमिह भविता कारणं वासुदेवः॥५६॥

संवत्सरं परिचिता तव षण्डता सा
यातापि गोग्रहविधौ पुनरागता किम्।
शोचामि गाण्डिवमहं शरधी च दिव्ये
वैकर्तनो जयति शस्त्रभृतां वरिष्ठः॥५७॥

नकुलः–

श्रुतमखिलपते! ते सोदराणां च वाक्यं
पुनरपि हृदयस्थं किं मया गूहनीयम्।
स्वजनवधविरागः सन्धिरागश्च भूया-
न्मम हृदि कलय त्वं चारुतां भीरुतां वा॥५८॥

सहदेवः–

नाहं हरे! क्षणमपि स्पृहयामि सन्धिं
कौरव्यवाक्शरसहस्त्रविभिन्नमर्मा।
लोकानुवृत्तिविधये गुरुभक्तये वा
दौत्यं विधेहि भगवन्! न तु सन्दधीथाः॥५९॥

कृष्णः–

सहदेव! त्वमेवेह प्रथमः पाण्डुसूनुषु।
अयि वीर! चिरं जीव भविता ते रणोत्सवः॥६०॥

अथ तदानीं मानिनीजनमौलिरत्नभूता धृष्टद्युम्नसोदरी पञ्चपाण्डवैकप्रियतमा पाञ्चालराजप्रियतनया चिरतरसमधिगतदुःसहपरिभवनिःसहहृदया मुहुर्मुहुर्निरङ्कुरितदुःशासनवक्षोविक्षोभणावलोकनौत्सुक्यादिव दिवसस्य शतकृत्वः समयावसानदिवसपरिगणनया कथं कथमपि समापितत्रयोदशसंवत्सरा, तत्समाप्तिसमयसम्पाद्यमानसंप्रहारोद्यमसैन्यसम्भारसम्पत्तिसम्प्रीतचेताः, तदन्तरे पुनः सन्धित्सापिशाचिकावेशविवशीभावविश्लथप्रकृतीनां विश्ववीराणामपि निजवल्लभानामविज्ञातनिजपरिभवामवज्ञातस्वप्रतिज्ञामधरीकृतशौर्याटोपां विधुरीकृतवैरबन्धामतिमसृणां तादृशीं गिरं नातिदूरनिषण्णा संश्रृण्वती–

अगणितबहुवैरं कौरवैः सन्धिकामं
जिगमिषुमथ कृष्णा कृष्णमालोक्य खिन्ना।
विगलितधृतिसारं प्राप्य पार्श्वं पतीनां
न्यगददुदितरोषावेशलोलां च वाणीम्॥६१॥

द्रौपदी–

राज्ञो यत् सहजान्वितस्य रुचितं चित्ते च यत् ते मतं
मित्राणामपि सम्मतं तदुचितं सन्धानमेवाधुना।
वेणीयं करुणानिधे! कुरुसभामध्ये निबद्धा चिरं
स्मर्तव्या गुणकीर्तनेषु सुहृदामेतावदेवार्थये॥६२॥

इति वदन्तीं निरन्तरोद्वान्तबाष्पाम्बुसन्तानखिन्दानवदनारविन्दां द्रुपदनन्दनामानन्दयन् गोविन्दो मन्दमवादीत्–

भद्रे पाञ्चालि! वाञ्छा तव खलु नियतं भाविनी किन्तु सन्धौ
सोऽहं यत्नं सपत्नैः कुरुसुतकुनयख्यापनायैव कुर्वे।

वेणीयं गर्भिणी ते सुतनु कतिपयैर्वासरैर्या सवित्री
वेणीबन्धाननन्तान् दिशि दिशि विमतक्ष्माभृदन्तःपुरेषु॥६३॥

मुग्धे पार्षति! वक्त्रपङ्कजमिदं वाष्पाम्बुधाराहिमै-
र्मा मा कर्शय तन्वि! नन्वयमहं दामोदरस्ते पुरः।
यत्सत्यं शृणु पञ्चषैरयि दिनैर्द्रष्टासि दुष्टान् कुरून्
भूपृष्ठे पतितान् प्रियान् पुनरमून् तीर्णप्रतिज्ञाभरान्॥६४॥

इत्थं सत्राशनशात्रवसपत्नाकरणसत्राय दीक्षितः क्षितिभारक्षपणशान्ति-कर्ममान्त्रिकवरो मधुरिपुः अधरितसुधावेण्या वाण्या नन्दितपाण्डुनन्दनो दारुकोपस्थापितं रथवरमधिष्ठाय सशैनेयैर्गणेयैः सेनाभटैः सनाथीकृताग्रभागो नागपुरं गन्तुमुदयुङ्क्त।

प्रस्थितं च तमुपास्थिषत निस्तुषप्रशस्तिशालिनः समस्तलोकदुष्कृतत-मस्तोमविशस्तिगभस्तिमालिनस्तपस्विनः सनकादयः।

हृषीकेशोऽपि तानृषीनच्युतपदमिच्छून् कच्चरेतरचित्तान् उचितैरुप-चारैरर्चयित्वा श्वः प्रभातसभये कुरुराजधान्यां सुयोधनसभायां सान्निधातव्यं भवद्भिरित्याभाष्य विसृज्य च सत्यकापत्येन सत्रा चित्राः कथाः कुर्वाण उर्वीभारभूतोर्वरावरदुर्वारगर्वनिर्वापकदोर्वीर्यसर्वोत्तीर्णसुत्रामसुतसमासन्नसूत-भावमहोत्सवम् आत्मनानुभोक्ष्यमाणमुत्प्रेक्ष्यान्तरान्तरा सन्तुष्यन् आवसथेषु च वसुधासुधाशनानामातिथ्यानुपदमाशीर्वादानाददानः, अच्छिन्नाम्भःसन्तानाः स्रवन्तीः सन्तरन्, उत्तुङ्गान्यद्रिशृङ्गाण्यारोहन्, पङ्कजरजःपङ्किलपङ्कजिनीपयः पवमानपोतापनीताध्वश्रमः समुदित्वरमहत्तरमहोज्ज्वलकायकान्तिकन्दली कलिन्दापत्याम्भःसंभिन्ननर्महाससुरःस्रवन्तीजलप्रवाहावगहनापास्तसमस्तलोकांहस्ततिः कौस्तुभलक्ष्मा हस्तिनपुरोपकण्ठमहास्त, गभस्तिराडप्यस्तगिरिशि-रस्तटीम्। एवमाश्नुवत निःशेषविश्वंभरां विहाय शनैःशनैः काश्मीररोचिषो रश्मयो हरिदश्वाः शिलोच्चयशिखराणि।

एवं समायाते सायाह्ने स कंसघाती घूर्णमानघुमुघु-मितनिध्वानबधिरीकृतप्रपञ्चं पाञ्चजन्यमापूरयासास।

अनन्तरमम्बुजाक्षकम्बुराजजन्मना अनन्तान्तरालनिरन्तरीभूतेन तेनैव ध्वनितेन बोधितमाधवागमनमुदिता नितरामुदघूर्णत कुरुराजधानी।

ततश्चापास्य कुरुकुलोत्पातकेतुं नागकेतुं पुरस्कृत्य कृत्स्नागमनिष्णातमतिं विष्णुपदीसूनुं, कौरवपरित्राणोन्निद्राणं द्रोणं, दामोदर-दर्शनसादरं विदुरं, दुर्वारबाहुस्थेमानमश्वत्थामानं, धन्यानन्य सत्वराः कौरवाः सर्वतः सन्ताडितभेरीरवापूरितरोदोविवरा महत्या वाहिन्या सार्धं प्रीत्युत्फुल्लदृशः प्रत्युज्जग्मुर्जगन्नाथं भक्तिप्रपन्नाः प्रणामादिभिश्चोपाचरन्।

दाशार्होऽपि तान् यथार्हमर्हयामास। तदनु तस्मात् प्रदेशान्मन्दहाससुन्दरनिजवदनारविन्दसन्दर्शनकन्दलितानन्दातिरेकमन्दीभूतगतिभिरमीभिः परीतः कौरवपुरीं पुरुषोत्तमः प्राविशत्। प्रविश्य च क्षत्तृदत्तहस्तो रथादवतीर्य रथ्यावीथीमध्यतिष्ठत्।

दिदृक्षवे पौरवधूजनाय
मुरारिमाख्यातुमिवापतन्तम्।
पुरे पटीयान् प्रतिसौधगर्भं
बभ्राम मङ्गल्यमृदङ्गघोषः॥६५॥

त्यक्त्वा तदा मण्डनमर्धक्लृप्तं
क्रीडासु चान्यासु कृतानपेक्षाः।
अभ्रेषु विद्युल्लतिका इवाशु
नार्यः पदं हर्म्यतलेषु चक्रुः॥६६॥

नलिननयनोऽपि तासां कलिन्दनन्दिनीकल्लोलतुल्यकुल्या-भिर्विलोचनकुवलयमालाभिः संच्छन्नमूर्तिः समतीत्य कक्ष्यासप्तकं सम्भृतमङ्गलोपहारैर्निकुरुम्बमम्बिकासूनोः सद्म पद्मापतिः प्रपेदे।

दृष्ट्वा भीष्माम्बिकेयप्रमुखकुलगुरून् धार्तराष्ट्रस्य गेहं
यातो देवोऽथ तेन च्छलनिपुणधिया भोक्तुमामन्त्र्यमाणः।
अन्नं संप्रीतिभोज्यं न च खलु मयि संप्रीयसे कौरवेति
क्षत्तुर्गेहं जगाहे हरिरतिकुतुकी भक्तभक्ते रसार्द्रे॥६७॥

प्रविश्य विश्वार्तिहरः स देवो
दृष्ट्वा पृथां पुत्रवियोगखिन्नाम्।
आश्वासयद् द्रक्ष्यसि निर्जितारी-
नल्पैरहोभिस्तनयांस्तवेति॥६८॥

कृताह्निकस्तत्र कृतार्थभाव-
मासेदुषस्तल्पसमीपभाजः।
रणैषिणां पाण्डुभुवामुदन्तं
क्षत्तुर्वदन्नेव निशामनैषीत्॥६९॥

क्लृप्तप्रत्यूषकृत्यस्तदनु कुरुपतिः सेवितः सौबलाद्यै-
रास्थानीमात्तभूषो नृपवृषभवृतां प्राप्य देदीप्यमानः।
नत्वा गाङ्गेयमुख्यान् निजपितृवचसा तुङ्गमङ्गाधिराज-
स्कन्धासङ्गी स भद्रासनमलमकरोदाददे चाथ वाचम्॥७०॥

दुर्योधनः—

हे भूपाः! शृणुतादरादुपगतो दूतः पृथाजन्मनां
मायामोहितमूढलोककलितप्रौढिः स गोपालकः।
प्रत्युत्थास्यति योऽस्य दास्यति स मे दण्ड्यः सुवर्णं मितं
भारद्वादशकेन शासननिराकर्ता जगत्यामिति॥७१॥

बालातपप्रेक्ष्यतराम्बरोऽय-
मानन्दिताशेषविलोचनाब्जः।
प्राचीमिव प्रातरिनो मुरारि-
र्वैचित्रवीर्यस्य सभां विवेश॥७२॥

आलोक्यैनं प्रतिहतदृशस्तेजसा भूमिपाला-
श्चेलुः स्थानादगणितनृपोदीर्णदण्डाः समन्तात्।
सावष्टम्भः स च कुरुपतिर्मूढधीः पीठदेशाद्
विभ्रष्टोऽभून्मिषति परितः क्ष्मापलक्षे विलक्षः॥७३॥

स सर्वतोभद्रमिति प्रसिद्ध-
मातस्थिवानासनमम्बुजाक्षः।
निष्पन्दसभ्येक्षणलक्ष्यमूर्तिः
प्रज्ञादृशं भूमिपतिं बभाषे॥७४॥

कृष्णः—

राजन् कौरववंशकौरवसुधासूते! पृथासूनुभि-
र्दूतोऽहं प्रहितो हिताय सुहृदां सन्धित्सुभिः साम्प्रतम्।
मा भूत् त्वन्मतिरन्यथा तदपथोद्युक्तान् निरुद्ध्याधुना
पुत्रांस्ते स्वपुरे पुरेव कुरु तान् पाण्डोः सुतानादृतान्॥७५॥

विज्ञापयन्ति च भवन्तमनन्तखेद-
प्रोद्वान्तबाष्पभृगशगद्गदरुद्धकण्ठाः।
दूरावनम्रशिरसश्चिरसोढपीडा-
भारासहा इव नराधिप! मन्मुखेन॥७६॥

बाल्ये येन विवर्धिताः कृतधिया पुष्टा स्वपोषं वयं
वात्सल्यादथ तासु तासु विनयं विद्यासु च ग्राहिताः।
वाचा तस्य तवानुभूतविपिनक्लेशश्चिरादागता
भूयस्त्वत्कृपया लभेमहि महीमात्मांशभूतामिति॥७७॥

तत् संप्रति स्वीकुरु तान् प्रवीरां-
स्तवोज्जलस्य स्थितये कुलस्य।
त्वदर्थमेते च नृपाः समेता
निवृत्तकृच्छ्राः प्रतियान्तु देशान्॥७८॥

वीरैरूरीकृतैस्तैरुरुभुजविभवैर्मात्स्यपाञ्चालमित्रैः
पुत्रैरेभिश्च भीष्माद्यतिरथमथितारातिभिर्वीतवैरैः।
नित्यं त्वत्तोऽभिगुप्तात् त्रसति सुरपतिः सोऽपि भेदे तु राजन्!
नष्टेष्विष्टेषु शिष्टेष्वपि च कतिषुचित् को नु लाभो भवेत् ते॥

धृतराष्ट्रः–

नृपस्तमाभाषत किं नु कुर्या-
मयं सुतो मे न वचः शृणोति।
सान्त्वेन दाशार्ह! निवर्तयैनं
कदध्वनः सौहृदनिघ्नचेताः॥८०॥

उक्तः स तेनैवमथासुरारि-
र्विवृत्तवक्षोवलमानहारः।
एकासनाध्यासिनि भानुसूना-
वुपाश्रितं कौरवमाबभाषे॥८१॥

कृष्णः–

जातस्त्वं विमले कुले शशभृतस्त्वामाश्रिता श्रीस्त्वया
कर्णाद्यैः करदीकृताः क्षितिभृतः कुप्यन्ति तुभ्यं तु ये।
त्वत्तो लब्धसमीहिता हि सुहृदाः पृथ्वी तवास्ते वशे
त्वय्येवं गुणभाजनेऽप्यपनयो लब्धास्पदोऽयं कथम्॥८२॥

दुर्द्यूतदेवनगुरुस्तव मातुलोऽयं
कर्णस्तु दुर्नयमहार्णवकर्णधारः।
तस्मादयुक्तमनयोरनुवर्तनं ते
पथ्यं न यो वदति भर्तुरसौ हि शत्रुः॥८३॥

सार्धं दुरन्तैः सचिवोपदेशैर्लोभं विसृज्योभयलोकशत्रुम्।
सङ्गम्य पार्थैः सह सौहृदेन हतद्विषं भुङ्क्ष्व महीमशेषाम्॥८४॥

ग्रामाणामपि पञ्चकं दिशसि चेदेतावतैवात्मनो
वृत्तिं क्वापि विधित्सवः शमपरा वाञ्छन्ति सन्धाममौ।
दत्त्वा पित्र्यमुपार्जितं तदधुना राज्यार्धमेभ्यो भवा-
नास्तामत्र सुखी भवेदिह न चेन्निष्कौरवं क्ष्मातलम्॥८५॥

तावत् सुतं व्याहरदाम्बिकेयः
प्रसीद बद्धोऽयमिहाञ्जलिस्ते।
मन्युज्वरस्यौषधमार्तबन्धोः
शौरेर्वचः पथ्यमिदं पिबेति॥८६॥

तमूचतुः शान्तनवो गुरुश्च क्षेमाय सन्धत्स्व युधिष्ठिरेण।
चापेषु मात्स्यप्रमुखा रणाग्रे न सायकान् सन्दधतां नरेन्द्राः॥८७॥

चिराय योगं कुरुपाण्डवानां
निरीक्ष्य राजन्यगणः समेतः।
प्रमोदजं मुञ्चतु वारि नेत्रै-
र्न शोणितं पार्थशरक्षताङ्गैः॥८८॥

वचांसि लोकः प्रणयोचितानि
शृणोतु तेषां भवतां च हृष्टः।
निर्घातकल्पान् कुपितस्य सङ्ख्ये
समीरपुत्रस्य न सिंहनादान्॥८९॥

राधासुते हसति कल्पितहस्तताले
दुःशासने च दृशि सूचितसन्धिदोषे।
आलोक्य मातुलमुखं प्रहसन् कुरूणा-
मीशोऽपि केशवमुवाच वचो नृशंसम्॥९०॥

दुर्योधनः—

आबाल्याद् ये विरोधं व्यदधत विविधं साधुवृत्तेष्वकस्मा-
दप्यस्मादात्तवैराः सदसि विनिकृता देवने ते सुदीनाः।
नीता मे नीतियोगादहह! वनभुवं भीममुख्यास्त्वदीयाः
प्रायो वृत्तं तदेतत् त्रिभुवनविदितं दूत! जानासि नो वा॥९१॥

वृद्धो लब्ध्वा विराटद्रुपदकुनृपती साम्प्रतं साह्यकृत्ये
मह्यं द्रुह्यन्ति यत्ते किमिह वहुविधं ब्रूमहे हास्यमेत्।

गच्छ त्वं ब्रूहि पार्थान् मयि धरणिरियं सुस्थिता तत् प्रदास्ये
युष्मभ्यं पुण्यलभ्यं रणभुवि निशितैः सायकैर्नाकलोकम्॥९२॥

श्रीकृष्णः–

श्रीमन्नेष भवन्मनोरथतरुः कर्णादिदुर्मन्त्रितै-
रुन्मीलत्कुसुमश्रितः शकुनिना कालेऽफलिष्यत् स्वयम्।
तद् गङ्गाधरमूर्ध्नि मग्नमुदमज्जिष्यन्न चेदर्जुन-
स्योच्चण्डाहितषण्डखण्डनकलापाण्डित्यभृद् गाण्डिवम्॥९३॥

दुर्योधनः–

द्वौ बाहू चरणौ च यस्य नरवत् तुल्यं मुखाक्ष्यादिकं
नद्धं सप्तभिरेव धातुभिरहो गात्रं सगोत्रं जनैः।
यद्यप्येवमथापि केन सदसि प्रस्तौषि पार्थं मुधा
राधेयस्य पुरः करिष्यति स किं क्रोधाज्ज्वलन्नर्जुनः॥९४॥

कृष्णः–

पाञ्चालीवरणोत्सवे रणविधूताखण्डले खाण्डवे
चण्डीशे कृहनाकिरातवपुषि त्वद्घोषयात्रान्तरे।
उग्रे गोग्रहसङ्गरे च विदितस्थेमा स भीमानुजो
नूनं न श्रुतिगोचरोऽद्य भवतो येनेदृशं भाषसे॥९५॥

युक्तं यत्तु युधिष्ठिरे विनिकृते कृष्णावमाने च यद्
यच्चारण्यनिवासने यदपि खल्वज्ञातवासश्रमे।
यच्चास्त्रेषु समार्जितेष्वविकलं यच्च प्रसन्ने हरे
क्रुद्धे यच्च धनञ्जये यदधुना कर्मैष निर्मास्यति॥९६॥

दुर्योधनः–

वाचोयुक्त्यैव राज्यं नहि तव सुहृदां पैतृकं स्याद्यदेते
कुण्डाः पाण्डौ विमोहाद्विहितमुनिवधे षण्डभावं प्रपन्ने।

जाता धर्मानिलाखण्डलसुरभिषजामात्मजास्तुल्यदार-
स्वीकारोद्यत्कलङ्का विपिनभुवभमी यान्तु शान्तावलेपाः॥९७॥

कृष्णः—

स्वर्यातेऽथ विचित्रवीर्यनृपतौ व्यासोऽम्बिकायाममुं
नूनं ते जनयाम्बभूव जनकं जातोऽसि तद् गोलकात्।
राज्यार्हः स कथं तथापि बहुधा किं कत्थसे त्वं मुधा
वक्तुं तत्र समर्थमुत्तरमलं भैमी गदा केवलम्॥९८॥

दुर्योधनः—

वक्तव्यं भृत्यवर्गैर्ननु नियतमिदं भर्तृवाक्यं यथोक्तं
दृप्तोऽसौ बह्वबद्धं भयमुपजनयन् भाषते यत् स्वयं माम्।
प्रत्यक्षं क्ष्मापतीनां यदयमुपगतो वध्यतां बध्यतां वा
शक्ताश्चेदेत्य पार्था निजकुनयपथादेशिकं मोचयन्तु॥९९॥

इत्युक्त्वैव सभान्तराद्विचलिते दुःशासनाद्यैः समं
बन्धुं बन्धहरं हरिं त्रिजगतां दुर्योधने व्यापृते।
बुद्ध्वा वृत्तमिदं सभां सरभसं प्राप्तोऽवदत् सात्यकि-
र्हीं ही साधु चिकीर्षिताद्य कुरुभिर्वर्या सपर्या हरेः॥१००॥

सात्यकिः—

निरुद्यमाः पाण्डुसुता मुरारौ
बद्धे भवन्तीति विचार्य मूढः।
त्रिभिः सहान्यैर्धृतराष्ट्रसूनु-
र्बन्धुं सतामिच्छति बन्धुमेनम्॥१०१॥

तेनोत्तुङ्गशिखाकलापकपिलश्चेलाञ्चलेनानलो
बद्ध्येताथ सदागतेरगतिता दीयेत पाशैर्दृढैः।
किञ्चासङ्ख्यतिमिङ्गिलो जलनिधिर्लङ्घ्येत दोष्णा सुखं
कृष्णोऽयं गततृष्णयोगिनिवहध्येयो निबद्ध्येत चेत्॥१०२॥

अत्राहमेकः कुरुराजपुत्रा-
नद्यैव बाहुद्रविणावलिप्तान्।
अन्यांश्च हन्यां युधि वीरवर्यान्
वृथा भवेत् पाण्डुसुतप्रतिज्ञा॥१०३॥

नृपो वचस्तस्य निशम्य भीतः
क्षत्रा समानाय्य जगाद पुत्रम्।
त्वया न बद्ध्येत बलेर्निहन्ता
त्वमेव बद्धोऽसि कृतान्तपाशैः॥१०४॥
गतेऽथ तस्मिन्नवमत्य तातं
त्रस्तान् समस्तानवदन्मुरारिः।
अयं कुरुणामधिभूर्यदं स्याद्
भवेदशेषेयमकौरवा भूः॥१०५॥

अन्यैस्त्रिभिः सार्धमिमं निगृह्य
निधीयतां राज्यमजातशत्रौ।
पुरावमन्ता पितरं स्वमेव
न मातुलः किं न हतो मयासीत्॥१०६॥

द्राङ् निग्रहादस्य दुरीहितस्य
वंशः ॰सुधांशोर्भवितानपायः।
निर्वासनात् कालियपन्नगस्य
कलिन्दजाया इव पूर्वमोघः॥१०७॥

बहिः स संमन्त्र्य बलावलिप्तै-
स्त्रिभिः सहायैर्धृतराष्ट्रसुनुः।
गन्धर्वराजेन कृतां दशां स्वां
गदाग्रजन्मानमियेष नेतुम्॥१०८॥

तदनु सन्नाहितमहीपतिवीरपार्ष्णिग्राहाः कर्णदुःशासनशकुनिहतकाः पुरा किल वाल्यचापल्ये गोपाल्या निबद्धोऽसौ भीमयमलार्जुन-भङ्गहेतुः सज्जात

इति पुनरपि तथाकर्तुकामा इव नतबन्धहारिणं बलिबन्धकारिणममुं भुवनैकबन्धुं निजामपनयैरेव केवलमबन्धूकृतं बन्धुमिच्छन्तो भृशं खला विशृङ्खला अपि करतलसज्जीकृतरज्जुशृङ्खलाः सज्जनसदसि लज्जाभयवर्जिता दुष्कृतरसाद् धिक्कृतधृतराष्ट्रविदुरबहुतरनिवारणवाक्या हीहीरवहाहारव-मुखरमुखेषु सकलसामाजिकेषु अर्धोत्थितेष्वासीनेषु च निर्गन्तुकामेषु निरोद्धुकामेषु पार्श्ववर्तिनि दीप्तकोपे सात्यकौ सात्वतर्षभभ्रूविभ्रमनिवारिते सभां विविक्षति धृतायुधवर्मणि कृतवर्मणि शपामि शस्त्रं गृह्णामि वेति सकृपेऽपि विकृपे संभ्रान्ते द्रोणाचार्ये स्पृष्टमात्रे विष्टरश्रवसि दुष्टानमून् पिष्टपेषं पिनष्मीति भीष्मे कृतनिश्चये सभांजनार्हाननवेक्ष्य सभाजनमध्ये समापतितुं प्राक्रमन्त।

ततश्च चिदानन्दमयः स पुराणपुरुषः परिषन्निषण्ण-सकलजननयननवामृतायमानकलायमानहरकलेबरलक्ष्मीः सुमेरुशृङ्गतुङ्गमहा-सनमध्यमध्यासीनो मृगाधिपः सृगालानिव दुराशयानमून् निरादरदृष्ट्या निरीक्षमाणः तमोमयानामेषां निवारणायेव निजवदनेन्दु-कन्दलित- सुन्दरतरदन्तकान्तिसन्ततितमयचन्द्रिकाप्रकाशं पुरतः प्रसारयन् "अयि भोः सुयोधन! किमहं निःसहाय इति त्वं बन्धुमिच्छसी" ति वदन् किमप्युच्चैर्जहास।

**तावद् देवस्य देहाज्झटिति पटुतटित्कोटिवत् ताडिताक्षः**
**संहारोन्निद्ररुद्रस्फुटनिटिलशिखिज्वालजालप्रकाशः।**
**कल्पान्तक्रूरसूरोत्करकिरणसमाहारघोरः समन्ता-**
**दारुन्धानः सभां तां निरपतदतुलः कोऽपि तेजःसमूहः॥१०९॥**

तस्य च सर्वतोविसृमरदावपावकज्वालामालोद्गारिमारतकशैलशैली-मुद्वहतः सकलप्रपञ्चकुक्षिंभरेर्विश्वंभरस्य तत्तदवयवेभ्यः पङ्कजभवशङ्कर-संक्रन्दनादिसुरवृन्ददनुजमनुजभुजङ्गमप्रमुखा निश्शेषविश्ववासिनोऽप्य-हमहमिकया समुत्पेतुः।

तत्र चास्य निटिलदेशाच्चतुःसनकसप्तर्षिनवयोगिशतवैखान-सषष्टिसहस्रवालखिल्याद्यसंख्यमुनिमण्डलपरिमण्डलितः कुण्डिकाक्ष-सूत्रमण्डितभुजदण्डो हिण्डते स्म पुण्डरीकभवः।

तदैव च स्थविष्ठक्रशिष्ठद्राधिष्ठह्रसिष्ठकुब्जादिविकृत- शरीर-भूतप्रेतवेतालपूतनाडाकिनीकूष्माण्डाष्टभैरवप्रमुखप्रचुरप्रमथयूथसहस्र- परि-वेष्टितोऽष्टमूर्तिरपि सप्ताकृतिः संहारकर्तापि रक्षां धारयन् कठोरकुठारशूलशाली महादेवस्तस्य हृदयादुदयाञ्चकार।

बाहुयुगलादपि वज्रिकरप्रज्वलितवज्रज्वालाजालदीपितं दण्डधरभुज-दण्डकाण्डताण्डवितचण्डतरदण्डस्फुटितस्फुलिङ्गोत्करोत्कीर्णं यादसांपति-सम्पातानुपातिविविधजलचरकुलाकुलं यक्षाधिपानुगतलक्षाधिकय-क्षगुह्यकप्रक्षोभितं गन्धवाहागमनसन्तायमानसुगन्धप्रबन्धान्धीकृतदिगन्तरं षट्षष्टिकोटिसंख्यसुराङ्गनानुनिस्सृतनिःसीमगन्धर्वकिन्नरविद्याधरौघविद्योतितं त्रयस्त्रिंशत्कोटिप्रधानं निर्जरकुलं निर्जगाम। मनसोऽपि घनसार-जम्बालसम्बाधशीतलमिव भुवनान्तरालमारचयन्नशेषतारकाराजिराजितो रराज तारकाराजः।

तदनुपदं च प्रतिक्षणभक्षितनरमांसप्रक्षरितक्षतजरसोक्षितरूक्ष-तराकृतिराक्षसगणोत्क्षुभितपार्श्वाः शेश्वीयमानाभिमाना दानवदैतैयभटा लक्षकोटिशो लक्ष्यन्ते स्म।

तत्क्षणं च चक्षुरुत्क्षरितक्ष्वेलानलोष्मभीष्मतरभोगमण्डलोद्गीर्णशूत्कार-मयोल्काभिघातोत्क्लेशितलोकं सवासुकि सशेषमप्यशेषमुत्ससर्प दर्पोद्धतं सर्पकुलम्। अर्चिषश्च तस्य विश्वतोमुखादुत्तस्थुः सप्तिरथहस्तिपीततत्त-दायुधसहस्त्राभिव्याप्तसप्तार्णवमध्यवर्तिसमस्तधात्रीपतिचक्रसमावृताः साम्ब-प्रद्युम्नगदसारणानिरुद्धानुरुद्धाः सर्व एव वृष्णिवीरभटाः दक्षिणवाहोः अक्षतवीर्य 'स्तिष्ठतिष्ठे' ति निष्ठुरवादी कृष्टगाण्डीवः पाण्डववीरः प्रोदतिष्ठत्। चलितहलमुखनिर्भिण्णमिव भ्रमितमुसलविक्षुण्णमिव विश्वं करिष्यन् भीमकोपो वामबाहोः कामपालो व्यालोक्यत। पृष्ठतश्चोदतिष्ठन् युधिष्ठिरादयश्चत्वारः। बाहवश्च तस्य उदग्रतरोद्घूर्णचक्रशङ्ख-गदाशार्ङ्गनन्दकादिविविधायुधज्वालामालालेलिह्यमानदिक्तटा अनेकशः प्रादुरासन्। सुपर्णश्च सुवर्णवर्णस्वपर्णघूर्णनोदीर्णसामघोषघोषिताकाश आकाशे

काशाञ्चक्रे। तं च सकलजगदात्मानं परमात्मानं पाद्मशर्वादयः सर्वेऽपि देहिनो भक्तिभारावनम्राः शक्त्यनुसारेण तत्र तत्र सिषेविरे।

ततश्च निबद्धाञ्जलिमुनिस्तोमप्रस्तुतविचित्रतरस्तोत्रनिनादैः सुरतरुणी-जनचरणासज्जितमणिमञ्जीरमञ्जुशिञ्जतानुबन्धिगन्धर्वकिन्नरवीणावेणुगीतताल-प्रणादैः वृन्दारकवृन्दाहतदुन्दुभिसम्भूतगम्भीरध्वनिभिश्तुर्मुखचतुर्मुखी समुन्मिषितब्रह्मघोषैरानन्दताण्डवोद्दण्डखण्डवरशुकरहिण्डितडिण्डिमचण्ड-रवमिलितितण्डुमृदङ्गचण्डिकागानध्वानैः रुद्रानुचरभूतप्रेतवेताल-पालिकाहर्षवल्गनोद्गतकहकहिकानुमलिताष्टभैरवाट्टहासैः भगवत्कराञ्चित पाञ्चजन्यस्वयमुदीर्णधीरनिनादैरपि न केवलं तत्पुरं जनपदो वा भुवनमपि सर्वं संघोषमयमासीत्।

तत्तेजोनष्टदृष्टिप्रसरमत इतः कर्णदुर्योधनाद्या
भूषाः प्रागेव पेतुः स च विदुरकृपद्रोणभीष्मादिलोकः।
मूर्धन्याबद्धहस्तः सुबहु जय जयेत्युच्चकैरुच्चरंस्तं
दृष्ट्वा दृष्ट्वा चिराय स्वरसपरचिदानन्दसिन्धौ न्यमाङ्क्षीत्॥

पुत्रस्नेहाकुलं मामयि! बत भगवन् वस्तुतस्त्वत्प्रपन्नं
जानीहीत्यार्तालापे कुरुपितरि जवाद् दृष्टिरस्योदमीलत्।
सोऽप्यानन्देन पश्यन् परपुरुषममुं निःस्पृहोऽन्यावलोके
प्रज्ञाचक्षुष्ट्वमेव प्रकृतिजमवृणोद् धन्यजन्मा नृपालः॥१११॥

ओजस्तवेदमुपसंहर माधवेति
घुष्यत्सु सत्सु गुरुभीष्मपुरोगमेषु।
घोरं विहाय निमिषेण कुशेशयाक्षो
गोपीदृशां कुतुकहेतुमवाप रूपम्॥११२॥

दिष्ट्या वीरजनप्रियं परिणतं तावद्रणं दारुणं
निर्यान्तु स्वचमूचयैः सह महीपाला गृहीतायुधाः।

पश्यन्त्वत्र पृथाभुवां प्रमथितप्रत्यर्थिशस्त्रोत्करो-
त्कीर्णानुग्रतरानुभावविभवान् दोर्विक्रमप्रक्रमान्॥११३॥

आस्थानाद् बहिरेत्य कैटभरिपुर्गाङ्गेयमालिङ्ग्य तं
पश्चार्धे परिमृश्य भूपमितरानापृच्छ्य सर्वान् कुरून्।
आघ्रायातिचिरेण मूर्ध्नि विदुरं युक्तं शताङ्गं हयै-
रारूढो हि ययौ विराटनगरीमन्तः स्मरन् पाण्डवान्॥११४॥

इति दूतवाक्यप्रबन्धःसमाप्तः।

# पाञ्चालीस्वयंवरप्रबन्धः

निवसत्सु च तेषु विप्रगेहे
समवापुर्निशि केचिदध्वनीनाः।
सह तैरथ संकथां वितेने
निजवार्तावगमाय धर्मजन्मा॥१॥

हे स्वागतं क्षितिसुराः! कतमं प्रदेशं
धन्यं विधातुमयमद्य समुद्यमो वः।
इत्यादि सादरममुं परिपृष्ठवन्तं
विप्रेषु कोऽपि पुनरित्थमुवाच वाचम्॥२॥

किं नाकर्णि भवद्भिरद्भुतमिदं भूयान् समुज्जृम्भते
पाञ्चालक्षितिपालकस्य नगरे कोऽप्येष कोलाहलः।
हृष्यद्विप्रगणं चलन्नृपकुलं सम्भ्रान्तनानाजनं
येन क्ष्मावलयान्तरं सकलमप्यन्यादृशं वर्तते॥३॥

तत्र च–

विश्वोत्कृष्टा जगति वपुषा वल्गुना फल्गुनार्थं
जज्ञे यज्ञे द्रुपदनृपतेः कन्यका कापि कुण्डात्।
ज्ञाते पश्चाज्जतुभवनतः पाण्डवानामभावे
लक्षच्छेदं स किल मनुते दुष्करं शुल्कमस्याः॥४॥

गच्छन्त्यच्छिन्नमोदं सकलनृपतयस्तत्र वृद्धा युवानो
वाला वा किं बहूक्त्या द्रुपदपुरमनु प्रस्थिता एव सर्वे।

नानाभेदेषु दृश्येष्वथ पुनरशने हेमरत्नादिके वा
कन्याया दर्शने वा यदि कुतुकि मनस्तावदायात यूयम्।।५।।

श्रुत्वा चैवं निभृतहसितेष्वेषु जिष्णौ च किञ्चित्
कृष्णावृत्तश्रवणकुतुकादन्तरुद्यद्विकारे।
धर्मोद्भूतौ स्वचरितगतेरप्रकाशात् प्रसन्ने
के वा यूयं कथयत ममेत्यन्वयुङ्क्त द्विजोऽसौ।।६।।

तं च धर्मसूनुरवादीत्–

धर्मात् ख्याततमे द्विजाधिपकुले जातोऽहमेषा च मे
माता पावनजन्मतामभिवहन् नन्वेष मे सोदरः।
किश्चाखण्डलसत्प्रमोदजनको भ्राता ममायं परो
नासत्योदितमत्र विद्धि सहजद्वन्द्वं ममैतावपि।।७।।

अनन्तरं च–

सञ्जातकुतुकास्तत्र पञ्चापि कुरुनन्दनाः।
पाञ्चालनगरीं गन्तुं संचेलुः पथिकैः समम्।।८।।

उल्कामुत्कलयन् करेण पुरतो वृत्रारिपुत्रो ययौ
पश्चादुच्चतनुः प्रभञ्जनसुतः स्कन्धेन कुन्तीं वहन्।
पश्चात्तस्य यमौ ततश्च नृपतिर्धर्मात्मजन्मा स्वयं
पान्थैः सार्धममी निशीथसमये गङ्गातटं सङ्गताः।।९।।

तदनु ददृशिरे ते किञ्चिदञ्चद्विलासं
कुचकलशनितम्बाघातघूर्णत्तरङ्गम्।
पयसि वरवधूनां मण्डलं तस्य मध्ये
तरुणमपि च कञ्चित् पञ्चबाणोपमानम्।।१०।।

तदनु चायं चित्ररथनामा गन्धर्वराजः–

क इह कुमतयोऽस्मत्स्वैरसञ्चारयोग्यं
समयमगणयित्वा मर्तुमभ्यापतन्ति।

इति स युवतिमध्यादुत्पतन् क्रोधशाली
हरिण इव हरीणां मार्गमेषां रुरोध॥११॥

संभ्रान्ते सकलेऽपि भूसुरगणे क्रोधातिरूक्षेक्षण-
भ्रूभङ्गे च वृकोदरे स्थिरमतौ चिन्तापरे धर्मजे।
आरक्ताञ्चलनेत्रयोश्च यमयोराग्नेयमस्त्रं जवा-
दुल्कायामभिमन्त्र्य दीप्तगगनं चिक्षेप शक्रात्मजः॥१२॥

तदस्त्रजन्माथ धनञ्जयोऽसौ
यदा जवाच्चित्ररथे पपात।
तदाप्यसौ चित्ररथोऽपि युक्तं
धनञ्जयस्यास्य पदे पपात॥१३॥

पराजितं मां परिपालयेति विहस्तधैर्याद् विहितप्रणामात्।
जग्राह तस्माज्जनितप्रमोदादस्त्राणि दिव्यान्यमरेन्द्रसूनुः॥१४॥

तीर्त्वाथ सिद्धतटिनीं धरणीसुरेण
धौम्येन सौम्यचरितेन वने समेतः।
कुन्तीं कुलालभवने कुहचिन्निधाय
पाञ्चालराजनगरीसविधं समीयुः॥१५॥

संमृष्टोत्फुल्लपुष्पावलिखचितमहाचत्वरां सत्वराणां
गच्छन्तीनां वधूनां मुखरितककुभं मञ्जुमञ्जीरनादैः।
स्फायद्भेरीनिनादां विविशुरथ पुरीं तामुदञ्चत्पताका-
पूरामारब्धनानानटवरपटलीताण्डवां पाण्डवेयाः॥१६॥

भेरीमद्दलकाहलादिनिनदः क्वापि, क्वचिद् योषितां
गीतं, क्वापि च सौविदल्लरभसप्रोत्सारणानिस्वनः।
विप्राणां क्वचिदश्नतां कलकलो, गम्भीरकुम्भीश्वर-
प्रध्वानः क्वचिदुत्सवोदयमहाघोषः कथं कथ्यते॥१७॥

किं ब्रूमस्तत्र चित्रं मरतकरचितैः शुम्भितः स्तम्भदण्डै-
लोंलत्प्रालम्बिमुक्तामणिविततिवितानोज्ज्वलः प्राज्यदीपः।
रेजे राजेन्द्रपुत्र्या नवनवसुमनोमाल्यसौरभ्यलुभ्यद्-
भृङ्गीसङ्गीतरम्यः कृतविविधमहामङ्गलो रङ्गदेशः॥१८॥

तत्पर्यन्ते च नानानृपतिसमुचिताः क्षौमक्लृप्तैर्वितानै-
स्ताम्बूलालेपमाल्यादिभिरपि सुभगैरञ्चिता मञ्चदेशाः।
तन्मध्येष्विन्द्रगोपाद्युपरचितमृदुप्रच्छदाः स्वच्छवर्णा
विभ्राजत्पादपीठा विविधमणिगणैरुज्ज्वला हेमपीठाः॥१९॥

वस्त्वन्तराणि न तथा सुखयाम्बभूवुः
क्षोणीसुरानिह यथा खलु भुक्तिदेशाः।
सस्नेहभक्तनिवहो गुणवान् यदि स्यात्
कुत्रापि तत्र खलु साधुजना रमन्ते॥२०॥

चित्रं तत्र वलारिरत्नवलयप्रस्तारपर्वावली-
रम्या काञ्चनकेतुदण्डपटली व्यभ्राजदभ्रङ्कषा।
क्लृप्तेवोत्सवदर्शनोत्सुकधियां पौरन्दरान्मन्दिरा-
दत्रैवावतितीर्षतां दिविषदां निःश्रेणिकाश्रेणिका॥२१॥

प्रवातपातेन विधूयमाना विरेजिरे व्योमपथे पताकाः।
तस्मादिव स्फीतजनाम्बुराशेस्तिमिङ्गिलाः केऽपि समुत्पतन्तः॥२२॥

हर्म्यास्तत्रातिरम्याः क्वचन शुशुभिरे प्रोद्यदुद्दामविद्युद्-
वल्लीतुल्याभिरुच्चैररुणमणिघृणिश्रेणिभिः शोणिताशाः।
क्रीडन्तीनां वधूनां यदुपरि मुखचन्द्रौघसान्निध्ययोगा-
दिन्दौ सन्देहभाजां समजनि हरिणः केवलं निर्णयाय॥२३॥

प्रारब्धे तदनु स्वयंवरमहे पाञ्चालराजः स्वयं
दूतान् प्रेषयति स्म भूपतिवरानानेतुमाशामुखात्।

एते दूतगिरं निशम्य तरसा सर्वेऽपि चेलुस्तदा
राजानश्चतुरर्णवीवलयितक्षोणीतलस्थायिनः॥२४॥

स्कन्धे केचन गन्धवारणपतेरास्थाय केचिद्रथे
विस्तीर्णे तुरगोत्तमे कतिचिदप्यान्दोलिकायां परे।
मन्वाना द्रुपदात्मजापरिणये स्वस्यैव ते योग्यतां
पाञ्चालस्य पुरं प्रति क्षितिभृतो यात्रां समारेभिरे॥२५॥

नानाभूषाविशेषान् मणिमुकुरगणं चामरं हेमदण्डं
क्षौमं हैमं करण्डोत्करमपि च महारत्नपेटीशतानि।
किं भूयो वर्णयामो निखिलमपि निजं प्राभवं दर्शयन्तो
यात्रायां ते समस्तानपि वसुनिचयानानयन् मानवेन्द्राः॥२६॥

तत्काले पुष्कलावर्तकनिकरघनध्वानगम्भीरिमाणं
धिक्कुर्वन् दिक्करीन्द्रश्रुतिपुटदलनः कोऽपि घोषो गरीयान्।
आरादाकर्णि पौरैः किमिदमिति पुनः संभ्रमाद् वीक्षमाणै-
स्तूर्णं व्याघूर्णमानं किमपि च रजसां जालमालोक्यते स्म॥

क्षणे च तत्र सर्वे जनाः—

अभ्रान्तभ्रान्तनानाध्वजपटपटलं तुङ्गमातङ्गराजं
वल्गत्तूत्खारपूरं व्यतिघटनरटत्खड्गराजद्भटौघम्।
अस्पष्टाकारमारादतुलमधिरजोमध्यमुद्धूतपृथ्वी-
चक्रं चक्रं नृपाणां ददृशुरुपगतं चक्रवालादवन्याः॥२८॥

किं बहुना—

स्फीतश्वेतातपत्रावलिनिचितनभोमण्डलाश्चण्डभेरी-
निध्वानोद्धूतलोकाश्चलितपृतनया कुम्भिनीं कम्पयन्तः।
आगच्छन्ति स्म सर्वे निगलितमनसस्तत्र कृष्णागुणौघै-
रुद्गच्छत्स्वच्छधूलीकबलितनलिनीनाथचन्द्रा नरेन्द्राः॥२९॥

अंसे राधासुतस्य स्वभुजमतिपृथावर्पयित्वा सलीलं
तच्छौर्यायत्तलाभां द्रुपदनरपतेः कन्यकां मन्यमानः।
सैन्यैः सङ्ख्याविहीनैर्गजतुरगमुखैः क्षोभयन् भूतधात्रीं
हृष्टात्मा धार्तराष्ट्रो द्रुपदपुरमतिप्रौढमाढौकते स्म॥३०॥

नाहं कन्याभिलाषी ननु चपलधियामस्तु सा लोभनीया
दुर्वेधं तत्तु लक्षं किमपि च मृगयत्युद्भटो मद्भुजोऽयम्।
इत्युद्यद्गर्वभारो महितभुजमहोदत्तविद्वेषिचेत-
श्शल्यः शल्यो महात्मा तदनु पुरमिमामागमद् वेगशाली॥३१॥

पाञ्चालीपाणिपद्मग्रहमयमचिरादुत्सवं लप्स्यते चेत्
पाणिर्नानामृगाक्षीपरिचरणकलादक्षिणो दक्षिणोऽयम्।
इत्येवं निश्चितात्मा यदुवरपृतनावारितः सीरपाणि-
स्तत्रायाति स्म हालामदसमुदितया हेलया लोलमानः॥३२॥

अगृह्णाद् यो भैष्मीं कुमतिरनुरक्तां मयि पुरा
हरिष्ये पाञ्चालीं नृपसदसि तस्यैव मिषतः।
तदात्मानं मोक्ष्याम्यसमरिपुजातात् परिभवा-
दिति प्रागाद् वेगाद् द्रुपदनगरीं चेदिनृपतिः॥३३॥

नूनं नानानृपौघे स्थितवति वरयेत् तत्र मां स्वानुरूपं
सा कन्या किन्तु, मन्ये न खलु तदभिमृष्येत कृष्णो दुरात्मा।
यद्वा वैरं कुमुद्वान् वहतु किमुत तच्छिद्यते पद्मबन्धो-
रित्यन्धो मोहबद्धो द्रुपदनृपपुरीमागतो मागधेन्द्रः॥३४॥

राज्ञामाज्ञाय गर्वोदयमुपगतिमप्यत्र गूढाकृतीनां
पार्थानां सर्वसाक्षी सपदि स भगवान् भक्तलोकैकबन्धुः।
जीमूतश्यामलश्रीनिरुपमकरुणाशीतलः पीतवासा-
श्चित्रं तत्राविरासीन्नृपवरसमितौ सत्यभामासमेतः॥३५॥

किं बहुना--

आ गौरीबाल्यकेलीनिहितपदरजोमुद्रितादद्रिराजा-
दा च श्रीराघवास्त्रप्रतिशमितमदाडम्बरादम्बुराशेः।
आ चास्तक्ष्माधरेन्द्रादुदयगिरिवरादा च पृथ्वीतले ये
वर्तन्ते तैः समस्तैरपि समुपगतं मर्त्यसङ्घैरसङ्ख्यैः॥३६॥

पाञ्चालभूपालसुतो महात्मा
सञ्चोदितस्तातगिरा तदानीम्।
पञ्चेषुवेषान् नृपतीनशेषान्
मञ्चेषु संवेशितवान् यथार्हम्॥३७॥

संप्राप्ते तदनु स्वयंवरदिने स्नात्वा विशुद्धाकृति-
र्बिभ्राणा परिणाहशालिनि मृदु क्षौमं नितबस्थले।
अन्तर्भूषणमन्दिरं सकुतुकं गत्वा सखीभिः समं
पाञ्चालस्य सुता न्यषीददमले कुत्रापि रत्नासने॥३८॥

सखीजनः सोऽपि सलीलमस्या निसर्गरम्यामपि गात्रवल्लीम्।
प्रचक्रमे रत्नविभूषणौघैः स्फुटं विधातुं पुनरुक्तशोभाम्॥३९॥

भूयोऽपि पादयुगलीं स्पृशति स्म योऽसौ
पश्चान्निपात्य शिरसा सरसीरुहाक्ष्याः।

एनं निसर्गकुटिलं चटुलेन दाम्ना
वेणीभरं सपदि कापि दृढं बबन्ध॥४०॥

पाटीरपङ्केन च कुङ्कुमेन व्यधायि कस्तूरिकया तदन्तः।
सुवृत्तमस्यास्तिलकं कयाचिन्मुखाब्जलक्ष्म्या
इव तालवृन्तम्॥४१॥

काचिच्च तस्याः कलयाम्बभूव कर्णद्वये कुण्डलमण्डनानि।
तैरेव क्लृप्ता सुमणिप्रभाभिर्गण्डस्थलीसीमनि पत्रवल्ली॥४२॥

आकर्णदीर्घे नयने च काचिन्मषीविलिप्ते विदधे मृगाक्ष्याः।
जगज्जिगीषोः कुसुमायुधस्य विषेण दिग्धाविव सायकौ द्वौ॥४३॥

उत्फुल्लकल्हारयुगं कयाचिन्न्यधायि तस्याः किल कर्णमूले।
कटाक्षकान्तिच्छुरिते तु तस्मिन्नदर्शि नीलोत्पलकर्णपूरः॥४४॥

युक्ता भवत्वस्य समुन्नतस्य स्पर्धा निबद्धा मलयाचलेन।
इतीव काचित् कुचशैलमस्याः पाटीरसञ्च्छन्नतटं वितेने॥४५॥

कठोरवक्षोजतटीविमर्दं दोर्मूलयोर्दुर्विषहं निरीक्ष्य।
निरोद्‌धुकामेव तमत्र काचिच्चके तयोरङ्गदजालभूषाम्॥४६॥

मा निर्दये मां कठिनं नियोज्य प्रम्लापयेमां मृदुबाहुवल्लीम्।
इतीव चक्रन्द तदा कयाचिदामुच्यमानो मणिकङ्कणोऽस्याः॥४७॥

तस्या विशाले जघने कयाचिन्नियोजिता काचन रत्नकाञ्ची।
तत्रैव रोद्‌धुं युवलोकचेतोदन्तावलान् बन्धनशृङ्खलेव॥४८॥

पादद्वयी ते सखि तुल्यरागं लाक्षारसं कान्तमियं प्रपन्ना।
भूयस्त्वमप्येवमिति ब्रुवाणां सा केलिपद्मेन सखीं जघान॥४९॥

संयोज्यमानं चरणारविन्दे तस्यास्तुलाकोटियुगं कयाचित्।
हर्षादिवोत्कृष्टपदस्य लाभे मुहुर्मुहुर्मञ्जुतरं शिशिञ्जे॥५०॥

इत्थं विभूषणविशेषसमुज्ज्वलाङ्गी-
मालीजनैः परिवृतां द्रुपदात्मजां ताम्।
राजाज्ञया समुपगम्य च सौविदल्ला
रङ्गस्थलीं समुपनेतुमुपाक्रमन्त॥५१॥

तावन्निश्शेषलोके कुतुकतरलिते रङ्गदत्तेक्षणान्ते
दूरादश्रावि कश्चिन्मिलितकलकलो याहि याहीति घोषः।
अग्रे चाद्योति विद्युन्निकररुचिधरैः काञ्चनैर्वेत्रदण्डै-
रा शुद्धान्ताच्च रङ्गावधि तदनु जनः संविभक्तो द्विधाभूत्॥५२॥

तदनु वरसखीनां मण्डले कान्तिधारा-
पटलपरिनिमग्नामङ्गवल्लीं वहन्ती।
अमृतमिव किरन्ती लोचने मानवानां
शिव शिव! ददृशे सा राजपुत्री विदूरे॥५३॥

चिरादलसगामिनी पृथुनितम्बसंवाहनाद्
गृहीतबहुमङ्गलैः सह सहेलमालीजनैः।
विभूषणसमुज्ज्वला विपुलरङ्गमध्यं तदा
कथञ्चन समेयुषी किमपि नम्रकम्रानना॥५४॥

अथ सकलजनानां विस्मयानन्दमूर्च्छा-
कबलितहृदयानां तस्थुषां तत्र रङ्गे।
मुहुरनिमिषमेनां पश्यतां विश्वरम्यां
समजनि पुनरेषा कापि चिन्ता हृदन्ते॥५५॥

अहो चित्रं चित्रं परिलसति काचित् क्षितितले
निरुत्कम्पा शम्पा तदुपरि च तापिञ्छपटली।
मिलद्विम्बं बिम्बं कनकमयकम्बूपरि विधोः
समुत्तुङ्गे शृङ्गे नभसि ननु मेरोर्निरुपमे॥५६॥

क्वचिन्नीलाम्भोदः क्वचन चलदिन्दीवरदलं
कुतश्चिन्निश्च्योतन्मधुरसलसत्पल्ल्वपुटम्।
क्वचित् फुल्लाम्भोजं क्वचन घनसौवर्णकलशं
क्वचिद्रम्भाशुम्भद्विपुलपुलिनं नन्विदमहो॥५७॥

शृङ्गारामृतवारिधेर्लहरिका लावण्यकल्लोलिनी
सौभाग्यद्रुममञ्जरी परिलसत्तारुण्यलक्ष्मीः स्वयम्।
माया पञ्चशरस्य चञ्चलदृशां सीमन्तमुक्तामणिः
कन्यारत्नमिदं किमप्यनुपमं चित्रं पुरो दृश्यते॥५८॥

सीमन्तिनीमौलिमणेरमुष्याः सीमन्तरेखा कचबन्धमध्ये
धत्ते पयोदावलिमध्यलग्नविद्युल्लताविभ्रममुत्पलाक्ष्याः॥५९॥

अस्या घनश्यामलकोमलश्रीर्निरन्तरोऽयं कुटिलः कचौघः।
उल्लोलकल्लोलकलिन्दकन्याप्रवाहभङ्गीमुररीकरोति॥६०॥

लोलालिपालीललिता विभाति नीलालकश्रेणिरियं मृगाक्ष्याः।
पञ्चायुधस्येव जगज्जिगीषोः पिञ्छावलीनिर्मितमातपत्रम्॥६१॥

कस्तूरिकाक्लृप्तमिदं मनोज्ञं विन्यासधन्यं तिलकं कृशाङ्ग्याः।
ललाटशीतद्युतिपोतकस्य कलङ्कलेशोद्गमवद्विभाति॥६२॥

विभ्राजते विभ्रमलोभनीया चिल्लीमतल्लीयुगली मृगाक्ष्याः।
विशेषकेन्दीवरकुड्मळस्य श्लथीकृता बाह्यदळद्वयीव॥६३॥

विलोचने हन्त विलासभारविलोभनीये लसतः कृशाङ्ग्याः।
अच्छे मुखच्छायमये जलान्ते संक्रीडमानाविव मीनपोतौ॥६४॥

कर्णान्तविश्रान्तकटाक्षलीलाभङ्गीयमङ्गीकुरुते वराङ्ग्याः।
कर्णावतंसोज्ज्वलसौरभश्रीर्विभ्रान्तपुष्पन्धययोर्विलासम्॥६५॥

इमावमुष्या भुजवल्लिमूलकूलङ्कषौ तुङ्गतरावुरोजौ।
शङ्कामहे पङ्कजकोरकौ द्वौ लावण्यवापीपयसि प्ररूढौ॥६६॥

यातस्य नाभीसरसीं विहर्तुं कुचाद्रिमध्यान्मदनद्विपस्य।
दानाम्बुधारेव पथि च्युतेयं विराजते रोमलता कृशाङ्ग्याः॥६७॥

अस्तीति नास्तीति च न प्रतीमो मध्यं कृशं मुग्धविलोचनायाः।
अत्याकुला रोमलतेयमस्मिन् न्यस्ता कथं निश्शरणा विधात्रा॥
श्रोणीयमेणीतरलेक्षणाया मनोज्ञकाञ्चीपरिवेष्ट्यमाना।
रुषा निजस्यन्दनकान्तिचौर्यान्मनोभुवा शृङ्खलितेव भाति॥६९॥

इदं प्रकाश्येत यदि स्मराग्नौ भस्मीभवेदेव तदा त्रिलोकी।
इत्यूरुयुग्मं निबिरीसमस्या मन्ये समाच्छादितमंशुकेन॥७०॥

मनोज्ञवृत्तं महनीयशोभं जानामि जानुद्वयमेतदीयम्।
त्रैलोक्यसंमोहनचूर्णपूर्णं मारस्य माणिक्यसमुद्गयुग्मम्॥७१॥

आरक्तमुग्धाङ्गुलिलोभनीयं पादद्वयं स्वच्छनखच्छवीदम्।
दलाग्रविन्यस्तविशुद्धमुक्ताश्रेणीव शोणाब्जयुगं विभाति॥७२॥

शैवलाभादृतोऽप्यस्याः श्रितोऽपि सुमनोगणैः।
कचस्तमोगुणं धत्ते कुटिलानामयं क्रमः॥७३॥

धिगस्या नयने याभ्यां श्रुतिमार्गो विलङ्घ्यते।
अथवा चपलानां स्यात् कृत्याकृत्यकथा कुतः॥७४॥

भूषितुं वयमेवालं किं वतंसोत्पलेन ते।
इतीव मन्त्रयन्तेऽस्याः कटाक्षाः कर्णमूलगाः॥७५॥

अस्याः कुण्डलरत्नौघः प्रसार्य करपल्लवम्।
याचते नूनमेतस्या बिम्बोष्ठं प्रति शोणताम्॥७६॥

अधरश्रीरसावस्या वेशस्त्रीव विराजते।
पल्लवस्यातिरक्तस्य या सर्वस्वापहारिणी॥७७॥

अस्याः कुचभरं मन्ये नखलेखपदोचितम्।
धत्ते यः शोभनं वृत्तं गिरीशस्य महीभृतः॥७८॥

मन्ये पयोधरावस्या मध्यादप्यतिदुर्बलौ।
एकावली धृता ताभ्यां मध्येन त्रिवली धृता॥७९॥

रोमलेखा सरोजाक्ष्या नाभिजातेव दृश्यते।
कान्तमुल्लङ्घ्य या मध्यमुद्वृत्तौ भजते स्तनौ॥८०॥

अबलां शोभयत्येनां बलिपङ्क्तिं च सेवते।
रोमराजिरियं तस्या मध्यस्थानामयं नयः॥८१॥

अस्याः पाणितलस्यायं विशेषः शोणपङ्कजात्।
यदिदं सततं धत्ते नखरांशुकृतां श्रियम्॥८२॥

चित्रमूरुद्वयी तस्याः पुनरेवोरुतां गता।
किञ्च रम्भासमानापि धत्तेऽरम्भासमानताम्॥८३॥

चोरास्तिरोहिता एव शक्ताः शौर्यविधौ खलु।
मुष्णीतश्चरणावस्याः पद्माभामतिरोहितौ॥८४॥

इत्येवं रङ्गसीमन्यखिलजनमनोमोहिनीं भासमाना-
मेनामानङ्गविद्यामिव धृतवपुषं विश्वमामोहयन्तीम्।
दृष्ट्वा विष्फारपुष्पायुधविकृतिजुषां भूपतीनाममीषां
किं ब्रूमस्तत्क्षणोत्थां सदसि बहुविधामव्यवस्थामवस्थाम्॥८५॥

कोऽपि तदा भूपयुवा तस्थौ तामेव निश्चलं पश्यन्।
करधृतशृङ्खलमेकं कनककरण्डं सविभ्रमं भ्रमयन्॥८६॥

अन्यः कोऽपि महीपतिः स्वमकुटप्रान्तं करेणामृश-
न्नीषन्मूर्धविकम्पनेन च किमप्यान्दोलयन् कुण्डलम्।
पश्यन्नुच्छ्रितकन्धरं निजमुखं भूयो मणीदर्पणे
मध्ये सस्पृहमीक्षते स्म ललितं तस्या मुखाम्भोरुहम्॥८७॥

कश्चन तदपाङ्गानां स्वविषयतां कल्पयन् मुधा पुलकी।
व्यलिखद्विनमितवदनश्चरणाङ्गुष्ठेन पादपीठतलम्॥८८॥

अन्यो महीपतिरहो बत निर्निमेषं
तस्यास्तदेव वदनाम्बुजमीक्षमाणः।
वीटीं निजात् करतलाद् गलितामजानन्
दन्तेन चर्वणविधिं विदधे मुधैव॥८९॥

कश्चित्तदीयाननदत्तदृष्टिर्मध्ये परावृत्ततनुः सलीलम्।
गम्भीरचेताः किल राज्यकार्यं पार्श्वस्थितैर्मन्त्रितवानमात्यैः॥९०॥

अस्याश्चिरं मदवलोकनकौतुकिन्या
मा भूत् त्रपाविवशतेति च कोऽपि भूपः।
तत्संमुखान् परिनियम्य निजान् कटाक्षान्
मध्ये विवृत्य कपटं मुहुरीक्षते स्म॥९१॥

कश्चित्तदाननविलोकनजातमोदो
    वेगादकाण्डहसितं समुदीयमानम्।
हेत्वन्तरेण परिगूहितुमप्रसक्तं
    किञ्चित्प्रहासवचनं कथायाञ्चकार॥९२॥

प्रत्यङ्गमङ्कुरितमप्यपरेण यूना
    स्वेदाम्बुजालमुपगूहितुमाकुलेन।
हा हन्त घर्म इति किञ्चिदुदीर्य धीर-
    मुद्वीक्षितः परिजनो धृततालवृन्तः॥९३॥

इत्थं तस्याः प्रकृतिमधुरं कान्तिपीयूषयूषं
    पायं पायं नृपतिनिवहे तत्र मोमुह्यमाने।
धृष्टद्युम्नो नृपतितनयस्तुङ्गमारुह्य रङ्गं
    धीमानेवं प्रणयमधुरं वाचमूचे गभीराम्॥९४॥

भो भो भूपालवीराः! शृणुत मम गिरं काममेते भवन्तः
    सर्वे विख्यातवीर्यास्तदपि मम पितुः काचिदेषा मनीषा।
यः कृत्वा सज्यमेतद्धनुरनुपमितं लक्ष्मेतत् पृषत्कै-
    रेतैरद्धैव विद्ध्येद् वरमिह वरयेद् वीरमेषा तमेव॥९५॥

इति श्रुत्वा वाचं द्रुपदतनयस्य क्षितिभृतः
    समं चेलुः सर्वे मनसिजशराक्रान्तमनसः।
ममैवेयं कन्येत्यहमहमिकाबद्धहृदया
    धर्नुर्ज्यासंरोपे युगपदभिपेतुश्च मुदिताः॥९६॥

अस्पृष्ट्वा चापमेके बत निववृतिरे तीव्रसम्मर्दखिन्नाः
    केचित् प्रोद्धर्तुकामा मथितभुजबलाः सत्रपं सन्निवृत्ताः।
अन्ये धन्यास्तु कन्यावदनसरसिजं चापदण्डं च दृष्ट्वा
    त्यक्तुं धर्तुं न शेकुः किमिह बहुगिरा भग्नदर्पा नरेन्द्राः॥९७॥

उत्तस्थौ तावदत्यूर्जितभुजमहिमा सत्वरं दृप्तचेता-
    श्चैद्यः प्रोद्यत्प्रमोदो निखिलनृपसभामध्यतो बद्धहेलम्।

अद्धा चोद्धृत्य चापं सपदि नमयितुं संप्रवृत्तस्तदानीं
नश्यद्दोर्वीर्यगर्वः स पुनरनमयत् सत्रपं वक्त्रमेव॥९८॥

गर्वान्धो मगधेश्वरस्तदनु तामारुह्य रङ्गस्थलीं
कोदण्डं च समुद्धरन्नथ जवादारोपयिष्यन् बली।
हन्त ध्वस्तभुजाबलो निपतितस्तत्रैव रङ्गस्थले
स्वस्मै दीर्घनमस्क्रियामिव महामोहाय चक्रे मुदा॥९९॥

अत्यद्भुतमिदं मन्ये यदसौ मगधाधिपः।
स्त्रीहेतुं चापमाश्रित्याप्यदन्तत्वमुपेयिवान्॥१००॥

शल्योऽपि तां चापलतामुपेत्य
नोद्धर्तुमप्येष तदा शशाक।
तथापि चित्रं समदर्शि तस्मिन्
काचिन्महाचापलता जनौघैः॥१०१॥

तावत् कन्याभिलाषात् कुरुनरपतिना वर्णितः कर्णमूले
कर्णो निर्णीतवीर्यो रचितपरिकरः सङ्गतो रङ्गदेशम्।
चापे चापेतशङ्कस्त्वरितमथ समारोपयन् ज्यामतल्लीं
हन्ताकाण्डे पपात प्रविचलितमहारङ्गभूरङ्गभूपः॥१०२॥

तेनाकुलाङ्गं पतता तदानीं प्रदर्शिता यद्यपि शौर्यहानिः।
तथाप्यहो तस्य मनस्विलोकस्तत् कर्म शौर्याहितमेव मेने॥१०३॥

इत्थं समस्तोऽपि निवृत्य तस्मान्निजं निजं मञ्चतलं समेत्य।
राज्ञां गणस्तत्र विलक्ष आसीद्रङ्गप्रदेशस्तु सलक्ष एव॥१०४॥

उत्थाय केऽपि कुतुकेन गवेषयन्तः
शक्तान् नरान् वरसभां परितश्चरन्तः।
पृथ्वीसुराः समवलोक्य च भीममारा-
दित्थं तदा प्रमुदिताः कथयाम्बभूवुः॥१०५॥

हे विद्वन्नद्य तूष्णीं किमिह कलयसे वा समुत्तिष्ठ सद्य-
श्चापारोपे न कञ्चित् त्वदपरमधुना शक्तिमन्तं प्रतीमः।

वीरम्मन्याश्च सर्वे परिजहतु भुजागर्वमुर्वीभुजोऽमी
योषारत्ने किमेषा द्विजवर! भवतो हस्तलग्नेऽप्यनास्था॥१०६॥

श्रुत्वा तदनु तां वाणीं पृथ्वीसुरगणोदिताम्।
हस्तेन निर्दिशन् जिष्णुमित्थमूचे वृकोदरः॥१०७॥

निश्शेषशास्त्रविदसौ ननु कश्चिदास्ते
क्षीणीसुरो निखिलकार्मुककर्मवेदी।
चापाधिरोपणविधौ कुशलोऽयमेव
मद्बाहुरेष धनुषः परिपेष्टुमीष्टे॥१०८॥

इत्थं निशम्य पवमानसुतस्य वाचं
पृथ्वीसुरास्तदनु ते जनितप्रमोदाः।
अत्यादरात् समुपगम्य महीसुराणां
मध्ये स्थितं मघवदात्मजमेवमूचुः॥१०९॥

धीमन्! जगत्यनुचितः खलु भूसुराणां
शस्त्रग्रहस्तदपि किञ्चिदिदं वदामः।
विज्ञातवानिह महीवलये त्वदन्यो
विज्ञायते न पुरुषो धनुषोऽधिरोपे॥११०॥

यद्वा शस्त्रपरिग्रहे पुनरयं द्रोणः प्रमाणं भवेत्
किं भूयो विचिकित्सया प्रयततां चापाधिरोपे भवान्।
कन्यारत्नमुपेक्षसे किमधुना प्रोत्तिष्ठ तत् स्वस्ति ते
साहाय्यं वयमत्र दुष्करतमे कर्मण्यमी कुर्महे॥१११॥

यद्येष सम्प्रति फलिष्यति नः प्रयत्नो
जात्या जितं खलु तदा धरणीसुराणाम्।
नो चेत् ततः किमधुना परिहीयते नो
जाल्यं ननु प्रकृतिरेव महीसुराणाम्॥११२॥

इत्थं पृथ्वीसुराणां बहुविधवचनैः प्रेर्यमाणेऽपि सान्त-
हासं तत्रैव किञ्चित् स्थितवति वलभिन्नन्दने सन्दिहाने।
मा भूत् कालातिपातः प्रियसख तदलं शङ्कितेनेति गूढं
पेतुस्तस्मिन् मुरारेर्मृदुहसितसुधाशीतपाताः कटाक्षाः॥११३॥

लब्ध्वा धर्मसुतस्य वीक्षणकलामुत्थाय बद्धोद्यमो
भक्त्या द्रोणकृपौ प्रणम्य मनसा शौरिं च शौर्योज्ज्वलः।
कृष्णागूढवलत्कटाक्षयुगलश्रीराजिनीराजितः
सद्यो मङ्गलरङ्गभूतलमलञ्चक्रे स शक्रात्मजः॥११४॥

प्रदक्षिणीकृत्य ततः प्रणम्य
कोदण्डमादाय च सव्यसाची।
उदञ्चयन् पञ्चषवारमेन-
मारोपयामास बली सलीलम्॥११५॥

तदनु तरलमन्तर्यन्त्रमालोक्य दृष्ट्या
सममथ घटयित्वा सायकान् पञ्च मौर्व्याम्।
सुदृढमपि च कर्षन् सोऽयमालोकि लोकैः
पतितमपि च लक्ष्यं लक्षितं तत्क्षणेन॥११६॥

पाञ्चाली तु तथाविधां मधुरतामुत्प्रेक्ष्य विप्रेऽपि तां
लक्ष्यच्छेदमसौ करिष्यति न वेत्यत्याकुला तस्थुषी।
चापं गृह्णति विस्मयाकुलमना लक्ष्येऽपि लूने पुनः
सर्वाङ्गोत्पुलका क्षणार्धमशकत् स्थातुं न सा व्रीलया॥११७॥

वरयितुमथ कान्तं प्रेर्यमाणा सखीभिः
सपदि सहजया सा लज्जया रुध्यमाना।
न खलु तमुपयातुं स्थातुमप्यानताङ्गी
क्षणमियमतिलोला पारयामास बाला॥११८॥

यातायातं मुहुरपि हृदा तन्वती सा कथञ्चिद्
बाला मालाविलसितकरा प्राप्य तं वीरमौलिम्।
अंसे तस्य प्रकृतिसुभगे मालिकामर्पयित्वा
प्रस्विन्नाङ्गी नमितवदना तस्थुषी तत्र रङ्गे॥११९॥

केलीनालीकसञ्छादितनमितमुखं किञ्चिदाभुग्नमध्यं
सद्यःस्विद्यल्ललाटं नवपुलकचयैरुल्लसद्गण्डमूलम्।
पादाङ्गुष्ठेन मन्दं किसलयमृदुना भूतलं व्यालिखन्त्या-
स्तस्या रेजे तदेतत् स्थितमतिसुभगं व्रीलया पेलवाङ्ग्याः॥१२०॥

उच्चैरुच्चार्यमाणे क्षितिसुरनिवहैः साधुवादे तदानी-
मन्तःसन्तोषपूर्णे द्रुपदनरपतौ पौरसार्थे कृतार्थे।
हा धाष्टर्यं ब्रह्मबन्धोरनृपतिरिह कः कन्यकारत्नमर्हे-
दित्यक्षुभ्यन्नसूयादुरभिभवचलन्मानसा मानवेन्द्राः॥१२१॥

यदि सममनयाहं निर्गमिष्यामि तूष्णीं
ध्रुवमिह विहसेयुर्भीरुरित्येव भूपाः।
इति कृतमतिरुच्चैः शान्तगम्भीरनादां
सकलजनसमक्षं वाचमूचे किरीटी॥१२२॥

दत्तैवेयं खलु नृपतिना च्छिन्नलक्षाय कन्या
विद्ध्वा लक्षं तदहमधुना राजपुत्रीं नयामि।
भूपेष्वेको यदि न सहते न्याय्यवृत्तिं ममैतां
सद्यः सन्नह्यतु भुजबलव्यक्तये मृत्यवे वा॥१२३॥

लक्षच्छेदस्तव जलमते काकतालीय एष
स्फायद्गर्वः पुनरपि च किं जल्पसि स्वल्पसारम्।
क्षोणीन्द्राणां सदसि मिषतां नेष्यसे चेत् त्वमेनां
च्छेत्स्यामस्ते झटिति वरणस्त्रग्विणीं कण्ठनालीम्॥१२४॥

इति ब्रुवन्तः सर्वेऽपि रोषपोषारुणेक्षणाः।
तूर्णमुत्थाय युद्धाय सन्नह्यन्ति स्म ते नृपाः॥१२५॥

अस्मज्जातिर्जलैवेत्यभिमतमनसो वीक्ष्य कर्माद्भुतं नः
प्रौढासूयाः क्रमन्ते द्विजतरुणममुं निःसहायं निरोद्धुम्।
ब्राह्मेण ज्योतिषामून् वयमिह तरसा भस्मयामः स्मयान्धा-
नित्थं पृथ्वीसुरेन्द्राः कतिचिदथ जवादुत्थिता बद्धरोषाः॥१२६॥

वस्त्राण्याबध्य मध्ये तदनु निजवृसीरायुधीकृत्य घोरं
तर्जन्या तर्जयन्तो नृपकुलमभितो दद्भिरोष्ठं दशन्तः।
रक्षामन्त्रं जपन्तः सुनिभृतमभयाद् दर्शितोग्राभिमानाः
संचेलुर्भूमिपालान् प्रति धरणिसुरा हासयन्तो जनौघान्॥१२७॥

पार्थोऽपि सस्मितमुखो विनिवार्य विप्रां-
स्तानेव रक्षितुमयुङ्क्त नृपालपुत्रीम्।
विप्रैश्च कैश्चन तदा पवनात्मजन्मा
साहाय्यके सपदि तस्य नियोजितोऽभूत्॥१२८॥

दृष्ट्वा भीमोऽपि पार्थं विरथमथ समुद्वीक्षमाणः समन्तात्
पश्यन् दूरे महान्तं कुरुनृपतिरथं तूर्णमुत्प्लुत्य तस्मिन्।
हत्वा चैनं चपेटार्पणसमपसरद्रक्षिलोकं क्षणेन
व्युदभ्रान्ते भूपसङ्घे मिषति सति ददौ सादरं सोदराय॥१२९॥

अद्धा युद्धाय लक्षत्रुटनपटुममुं चापदण्डं प्रगृह्य-
न्नारादारुह्य तस्थौ रणभुवि वलभिन्नन्दनः स्यन्दनं तम्।
भीमोऽपि क्रूरकर्मा चिरसमयसमाकाङ्क्षितं साम्परायं
प्राप्य प्रीतान्तरात्मा स्वयमनुजकृते सूतकृत्यं वितेने॥१३०॥

तत्क्षणमुत्क्षुभितानां दुःक्षितिपानां कुलानि तान्यरुधत्।
आयतसायकवर्षैरारुद्धककुम्भि हयवन्ति॥१३१॥

रे रे सम्प्रति तिष्ठ तिष्ठ कुमते क्वासि प्रयाणोद्यतः
सन्नद्धो भव मङ्क्षु भुङ्क्ष्व च फलं धार्ष्ट्यस्य ते साम्प्रतम्।
इत्युक्त्वा परिवार्य तं नृपतयो रुद्धाशमद्धा शरैः
शैलं वारिभिरम्बुदा इव जवादक्षोभ्यमभ्याकिरन्॥१३२॥

अथ भीमो भीमबलः
क्रोधादादाय सिंहरसितानि।
हेषीभीषितविश्वा-
नश्वान् वेगेन चोदयामास॥१३३॥

आकर्णाकृष्टचापः समरभुवि तदा सोऽयमच्छिन्नरूपां
वर्षन् नाराचधारां प्रतिभटपृतनामण्डले चण्डवेगाम्।
ईषद्रक्तान्तनेत्राञ्चलचलनकलासूचितक्रोधवेगः
सद्यो विद्वेषिवीरान् प्रति महितमहःसञ्चयः संचचाल॥१३४॥

तस्य शिलीमुखपक्षी
जवभरझङ्कारिचारुपक्षपुटः।
हस्तिकुलमस्तकान्ते
विनिपत्य पपौ मदोदयं निखिलम्॥१३५॥

न परं वेषमात्रेण सर्वे ते सव्यसाचिनम्।
किन्तु शौर्योष्मणाप्येनं बाडवं मेनिरे नृपाः॥१३६॥

पार्थेषुभिन्नकरिमस्तकनिर्गतानि
मुक्ताफलानि घनशोणितरूषितानि।
युद्धाङ्कणे शुशुभिरे परितः सरन्त-
स्तस्य प्रतापदहनादिव विष्फुलिङ्गाः॥१३७॥

खण्डितदण्डानि तदा
श्वेतच्छत्राणि धरणिपतितानि।
तुलयन्ति स्म समन्ताद्
वरशरवर्षोत्थितं शिलीन्ध्रकुलम्॥१३८॥

वर्षति विजयपयोदे शैत्यवतीः सपदि निबिडशरधाराः।
क्षणमपि शिथिलितपक्षः स्थातुं न शशाक राजहंसगणः॥१३९॥

केचित्सञ्छिन्नचापाः कतिचन विरथाः केऽपि निर्लूनकण्ठाः
केचित् त्रुट्यत्किरीटाः कतिचिदपि तथा मङ्क्षु संक्षुण्णगात्राः।

युद्धे कृत्तातपत्राः कतिचन निहतप्रायसैन्यास्तथान्ये
किं भूयोभिर्वचोभिः सकलनृपतयो विद्रुताः क्षुद्रशौर्याः॥१४०॥

दृष्ट्वा तत्र पलायमानमखिलं क्षोणीपतीनां कुलं
सैन्यं विद्रुतशेषमेव सकलं सन्नह्य जन्याङ्कणे।
अभ्यायात् स्वरथापहारजनितक्रोधासहात्मा समं
राधेयेन समस्तकार्मुकवतां वर्येण दुर्योधनः॥१४१॥

रे रे महीसुरकुलाधम! तिष्ठ तिष्ठ
क्व प्रस्थितोऽसि परिमुष्य नृपालपुत्रीम्।
अद्यैव कर्णशरदर्शितया पदव्या
सद्यः प्रयास्यसि कृतान्तपुरीं दुरात्मन्॥१४२॥

पृथ्वीन्द्राः पृथुविक्रमा द्विजवधे संस्मृत्य यत् पातकं
त्वामुत्सृज्य गतास्तदद्य मनुषे स्वीयं भुजावैभवम्।
मद्बाहुस्तु पुनर्जिघांसुनिधने निष्पातकत्वं विद-
न्नच्छित्वा जितकाशिनस्तव शिरो नैवाद्य विश्राम्यति॥१४३॥

इत्थमाकर्ण्य कर्णस्य भाषितं गर्वरूषितम्।
अम्भोधिरवगम्भीरां वाचमूचे धनञ्जयः॥१४४॥

रे राधेय! विकत्थनैरलमलं गीर्वैभवं वेद्मि ते
तद्दोर्वैभवमस्ति चेत् प्रकटय प्रत्येहि युद्धाङ्कणम्।
यो लक्षेऽपि च तादृशे क्षितिभृतां लक्षेऽपि दृष्टोदयो
नो सुप्तं न मृतं च संप्रति पुनस्तेनैव मद्बाहुना॥१४५॥

इति कटुतरवादक्षोभितः साभिमानं
निजधनुरभिकर्षन्नङ्गराट् सङ्गरान्ते।
अपरिमितमुदीर्णैर्घोरनाराचपूरैः
स्थगिततनुमकार्षीद्विक्रमी शक्रसूनुम्॥१४६॥

ते चारुपक्षा निःसीमा निर्गताः शलभा इव।
धनञ्जयमुपागम्य तरसा नेशुराशुगाः॥१४७॥

कर्णेन पार्थाय विकृष्य मुक्ता
अपार्थापाता विशिखा बभूवुः।
पार्थेन चाकर्णविकृष्टमुक्ताः
कर्णे निषेतुः सुदृढं शरौघाः॥१४८॥

किं किमेष वत सायकोत्करः पार्थमुक्त इव मां प्रबाधते।
इत्यसौ रविसुतो विलोकयन् जिष्णुमेव तमबोधि भूसुरम्॥१४९॥

तदनु च सोऽधिकरोष-
प्रज्वलितो वज्रिसूनुमभिनिपतन्।
उल्बणतद्बाणगणा-
नसहिष्णुर्भूय एव विमुखोऽभूत्॥१५०॥

कृतो जिष्णुशरैः कर्णः सफलैरफलोद्यमः।
सपत्रैस्तैश्च निष्पत्राकृता तस्य वरूथिनी॥१५१॥

सुयोधनस्यापि तदा शरीरं
विदारयन्ति स्म किरीटिबाणाः।
हा कर्ण! कर्णेति विलापशाली
यथा स कर्णस्य रुजं वितेने॥१५२॥

किं गिरा विजयवाणनिर्गलत्-
कङ्कटान्तपरिवान्तशोणितौ।
अङ्गराजकुरुराजपुङ्गवौ
सङ्गराजिरतलात् पलायितौ॥१५३॥

इत्थं जित्वा नृपौघान् निजभुजमहसा शक्रसूनुस्तदानीं
साकं भीमेन तुष्टैर्धरणिसुरवरैर्विस्मितैस्तैः कृताशीः।
वीरो भूपालपुत्रीं रणभुवि जयलक्ष्मीमिवादाय मूर्तां
तस्माद् रङ्गात् प्रतस्थे प्रमुदितहृदयः कुम्भकाराधिवासम्॥१५४॥

इति पाञ्चालीस्वयंरप्रबन्धः समाप्तः॥

# नालायनीचरितप्रबन्धः

स्त्रीरत्नलाभमुदितौ युवरत्नलाभ-
प्रीतां प्रगृह्य कमनीं कुरुवंशवीरौ।
कौलालमालयमुपेत्य पुरैव तत्र
प्राप्तैर्यमात्मजयमैर्मिलितावभूताम्॥१॥

अम्बां गृहोदरगतां बहिरागतास्ते
भिक्षेयमस्त्युपहृतेति सलीलमूचुः।
सा भुज्यतां सह भवद्भिरिति ब्रुवाणा
कुन्ती निरेत्य च निरीक्ष्य विलज्जिताभूत्॥२॥

तदोअ पमदाउलमौलिमाणिदाए ताए सह तत्थ एव्व खणं उपविसन्तेसु तेसु णिरुवमरूवभावलावण्णपरिमलधारितारिसतरुणीरअणदंसणजणि-अपंचाउहविआरं अप्पणो विअ कणिट्ठाणं वि देक्खिअ जणणीए एव्व मुहकलमं पुणोवि विलोअअन्तो धम्मसुदो सव्व्हा माआ सच्चवाआ एव्व भविस्सदित्ति णिअमाणसविस्संभेण संभावअन्तो णिअयअणे दोसं आसंकिअ परिपुच्छन्तिं कुंतिभोअतणअं कुसलं एव्व भअवं साहइस्सदित्ति समास्सासिदवन्तो।

(छाया) – ततश्च प्रमदाकुलमौलिमानितया तया सह तत्रैव क्षणमुपविशत्सु तेषु निरुपमरूपभावलावण्यपरिमलधारितादृशतरुणीरत्नदर्शन-जनितपञ्चायुधविकारमात्मन इव कनिष्ठानामपि दृष्ट्वा जनन्या एव मुखकमलं पुनरपि विलोकयन् धर्मसुतः सर्वथा माता सत्यवागेव भविष्यतीति निजमानसविस्रम्भेण सम्भावयन् निजवचने दोषमाशङ्क्य परिपृच्छन्तीं कुन्तिभोजतनयां कुशलमेव भगवान् साधयिष्यतीति समाश्वासितवान्।

तावत् स वत्सलतया तरलान्तरात्मा
पद्मेक्षणः सह बलेन कुलालगेहम्।
गूढं प्रविश्य वचनैरमृतायमानै-
राश्वास्य पाण्डुजनुषः स्वपुरीं प्रतस्थे॥३॥

ततश्च तज्जातिजिज्ञासया निगूढमनुगम्य कुलालनिलयप्रचारितचारे तदविदूरनिविष्टे धृष्टद्युम्ने तेषु च सायमुपहृतभिक्षेषु जननीनियुक्तपरिहर्षुलपार्षतीप्रथमपरिवेषणविशेषसरसमन्नमुपयुज्य मुदितेषु विजनमिति सांयुगीनशस्त्रास्त्रादिविषयाः कथाः कथयत्सु शयितेषु चारजनकथिततत्कथानुमितक्षत्रभावपरितुष्टधृष्टद्युम्ननिवेद्यमानेन परेद्यवि द्रुपदेन प्रहिते पुरोहिते सरथे च पुरुषे रथाधिरूढेषु तेषु जननीजनीसहितेषु धीरमधुराकृतिदर्शनमात्रकृतार्थीकृतपौरजनेषु पुरं प्रविष्टेषु परिमृष्टाशनपरितुष्टेषु चिरदृष्टशस्त्रादिदर्शनपरिहृष्टेषु सुखनिविष्टेषु परिपृष्टः सादरं द्रुपदेन धर्मात्मजः स्वयं निर्मायमवादीत्।

पञ्चापि पाण्डुतनया वयमेव राजन्
माता पृथेयमिह लक्ष्भिदर्जुनोऽयम्।
प्राग् धार्तराष्ट्रकृतजातुषगेहमुक्ताः
षण्मासमात्रमचराम निगूढवेषाः॥४॥

इति निजमनोरथपरिपूर्तिनिशमनवशाद् दुरुत्तरानन्दाम्बुधिपातनिरुत्तरे क्षणमिव तस्थुषि द्रुपदे पुरैव मत्प्रियकरणकल्पितजामातृभावो लक्षविक्षपणलक्षितभुजवीर्यो वल्गूयन्नयं फल्गुनः स्वयमुद्वहतु सद्यो मत्प्रियसुतामित्यभिदधाने सति धर्मपुत्रः सत्रपमिव किमपि प्रत्यभाषत।

राजन्! युक्तमिदं विरुद्धमिव मे किञ्चिद्वचः श्रूयतां
मात्रा नः सह भुज्यतामियमिति व्याख्यायि सत्योद्यया।
अस्माकं च मतिः कदध्वविमुखी सम्प्रत्यमूं काङ्क्षते
तज्ज्येष्ठक्रमतो विवोढुमुचिता स्त्रीरत्नमेषा समम्॥५॥

इति निशम्य धर्मसूनुः किमेवं वदतीति शङ्काविष्टे सधृष्टद्युम्ने द्रुपदे

यौवनसुलभो दिव्यरूपदर्पितो मार एव किं धीरमप्यमुमेवं प्रलापयतीति मनसि चिन्तयत्स्वन्येषु तत्र स्वयं निगमपारेचरः पाराशर्यो मुनिः प्रादुरासीत्।

तं च प्रज्वलन्तं महान्धकारे प्रदीपमिव सस्नेहालोकिनमालोक्य प्रसन्नेषु सकलेषु समर्हणान्ते द्रुपदपरिपृष्टः स मुनिरनुरहसमेनं कथयाञ्चक्रे।

**किं शङ्क्यते पञ्चपतित्वहेतुं**
**प्राग्जन्मवृत्तं कथयाम्यमुष्याः।**
**प्रागिन्द्रसेनेति जगत्प्रतीता**
**नालायनी काचन कन्यकाभूत्॥६॥**

सा च सुन्दरितमा तपःसिद्धिपौष्कल्यवता मौद्गल्यमुनिना पाणौकृता तेन च पातिव्रत्यबलविलोकनाय गृहीतां दशमिदद्रुण-कच्छुरकद्रदु-गन्धिमाकृतिमनृपतीयमाना व्रतीयमाना परिचरन्ती चिरेण चामुना सतीव्रततीव्रतया कृपायमाणेन कुरूपं विहाय स्वरूपमेव भजता वरं वृणीष्वेत्यभिहिता चिरनिरुद्धसुखरसातितृष्णया पञ्चधाभूतेन भवताहमिह जन्मनि परजन्मन्यपि रमयितव्येति वरयाञ्चक्रे।

ततश्च तदैव पञ्चायुधनिभां पञ्चेन्द्रियप्रीणनीं पञ्चगात्रीं दधतादयितेन संममविरतं रतोत्सवमनुबोभुवती वनान्तरेष्वपि मुनिजनमाननामधिगम्य रंरम्यमाणा सुधाशनलोकमप्याक्रम्य मघोनीमानिता मानुषीजनुषि दुर्लभान् वल्लभैः सह दिव्यभोगाननुभवन्ती पर्वतायिते मुनौ निम्नगायिता पादपायिते लतायितेति सर्वजातिसुखानि निर्विशन्ती बहुसमीमेवं स्मरसाम्राज्यं बुभुजे॥

तथानुभूयापि सा सुखानामपरितृप्ता परितृप्तमनसि मोक्षमाणे मौद्गल्यमुनौ भाविजन्मन्यपि पञ्चधा रतिमर्थितो वञ्चयसि किमिदानीमिति सरोषमिव तं निरुरोध।

**क्षत्रभावमवलम्ब्य रुन्धती**
**क्षत्रियैव भवितासि कामिनि!**
**तत्र पञ्च रमणाश्च सन्त्विति**
**प्रत्युदीर्य गतवान् महामुनिः॥७॥**

सापि शापो वा वरो वायमिति सन्दिहाना वन्धकीत्वभिया प्रियपञ्चानमात्मानमनिच्छन्ती पुनरेकपतिनैव भोगसमृद्धिसिद्धये मुन्धेन्दुशेख-रमतिघोरया तपस्यया नमस्ययोपास्यया च वरिवस्यन्ती ततः प्रसेदुषि प्रादुर्वभूवुषि तस्मिन् परजन्मनि परमानुभवाय मे पतिं देहीत्यसकृज्जगाद सम्भ्रमवशाद्वा दैववशाद्वा वाणीम्।

देवोऽप्युवाच मुनिवाक्यमलङ्घ्यमार्ये!
यन्मां बलात् त्वमपि याचसि पञ्चकृत्वः।
मत्सेवनेन पुनरेष विशेषलाभः
पञ्चेन्द्रतुल्यपतयो न च दूषणं ते॥८॥

एवं चेत् कन्यकैवाहं सर्वैः प्रथमसङ्गमे।
भूयासमिति भूयोऽसौ वरं वव्रे महेश्वरात्॥९॥

विदग्धया सोऽथ वृतो महेशो भोगाविरोधेन परां च सिद्धिम्।
रतिश्च सिद्धिश्च मिथो विरुद्धे तथाप्युपायो भवितेत्यवादीत्॥१०॥

ततश्चेन्द्रतुल्यपञ्चपतित्वप्रतिज्ञानिरूढिं निरूपयन् विरूपाक्षो मदवधीरणदोषेण पुरातनकल्पेषु निराकृतस्वरश्चतुरस्तुरासाहः समागतानुग्रह-कालानद्य धरायामवतारयिष्यामि। पञ्चमः पुनरद्यतनः सुत्रामा तत्र नियोक्तव्यः। स च किमपि व्युत्पाटितदर्पोन्नतिरेव सुप्रीत्या मत्प्रोक्तकारी मविष्यतीत्यदः कुर्व न्द्रसेने! त्वं मन्दाकिनीमेत्य वृन्दारकेन्द्रमालोक्य समानयेति तां समादिक्षत्।

सा प्राप्य गङ्गामनिरीक्ष्य शक्रं
बाष्पायमाणा क्षणमास्त तोये।
प्राप्तश्च तद्बाष्पजहेमपद्म-
विस्मेरगीर्वाणगिरा सुरेन्द्रः॥११॥

का त्वं कुतस्त्या वद पङ्कजाक्षि
त्वं पङ्कजाश्रुश्च किमेतदार्ये!।

इतीरिता सा कथयामि सर्वं
मनागुपेहीति निनाय शक्रम्॥१२॥

ततश्च विलासग्राहिण्यास्तस्या रूपरत्नदर्शनादेव विवशीभूते कलवचनमन्त्रैश्च समाकृष्यमाणे समागच्छत्यहल्याभुजङ्गे गङ्गाधरोऽपि तुहिनगिरिशृङ्गे शृङ्गारिवेषमालम्ब्य कपटललनावेषया दाक्षायण्या सहाक्षान् दीव्यन् मध्येमार्गमध्यास्ते स्म।

शक्रोऽथ सक्रोधमवोचदेनं
जगत्पतेर्मे जल! याहि मार्गात्।
इतीरितः सस्मितमैक्षतेशो
जम्भार्दनः स्तम्भितमूर्तिरासीत्॥१३॥

स्थाणोः कटाक्षमात्रेण स्थाणुसारूप्यमागतः।
तस्थौ गलितदम्भोलिः सम्भ्रमी जम्भभेदनः॥१४॥

ततः समाप्तदेवनः स देवः स्वरूपमातिष्ठन् कोपिष्ठचेताः पापिष्ठमेनं नेदिष्ठमानयेत्यादिष्टया नालायन्या परामृष्टमात्रे धरापृष्ठनिपतनकलुषितसास्राक्षं सहस्राक्षं रोषज्वालेन फालेक्षणेन धक्ष्यन्निवोद्वीक्ष्य रूक्षतरमाचचक्षे—

रे रे जगत्पतिम्मन्य! दिवस्पतिहतक! मत्परिभवनिष्पतितस्वर्गपदचतुर्वासवीवासभूतामिहत्यां गुहामुद्घाट्य तां प्रविश्य तदनुभवमनुभवेति।

सोऽपि कन्दरामिमां भयस्खलितेन करेणोद्घाट्य तदन्तरन्धतमसे निजतुल्यभासश्चतुरो विषण्णान् निषण्णानालोक्य साध्वसविवशः प्रविश प्रविशेति भूतगणनोदनारब्धक्रन्दनः संक्रन्दनो बहुशः प्रणम्य दीनमूचे कालरुद्रम् —

अजानतो हा बत विश्वनाथ!
क्षमस्व दासस्य ममापराधम्।

नाहं कृतान्तो न पुरो न कामः
क्रोधस्य यन्मां विदधासि लक्ष्म्॥१५॥

इति वदति गतमदेऽस्मिन् प्रशान्तरोषः कृतान्तभेदी सहासमवादीत्–

पञ्चापि सार्धमवतीर्य महीममुष्याः
कामं प्रपूर्य पुनरेष्यथ दिव्यलोकम्।
धर्मानिलाश्विन इमान् जनयन्तु पूर्वान्
जन्योऽस्त्वयन्तु जनकोऽपि नवीनशक्रः॥१६॥

इति निशम्य हर्षायमाणैर्गुहोत्थितैस्तैरपि समं तथेति प्रणेमुषि वलद्विषि मत्कोपपरामृष्टा यौष्माकी लक्ष्मीरपि नालायन्या सहैकीभूता प्रमोदयिष्यति युष्मानित्यभिदधति त्र्यक्षे तत्क्षणानुप्रविष्टशक्रलक्ष्मीशतगुणप्रदीप्तामिमां समीक्ष्य विस्मितेषु सकलेषु भुवमवतीर्य भूभारहरणेन बहु सुरकार्यं करिष्यतां भवतामबलम्बनार्थं नालायनीनाथितपरगतिसिद्ध्यर्थं च नारायणो भगवानप्युपासितव्य इति नरनारायणाश्रमममूनुपगमय्य ततस्तिरोदधे पुरां भेत्ता।

तत्रच तैरिन्द्रसेनासहितैरिन्द्रैरिन्द्रियैरिव षड्भिरेकोन्मुखैरुपासितः स्वयं नारायणो नातिचिरेण प्रसेदिवानूचिवान्।

नराख्यमंशं मम विश्वभूत्यै
स्वांशेन सार्धं जनयेन्मरुत्वान्।
अहं द्विधाभूय च वः सुहृत् स्यां
नालायनी चास्तु मदेकभक्ता॥१७॥

इति नरांशं सुरेश्वरे निवेश्य शिरोरुहद्वयं च निजं सितासितवर्ण पराक्षिप्य दयाकुलाक्षं निरीक्षमाणस्तिरोदधे स पुराणपुरुषः।

केशौ केशवसीरिणावभवतां तौ पाण्डवप्रीतये
चत्वारोऽप्यभवन् पुराणहरयो धर्मात्मजाद्या इमे।
शक्रांशः स नरांश एष विजयः सा शक्रलक्ष्मीवृता
पुण्यश्रीभिरयोनिजा हरिपरा नालायनी द्रौपदी॥१८॥

इत्थं हरानुग्रहवेदवाक्या-
दियं वधूः पञ्चवरोपलभ्या।
कथाकविं मामथ शङ्कसे चेद्
ददामि दिव्यं तव भूप! चक्षुः॥१९॥

इतीरिते सोऽथ निरीक्ष्य पुत्रीं
नालायनीमेव रमासमेताम्।
महारुचस्तानपि पञ्च शक्रान्
मुनेः पपात द्रुपदः पदान्ते॥२०॥

तदो अ महीवइसम्मदिमुहेण सम्मुदिएसु सअलेसु मणोरहंकुरभंगसंकाणिवुत्तिकिदत्थीकिदेसु बहूवरेसु अज्ज एव्व रोहिणीअं उव्वाहमंगलं ति बादराअणोवदेसेण समुग्घोसिओसवकोलाहले पुरवरे भोजणस्सन्तपअस्सन्तधणाअन्तभूंसुरउलणिरन्तरेसु घरन्तरेसु करे हिअए अ णिबद्धकोएसु भूसणविसेसभूसिएसु विविहविदरणमुदिअभूसुरवरविहिदा-सिव्वअणेसु पञ्चालराएण साअरं उव्वाहगेहं उवणिअ रअणासणणिवेसिएसु कुरुउलवीरेसु कुसलवहूअणपरिभूसिआ वि णिअभासा भूणाई एव्व भूसअन्ती मन्दं मन्दं उपगमिअ पिअपञ्चअभासा भूणाई एव्व भूसअन्ती मन्दं मन्दं उपगतिअ पिअपञ्चअसमीवणिसण्णा जण्णसेणी सरपञ्चअसविहणिहिअ व्व कुसुमचावकोसमीवणिसण्णा जण्णसेणी सरपञ्चअसविहणिहिअव्व कुसुमचावकोअंडलदा उदुपञ्चअपरिमिलिदव्व कुसुमज्जाणसिरी भावप्पमाणपज्जओदञ्चिअव्व अप्पविआरविज्जा पाणपञ्चअपरीदव्व वेदणा अहिअदरं राजेइ।

छाया– ततश्च महीपतिसम्मतिमुखेन सम्मुदितेषु सकलेषु मोरथाङ्कुरभङ्गशङ्कानिवृत्तिकृतार्थीकृतेषु वधूवरेषु अद्यैव रोहिण्यामुद्वाहमङ्गलमिति बादरायणोपदेशेन समुद्घोषितोत्सवकोलाहले पुरवरे भोजनस्यत्पयस्यद्धनायद्भूसुरकुलनिरन्तरेषु गृहान्तरेषु करे हृदये च निबद्धकौतुकेषु भूषणविशेषभूषितेषु विविधवितरणमुदितभूसुरवरविहिता-शीर्वचनेषु पाञ्चालराजेन सादरमुद्वाहगेहमुपनीय रत्नासननिवेशितेषु कुरुकुलवीरेषु कुशलवधूजनपरिभूषितापि निजभासा भूषणान्येव भूषयन्ती

मन्दं मन्दमुपगम्य प्रियपञ्चकसमीपनिषण्णा याज्ञसेनी शरपञ्चकसविधनिहितेव कुसुमचापकोदण्डलता ऋतुपञ्चकपरिमिलितेव कुसुमोद्यानश्रीः भावप्रमाणपञ्चकोदञ्चितेवात्मविचारविद्या प्राणपञ्चक-परीतेव चेतना अधिकतरमराजत्।

ततश्च कृष्णद्वैपायने कृष्णवर्त्मनि च साक्षिणि धौम्यकृतहोमकर्मा धार्मिकोत्तमो धर्मसुतः स्वयमयाथाकथाचहस्त्यवित्तसञ्चयसौव-स्तिकीकृतसमस्तबाडव्यां मङ्गलक्रियामुपाक्रमत।

करं ग्रहीष्यन्नखिलं धरण्यां
शुभे दिने प्रक्रमकाङ्क्षयेव।
नरेन्द्रपुत्र्या नवरत्नदीप्तं
करं नरेन्द्रो जगृहे तदानीम्॥२१॥

कृशानुमध्ये जुहुवाम्बभूव
किन्नाम सा लाजमिषात् कृशाङ्गी।
यशःकणान् वा धृतराष्ट्रजानां
स्मयश्रियो वा रिपुसुन्दरीणाम्॥२२॥

ततः सभार्यो नृपतिः कृशानु-
प्रदक्षिणीकारविधिच्छलेन।
उपेक्षया खिन्नमुदेष्यमाणं
प्रसादयामास नु शौर्यवह्निम्॥२३॥

न जातु गृह्णाम्यपरस्य पाद-
मितीव शंसन् परिसङ्ख्ययासौ।
अश्माक्रमाय द्रुपदात्मजाया
जग्राह पादौ किल धर्मसूनुः॥२४॥

कर्तुं ध्रुवं शत्रुनितम्बिनीनां
सीमन्तशोणाश्मविहारयोग्यम्।
अश्मानमाक्रामदभीक्ष्णमस्याः
करेण पत्युश्चरणो गृहीतः॥२५॥

इत्थं चतुर्भिः कुरुराजपुत्रै-
रग्राहि घर्मोदकशीकरार्द्रः।
समुच्छ्वसत्पुष्करचारुरस्याः
करः करिण्या इव यूथनाथैः॥२६॥

निर्वृत्तनीराजनमङ्गलेभ्यो
नृपो ददौ यौतकमर्थराशिम्।
शतं रथानां करिणां सहस्रं
तुरङ्गमाणामयुतं च तेभ्यः॥२७॥

तदा द्विजानां व्रजतां स्वरेषु
स्वस्त्युक्तिभिः स्वर्णभरैश्च कण्ठे।
यथेष्टभुक्त्या जठरे च जातः
सादप्रकर्षो विदधे प्रसादम्॥२८॥

कृष्णां विवाह्य स च कृष्णमुनिः प्रतस्थे
कृष्णाज्ञया च नगरीं विविशुस्तदानीम्।
शय्याम्बरायुधविभूषणवाहनाद्याः
कुन्तीभुवां परिकरास्त्रिजगद्दुरापाः॥२९॥

ततश्च—

त्रपानतविलोकनैरभिनवानुरागाङ्कुरै-
रदत्तकलभाषितैस्सभयकौतुकव्याकुलैः।
अमानुषगुणोन्नतेर्द्रुपदकन्यकायास्तदा
नवीनसुरतोत्सवैर्मुमुदिरे नरेन्द्रात्मजाः॥३०॥

पाञ्चालराजतनयां
पञ्चभिरुद्वाहयन् कुरुप्रवरैः।
वेदसमवाक्यगुम्फो
वेदव्यासः पुनातु वो भगवान्॥३१॥

इति नालायनीचरितप्रबन्धःसमाप्तः।

# सुन्दोपसुन्दोपाख्यानप्रबन्धः

इत्थं स्वमित्रजनमुच्चपदे निवेश्य
प्रस्थातुमिच्छति हरौ स हि धर्मसूनुः।
सर्वं त्वयैव भगवन्नुपपादितं नो
भूयोऽपि पाहि कृपयेति पपात पादे॥१॥

मा मैवमुर्वीश! तवैव भूम्ना
पित्र्यं पदं धर्म्यमिदं गतोऽसि।
संक्षिप्य वक्ष्याम्यथ धर्मसारं
सर्वात्मना मानय भूमिदेवान्॥२॥

अपि च—

अभियास्यति नारदोऽद्य युष्मान्
महितान्यस्य वचांसि मानयध्वम्।
अचिरेण सखे धनञ्जय! त्वां
सहजौत्सुक्यजुषं विलोकयिष्ये॥३॥

इति समामन्त्र्य सन्तापशालिनीं कुन्तीमप्याश्वास्य पुराकृतदधिघृतचोरणवासनयेव सस्नेहानि सकलजनमनांसि चोरयन् द्वारकां ययौ सीरिणा सह नारायणः।

आनन्दमन्दगमनो नवरागयोगै-
र्नारायणेति मधुरं ध्वनमानवीणः।
श्रीनारदः सपदि शारदनीरदश्री-
चोरेण चारुमहसा ददृशेऽम्बरान्तात्॥४॥

तं च स्फटिकघटितमिव मुक्तात्मकमिव सत्त्वोच्चयमिव प्रसादमयमिव प्रसन्नमुरारिहसितच्छायानिवीतमिव समीपमुपसरन्तमभिवन्द्य परमासने निवेश्य तद्वचनश्रवणकुतुकिषु निषण्णेषु पाण्डवेषु सस्मितमसाववादीत्।

**वैरप्रियोऽस्मि भवतां तु वधूनिमित्तं**
**नैवास्तु वैरमिति शासितुमागतोऽहम्।**
**नन्वेकवल्लभतया सहवर्तिनां वः**
**स्निग्धात्मनामपि कदापि भिदा भवित्री॥५॥**

शृणुत च कथमिमाम् – पुरा खलु हिरण्यकशिपुकुलसम्भव-निकुम्भाभिधनिलिम्परिपुतनयौ अकम्पानुरागौ अहंभावाभिमानाविव काम-जाल्योदयाविव लोभदुराचाराविव द्वन्द्वचारिणौ सुन्दोपसुन्दौ 'अमरत्वं करिष्याव' इति अभिसन्धाय विन्ध्याचलसीम्नि निजपिशितहोमभीमरूपं तपस्तेपाते।

ततस्तौ मनस्तापशालिसमस्तामरप्रहितप्रमुग्धाङ्गनारत्नैरपि निर्विकारौ सुरविरचितमायाराक्षसशूलनिहन्यमानशरणागतनिजमातृभगिनीजनसमाक्रन्दनैरप्य-नास्पन्दितौ वरप्रदानाय प्रसन्नतामभिनीय समेयुषि सरोजवसतौ कामितं करोमीति पुरैवाभिधानादमरत्वं न ददामीति सान्तर्भयं ब्रवाणे निजप्रणयविस्रम्भात् परस्परस्यैव वध्यतां वरमवृषाताम्। ततस्तौ फलतो लब्धामरत्ववरौ सुरारिपुरेषु पीयतां गीयतामिति समुद्घोष्य निबद्धोत्सवं वत्सरमात्रं नीत्वा जगत्पीडनोद्यतौ वरप्रभावमवगम्य ब्रह्मलोकमारूढपूर्विणा गीर्वाणगणेन विसृष्टं त्रिविष्टपपदमनायासमेवाक्रम्य भुवस्तलेऽपि समस्तलोकधर्मपथान् निर्मथन्तौ ग्रावप्रहितवाणप्रतिमशापप्रहारान् प्रधावतो द्विजातीनपि करोपकर्षं गलोपपीडं पिषन्तौ तत्र तत्र निलीनानपि मुनीन् ग्रहदोषानिव गजकेसरिरूपेण व्यापादयन्तौ अचिरादेव रुधिरपिच्छिलं कङ्कालपङ्किलमस्थिदुश्चरं धरणीचक्रं चकृवांसौ कुरुक्षेत्रे निबद्धपत्तनौ नित्यमेव मद्यमत्तौ मत्तकाशिनीशतेन सह तत्तद्देशेषु चिरमरंसाताम्।

**ततः स्वयम्भुं मुनयः प्रपन्नास्तयोः प्रवृत्तिं निखिलां शशंसुः।**
**विजित्य लोकान् वनितापरौ तौ निशम्य धाता विमृशन्नवादीत्॥६॥**

एहि विश्वकर्मन्, विश्वमधुरपदार्थानाहत्य सकलसुराङ्गनातिगामिनीं कामिनीं कामपि कामनीयकसारनिधिमारचयेति।

सोऽपि भुवनत्रयसमाहृतेभ्यः सकलद्रव्यरत्नेभ्यः सुधारससुधांशुकलाम-धूलीसारमृणालीलतासुरतरुकुसुमकिसलयादिभ्योऽपि तिलमात्रमेव सारतरांशामादाय योजयन्नतिचिरकृतावधानः सुरशिल्पी मध्ये मध्ये समुपदिश्यमानो विश्वमदनीयरुपां मदनाद्वैतविद्यामिवातिहृद्यामनवद्यामक-रोदमराङ्गनाम्।।

किमहं करवाणि वाणिनाथेत्यवनम्रामवलोक्य तां ज्वलन्तीम्।
द्रुहिणो मुदितो दिदेश तस्यै भुवनाकर्षणशक्तिमद्वितीयाम्।।७।।
तिलांशमादाय मनोहरेभ्यः कृतासि यत्तेन तिलोत्तमा त्वम्।
सुन्दोपसुन्दौ वरदानदृप्तावन्योन्यवैराय विलोभय त्वम्।।८।।

इति कथिता सा तथेति विधातारं प्रणम्य कान्तिक-ल्लोलैर्मुहुर्मुहुर्जगदन्तरालं क्षालयन्तीवाकर्षन्तीव गन्तुकामा सभावस्थितं सुरमुनिमण्डलं स्वभावलतिविलासशतमन्थरं प्रदक्षिणीकर्तुकामा लज्जावनम्र-कम्रवदनबिम्बैः निगूढवलमानसस्मितकटाक्षमोक्षैः स्पन्दमानकु-चभरविभद्गुरमध्याङ्कुरैरतिमोहनमणिमेखलाघटितजघनभरैर्विलोलदु-कूलाञ्चलैर्विरणितमणिनूपुरैश्चरणविन्यासैररुणीकृतधरणीचक्रा परिचक्राम।

तां वीक्षितुं परित एव समुत्सुकस्य
शम्भोरभूत् किल चतुर्दिशि वक्त्रमाला।
शक्रः सहस्रनयनोऽपि तदा किलासी-
दन्यान् पुनः किमु वदामि विलोलभावान्।।९।।

ततस्तद्रूपदर्शनात् सिद्धमेव कार्यं मन्वानेषु सुरेषु सा च पुनर्विलासविलोभितलोका भुवमुपगच्छन्ती यदृच्छया विन्ध्याचलवन-शिलातलेषु रहोविहारिणोः सैन्यस्थाने समाहृतगदायुगलयोर्मदिराक्षीसहाययो-र्मदिराक्षीबयोः सुन्दोपसुन्दयोरनतिदूरे कुसुमापचायैर्विहरन्ती विकिरन्ती कान्तिसुधां विचचार।

तौ च विहरणरसान्तरे लतान्तरेण कान्तिकन्दलीदर्शनात् सरभसमुत्थायोपसरन्तौ निरुपमसुषमामयं दिव्यरूपमालोक्य दूरनिराकृतधैर्यसारेण मारवीरेण पारिप्लवीकृतहृदयौ सोन्मोहाविव सोन्मादाविव तदुपान्तमापतुः।

त्रपाकुलं तत्र तरूपकण्ठे मनाङ् निलीना सुरसुन्दरी सा।
भागद्वयानुप्रहितैरपाङ्गस्तस्थौ क्षणं द्वावपि मोहयन्ती॥१०॥

ततस्तौ प्रस्तुतप्रियसल्लापावुभावपि निजानुभावं निश्चिन्वानौ उचितवेदी किमयं नापसरतीति सासूयं परस्परं निरीक्षमाणौ पुनरपि कालसहकाममदवेगादहमिमां गृह्णाम्यहमेवेत्युदितरोषं विवदमानौ एकैकमस्याः कराम्बुजमुपगृह्णन्तो गुरुवधूं न स्पृशेति अनुजवधूं न स्पृशेति वादिनौ रोषातिभूमिमारूढौ।

स्वां स्वामाशु गदां समीपनिहितामादाय साङ्ग्रामिकीं
घोराघातपरौ मुहुः सुरवधूवक्त्राब्जदत्तेक्षणौ।
सद्यश्चूर्णितमस्तकस्त्रवदसृग्व्याजेन रागच्छटां
मुञ्चन्तौ निपताम्बभूवतुरुभौ सुन्दोपसुन्दौ क्षणात्॥११॥

गत्वा तत्र समं देवैर्मानयित्वा तिलोत्तमाम्।
प्रतिष्ठाप्य सुरश्रेष्ठान् परमेष्ठी ययौ मुदा॥१२॥

एवं दृढप्रणयिनामपि वैरयोगात्
कान्ता परान्तिकगता न विलोकनीया।
स्वां वल्लभां पुरत एव परार्द्रभावां
दृष्ट्वा शिलेयमतयोऽपि कथं सहेयुः॥१३॥

एकैकवासरतया नियमे कृतेऽत्र
नित्यप्रसङ्गिनि भवेदवधौ विरोधः।
तस्मात् सुखोऽपि नियमो बहुकालभावी
शेषं विचिन्तयत नीतिचणा हि यूयम्॥१४॥

श्रुत्वा युक्तियुतं वचो हरिगिरं स्मृत्वा च निःसंशया-
स्ते वह्नेरिव नारदस्य पुरतश्चक्रुः प्रतिज्ञामिमाम्।
एकैकाब्दममूं भजेमहि वधूं यस्त्वेनया संयुतं
पश्येन्नः स हि वत्सरं व्रतधरः प्रावासिकः स्यादिति॥१५॥

इति सुन्दोपसुन्दोपाख्यानप्रबन्धः समाप्तः।

# सुभद्राहरणप्रबन्धः

इत्थं क्लृप्तव्यवस्थां द्रुपदनृपसुतामानुपूर्व्या भजन्तो
याते तस्मिन् मुनीन्द्रे हतविमतजना वर्धयन्तः स्वराज्यम्।
रोषस्याकस्मिकत्वात् कुहचिदनुचितेऽप्यायुधादानभीत्या
राजान्तर्न्यस्तशस्त्राः सुखमिह नगरे रेमिरे पाण्डुपुत्राः॥१॥

अधिनिशमथ सुप्तासुप्तलोके पुरान्ते
कमपि रुदितघोषं शुश्रुवानिन्द्रसूनुः।
कुरुतनयकुनीतिप्रेरितैश्चोरपाशै-
रपहृतपशुपङ्क्तेः कस्यचिद् भूसुरस्य॥२॥

माहाकुलस्य हरणं च महीसुरस्य
माहाकुलस्य रुदितं च निशम्य मानी।
पार्थोऽस्मि ते शरणमित्यभिधाय चिन्तां
चक्रे स राजगृहयोजितशस्त्रजालः॥३॥

शक्यं न कालहरणं हरणे पशूनां
प्राप्यं न भूपतिगृहं दयितासमेतम्।
तत् किं करोमि गहने बत सङ्कटेऽस्मिन्
पथ्यं प्रबोधयतु मे भगवान् मुकुन्दः॥४॥

किं वा विचारैर्द्विजरक्षया मे
कालेन भद्रागम एव भावी।
क्लेशं तु धीरा मुखतः प्रवृत्तं
भाविप्रियावाप्तिरसात् सहन्ते॥५॥

इति निश्चित्य निश्चलमतिरघटितकवाटं धर्मजभवनमधिगम्यावनम्य तदाज्ञां कार्मुकलतां च परिगृह्णन् क्षिप्रमेव विप्रमनुगतो विद्रवतः पाटच्चरखेटान् महाटवीमुपाटितुकामान् विपाठकूटैर्विपाटयन्नुपादाय कीर्त्या सह गोत्रां गोत्रारिसूनुर्गोत्रासुरगोत्राग्रिमेण तेनाप्यतर्कितानि श्रेयांसि लभस्वेति प्रयुक्ताशीः परिप्रीत्या पुरं प्राप्तो निशाशेषमनैषीत्।

प्रातस्तरां च तीर्थगमनार्थी पार्थो धर्मसुतं प्रणतः प्रणयाकुलेन तेन यवीयसो जायासहितज्यायोदर्शनं न दोषायेति प्रतिपाद्यमानोऽपि सत्यसन्धा वयं न कूटधर्माण इति वादी तदनुमोदितो मुदितमानसो भीममपि प्रेमशोकमानरोषशङ्काकुलमनुनीय यमाभ्यामभिवादितः सततमेव सातङ्कां मातरमपि प्रणमन् पाञ्चालीपरिसरमयासीत्।

**सापि स्वकारणमिदं व्यसनं स्मरन्ती**
**प्रेमाकुला किमपि वक्तुमपारयन्ती।**
**साभ्यर्थनैरपि च सानुनयैः सबाष्पै-**
**र्नेत्रैः कथञ्चन मुमोच बबन्ध चैनम्॥६॥**

ततोऽयमेकसांवत्सरिको गृहीतयशोधनश्चातुर्वैद्यधार्मविद्यक्षात्रविद्य-वैदान्तिकपौराणिकैतिहासिककाथिकमुखैर्मुकुन्दभक्तिभासुरैर्भूसुरैरनुगम्यमानो भाविदिग्विजययात्रामासूत्रयन्निवोत्तराशां प्रस्थितस्तापहराणि पापहराणि च शिशिरपुण्यानि सरित्सरोरण्यानि भजन्नुपहिमवतं गङ्गाद्वारमाससाद।

तत्र च स्नात्वा सायं तत्तीरप्रस्तुताग्निकार्यादिनियमेषु महीसुरेषु सायंकालस्नायी कृतसन्ध्यावन्दनः शक्रनन्दनो नै ददृशे।

**ततो विषण्णेषु शुभोन्मुखेषु**
**द्विजेषु तत्रैव वसत्सु रात्रिम्।**
**स चोदमज्जन्मुदितो जलान्तात्**
**पयोनिधेरर्क इव प्रभाते॥७॥**

ततः सकुतुकमेत्य पृच्छत्सु च तेषु बभाषे —अहं खलु नित्यक्रियावसाने प्राप्तया कयापि काम्यरूपया पूर्णाङ्ग्या भुजङ्गाङ्गनया दर्शितापूर्वपथया

बलादपहृतो नाकनिलयमिव सुरवाहिनीमध्ये नागनिलयं नीतस्तत्र च रहसि मदनमदवेगलज्जानतमुखीमुपतिष्ठन्तीमिमां कुलनामनी पर्यपृच्छम्।

कौरव्य! कौरव्यसुतामुलूपीं
जानीहि मां वेद्मि च ते विशेषान्।
स्नायन्तमालोक्य नदीजले त्वा-
मानैषमानङ्गविमोहलोला॥८॥

तां मां प्रणयमग्नां मदनभग्नां पालयेति चरणलग्नामधिकलग्नां कृशावलग्नामिमामुपलालयन्नहमवादिषम्–

अयि सुमुखि! वपुस्ते मोहनं मोहनाना-
मतिलघु परिरब्धुं चित्तमत्युत्सुकं मे।
गुरुजनविहितेन द्रौपदीहेतुकेन
प्रणयिनि! चकितोऽस्मि ब्रह्मचर्यव्रतेन॥९॥

इति वदन्तं मां पुनरवादीत्–

द्रौपदीं प्रति कृतः समयश्चेद्
ब्रह्मचर्यमपि तद्विषयं ते।
नाथ! कष्टमथवा व्रतलोपाद्
दीनरक्षणमिदं नु गरीयः॥१०॥

इति धर्ममेव वदन्त्यां तस्यां नारदाय पूर्वजाय च मनसा प्रणम्य मन्मथनिर्मथितामिमां नर्मतलिममारोप्य सरभसपरिरम्भसंभ्रमत्रुटित-नागहारानतिरसनिरङ्कुशानभिनवाननङ्गसङ्गराननुभवन् यामिनीमिमां भुजङ्गपुत्र्या सममनुकूलो भुजङ्गोऽभवम्।

ततः प्रभाते ददृशे सुतो मे
स्फुरन्निरावानिति दाक्ष्यशाली।
निधाय कौरव्यवशे मुदा तं
प्रियां समालिङ्ग्य समागतोऽस्मि॥११॥

इति।

स ततो हिमवन्तमेत्य पश्यन्
विजयस्तम्भपरम्परां कुरूणाम्।
बहुमानयुतो ननाम तेभ्य-
स्त्वरितश्चाजनि नूलराजसूये॥१२॥

ततः क्रमादौत्तराहाणि तीर्थानि निषेव्य पौरस्त्यपथगामी पुण्यस्थलेषु वासं वासं, पुण्यजलेषु स्नायं स्नायं, मणिगोहिरण्यानि दायं दायं, हरिनामकथा गायं गायं, सहायैः सहायासहीनं परिक्रामन् भगीरथचिरयत्नकीर्तिमालां पुरहरशिरोमल्लिमालां तामपि महानदीं निमज्ज्य प्रतिगिरमनुनदमन्वाश्रममुपस्थाय पुनरपि स तीर्थभक्त्या दक्षिणाशाभिमुखो बभूव।

कृतवीर्ययशोविवर्धनः
समुपैति स्वयमर्जुनोऽधुना।
इति तत्र निशम्य नर्मदा
क्षणमासीत् स्वनिरोधशङ्किनी॥१३॥

ततः कलिङ्गराष्ट्रद्वारे महाब्रह्मणान् विसृज्य कतिपयसहृदयसहायः पौर्वसैन्धवकच्छेन तमालासच्छायेन विच्छायन्नधिगोदावरि परिकावेरि च निमज्जन् कपिशकलमपालिनिचोलां चोलावनिमतिक्रम्य चित्रवाहनयशोमण्डलपाण्डरां पाण्ड्यभुवमिमाहिण्ड्य तत्रापि तीर्थानि सिषेवे।

संवत्सरस्तावदवाप सीमां
पार्थोऽपि यातो मणलूरसीमाम्।
तत्रापि चित्राङ्गलतां ददर्श
चित्राङ्गदां नाम स पाण्ड्यपुत्रीम्॥१४॥

मुग्धस्मितैरपि च मौक्तिकदामरम्यै-
र्नीलाब्जदामललितैरपि नेत्रपातैः।
तस्यापि गात्रलतया तरलेक्षणा सा

गाढं बबन्ध किल मानसमिन्द्रसूनोः॥१५॥

मानितश्चासौ तत्र तत्पित्रा चित्रवाहनेन चित्तवेदिना बद्धमोदमित्थं कथयाम्बभूवे।

हे वीर! शङ्करगिरा नियतैकपुत्रे-
ऽप्यस्मत्कुले मम पुनस्तनयैव जाता।
तस्मात् तदीयतनयस्तनयो ममेति
ज्ञात्वाद्य मामनुगृहाण गृहाण बालाम्॥१६॥

इति।

तदनु च मुदितोऽयं प्राप्य चित्राङ्गदां ता-
मभिनवरतिलीलालालसां लोलनेत्राम्।
क्रमविगलितलज्जां लालयन् केलिभेदै-
र्व्यहृत कमपि कालं मानयन् मन्मथाज्ञाम्॥१७॥

ततो मदनोत्सवमये मासत्रये गते पार्थस्तीर्थयात्राप्रकरणाविरोधाय प्रत्यासन्नानि दक्षिणार्णवतीरोत्थानि तीर्थानि भेजे।

अखिलदुरवगाहस्फारगम्भीरवृत्त्यो-
र्जलनिधिरघुपत्योर्भेदविज्ञानहेतुम्।
दुरिततरणसेतुं रामसेतुं स दृष्ट्वा
न खलु पुनरसाध्यं मानिनामित्यजानात्॥१८॥

तत्र च क्वचित् पञ्च तीर्थानि जनपरित्यक्तानि दृष्ट्वा परिपृष्टेन मुनिजनेन खलकुलनिवासत्वाद् ग्राहभीषणत्वाच्चास्माभिरुपेक्ष्यन्त इत्याभिहितो वीरोऽयं वारितोऽपि तैरेकं सरः समुपासरत्।

गम्भीरतोयमवगाह्य सरः किरीटी
कुम्भीरमाशु खदनोद्यतमभ्यगृह्णात्।
अम्भस्तटीमुपगतस्तु भुजावलग्नां
कुम्भस्तनीं किल ददर्श कृशावलग्नाम्॥१९॥

सा चैनमवादीत् – अहं खलु वन्दा नाम वृन्दारकसुन्दरी पुरा चतसृभिः सहचरीभिः सह चरन्ती तपोधर्षणोद्यमप्रकुपिततपोधनोत्तमशापोपगतनक्रभावा केनापि वीरेण तीरोपनयने कृते विहितशापमोक्षा पार्थः समुद्धरिष्यतीति पथि नारदेनोक्ता ताभिः सह समेत्य सुतीर्थान्यमून्यपार्थयन्त्यपि त्वयानुगृहीतास्मि। इति।

ततस्तत्प्रार्थनया तीर्थचतुष्टयगतानपि नक्रवरानुद्धृत्य शक्रपुराङ्गनीचक्रे शक्रसूनुः। तदा प्रभृति तान्यपि नारीतीर्थनामाकानि जनसेव्यान्यकरोत्।

चक्रपाणिसखित्वार्हं नक्रमोक्षणमाचरन्।
विक्रमी स ययौ भूयश्चित्रवाहनमन्दिरम्॥२०॥

तत्र च गणरात्रमिमामतिमात्रमधुरां मृदुगात्रीमनुभूय गमनार्थी पुनरवादीत्–

बाले सत्त्वयुतासि न त्वमधुना गन्तुं क्षमा मत्पुरीं
पित्रे पुत्रविवर्धनाय हि मनागत्रैव वर्तिष्यसे।
पुत्रेऽस्मिन् जहति स्तनन्धयदशां कैश्चित्पुनर्वत्सरै-
र्मद्भ्रातुः किल राजसूयसमये गन्तासि कान्ते पुरीम्॥२१॥

चित्रवाहन! नन्वेष बभ्रुवाहनसंज्ञया।
तनयोऽस्तु तवेत्येवं कथयन् स विनिर्ययौ॥२२॥

तदनु स खलु पाण्ड्यक्षोणिखण्डात् कुमारी-
निलयनमभियातस्तीर्णगोकर्णदेशः।
चरमजलधितीर्थान्यासरन्नाप पार्थो
नियमिनिवहकामप्राप्तितीर्थं प्रभासम्॥२३॥

अधिकासन्नाभ्युदया-
मभ्युद्गच्छत्पयोधरोल्लासाम्।
सरसः समाजगाम
प्रावृषमावेदयन् पुरोवातः॥२४॥

तावत्पयोधरसमुद्गमपेशलाया
विद्युल्लतातरलकान्तिमनोहरायाः।
वर्षश्रियोऽपि समये समभूत् प्रसङ्गो
हर्षप्रदोऽपि जगतां पथिकोपरोधी॥२५॥

पौरस्त्यवातविनिवेदितवृत्तिरादा-
वाशाः सृजन्नलघुकृष्णघनावलम्बाः।
आविग्नमानसपरागतराजहंसः
कालो व्यजृम्भत स जृम्भितपञ्चबाणः॥२६॥

अन्धीबभूव सकलो हि पुरःस्थितोऽपि
सम्भोगयोगि मिथुनं मुमुदे विशङ्कम्।
मारेषुवर्षनिभमेदुरवर्षधारा-
नीरन्ध्रितेऽत्र समये निखिलैर्ननन्दे॥२७॥

अत्यूष्मलोऽपि दिवसो जडिमानमागाद्
रक्ता बभूव पृथिवी भृशमिन्द्रगोपैः।
चित्रं पयोदसमयोपगमे निमेषाद्
वेषान्तरं रचितवानिव सर्वलोकः॥२८॥

अथ निशि ददर्श दैवाद्
गदनामानं स तत्र यदुतनयम्।
मुदितश्च पर्यपृच्छत्
कुशलं मुरमाथिनो यदूनां च॥२९॥

सोऽपि चैनं मुदितमतिरवादीत्-

कुशस्थल्यामास्ते भुवनपतिरेतत्पदजुषां
शुभं किं प्रष्टव्यं यदि परमुदन्तोऽयमधुना।
विशन्त्यास्तारुण्यं यदुपसहजाया वरतनोः
सुभद्रायाः कान्त्या पुरमजनि नेत्रामृतमयम्॥३०॥

इति निशम्य तदैव समुन्मिष-
न्मदनकौतुकभाजि धनञ्जये।
समनुपृच्छति सस्मितमूचिवान्
यदुसुताशिशुकेलिसखो गदः॥३१॥

कथमिव कथनीया शैशवे शौरिणैव
प्रगुणितबहुशिक्षाचातुरी माधवी सा।
भुवनमदनमूर्त्तेः सोदरीभावयोग्यं
जयति सुकृतिभोग्यं तादृशं रूपमस्याः॥३२॥

पुनरपि शृणु किञ्चिद् बाल्यकाले प्रसङ्गा-
न्नरवर! तव वार्तां मादृशैर्वर्ण्यमानाम्।
निशमयति सहर्षं साभिलाषं तदा सा
बहु खलु नाहि जाने यौवनस्थामवस्थाम्॥३३॥

इति गदति गदेऽस्मिन् मन्मथाक्रान्तचेताः
पुरत इव सुभद्रामीक्षमाणः क्षणार्धम्।
अपर इव स जज्ञे श्रोत्रवृत्त्या हि गूढं
विशति युवसु चेतोवञ्चकः पञ्चबाणः॥३४॥

ततश्च विनिद्र एव सुभद्रागुणगणविचिन्तया तदवाप्त्युपायचिन्तया च नीतिनिशाशेषः प्रभाते पुनः पुरीगमनत्वरावतो मे निरीक्षणमिदं निगूहनीयमेव त्वयेत्यभिमन्त्रिते यातवति यादवनन्दने भुजविक्रमदुर्निवारैर्मारसायकैरभि-हन्यमानस्तरलापाङ्गाया यदुपुङ्गावानां च हृदयतत्वमविजानन् निजदैन्यप्रसङ्गाद्विशङ्कितचेताः सर्वथा स एव भगवान् करुणानिधिर्मे शरणमिति मत्वा पुनरित्थं मतिमकरोत्।

इतः परं कृष्णमतावबोधात्
पुरो न मां कोऽपि विदाङ्करोतु।
अतो गृहीत्वा लघु भिक्षुवेषं
मुकुन्दसंप्राप्तिविधौ यतिष्ये॥३५॥

इति समवधार्य मदनाचार्योपदेशात् सुदृढसुभद्रात्मसमर्पितान्तःकरणं सहायमहीसुराभिनीतशिष्यभावं मायापथसंन्यासमवलम्ब्य बीभत्सुः समागतायां निशायां जलदजलधारया मदनशरधारया च निःसहचेता वटविटपिकोटरकुटीरनिवासी तमेव सुभद्रासहोदरमुपासाञ्चक्रे।

गोविन्दः सत्यभामाकुचकलशपरीरम्भसंप्रीतचेताः
शय्यायातस्तदानीं किमपि हसितवान् भामया चानुपृष्टः।
प्रेयस्यै गूढमस्यै प्रियसखचरितं सत्यमेव ब्रुवाण-
स्तस्या एवानुमत्या यतिसविधमसावद्वितीयः प्रतस्थे॥३६॥

पथि रैवतकाद्रिपालके
निभृतं भोज्यविधौ नियोजयन्।
अभिगम्य यदृच्छयेव तं
यमिनं प्रैक्षत वार्क्षमूलिकम्॥३७॥

सपदि स खलु पश्यन्नच्युतं सच्चिदेक-
स्वरसमधिकहर्षाद्विश्वमप्यप्रजानन्।
सरभसपरिरम्भात् तत्स्वरूपे निलीनो
गलितसकलतापः प्राप सन्न्याससाध्यम्॥३८॥

ततस्तौ समयात् प्रभृति चरितानि परितोषेण कथयन्तौ विजयमुकुन्दावतिमन्दं रैवतकधराधित्यकामागत्य तदुद्यानकेलिवेश्मनि मधुरान्नसौहित्ये निर्वृत्ते पुनरपि सन्न्यासचरितादन्या एव धन्याः कथा वर्णयन्तावाकर्णयन्तौ च सुखं सुषुपतुः।

कृष्णावलोकनकृतार्थमनास्त्रपावान्
वक्तुं शशाक न तदा विजयो निजाशाम्।
कृष्णोऽपि तत्र सुखवासममुष्य तन्व-
न्नेष्यामि भूय इति निर्गतवान् प्रभाते॥३९॥

अकथनानुशयेन ततो भृशं कुरुयुवा परिदीपितमन्मथः।
मुदितकेकिवृते ववृते गिरौ यदुसुतास्मरणं शरणं व्रजन्॥४०॥

सङ्कल्पदत्तदयितावितिनिविष्टचेताः
सङ्कल्पजप्रहितसायकसङ्कुलात्मा।
पुष्यत्पयोधरमये समये स योगी
कृष्णं प्रतीक्ष्य कतिचिद् दिवसाननैषीत्।।४१।।

मदनार्दितस्य जिष्णो-
र्द्वयमेव दिनेषु तेषु शरणमभूत्।
स्मृतिनिहितमम्बुजाक्ष्या-
स्तारुण्यं मुररिपोश्च कारुण्यम्।।४२।।

सुभद्रा तु बाल्य एव गदनिगदितपार्थप्रभावश्रवणकन्दलितकौतुकरसा वृष्णीनामप्यर्जुनोऽपि न मे तुल्य इति वीरवादान् अर्जुनतुल्यगुणो भवेति बालजनाशीर्वादान् कृष्णस्यापि तत्तत्प्रसङ्गेषु प्रियसखगुणवर्णनान्युपशृण्वती क्रमेण च सखीजनानुयोजितकौरुजाङ्गलजनवाचा तत्त्वतो निशमिततदीयरूपमाधुर्या मुहुर्मुहुः श्रवणात् प्रत्यक्षमिव तं निरीक्षमाणा तारुण्यश्रिया लावण्यविलासैश्च सहेव दिने दिने परिवर्धमानमनोभवखेदा पुनरकाण्डे हलधरस्य सुयोधनप्रदानाभिलाषप्रसङ्गमाकर्ण्य तप्तजलसिक्ता निदाघकालबालमालतीव दुरन्तसन्तापदन्दह्यमाना ततः स्वयंवर एव सर्वाभिमत इत्युपश्रुत्य किमपि समाश्वस्तचित्ता तदन्तरे च पार्थस्य तीर्थयात्रावृत्तं निशम्य तत इतस्तदुदन्तान्वेषिणी सर्वथासौ प्रियसुहृदमनवलोक्य न यास्यतीति कलितविलोकनाशाभिनिवेशा पुनरपरान्तगमनात् परं तदुदन्तमवेदयन्ती गतो वेति विचिन्त्य महाखेदमनुभवन्ती सामयिकसमापतितजलदागम-प्रदीपितमन्मथा त्वत्कुशलकाङ्क्षी फल्गुनप्रियसखः कंसहन्तैव ते तापापहन्ता भविष्यतीति हृदयसखीभिराश्वास्यमाना कथंकथमपि दिनानि निनाय।

कतिपयदिवसैः स केशवः सुहृदि चिकीर्षुरतर्कितं प्रियम्।
प्रमुदितयदुलोकमातनोत् क्षितिभृति रैवतके महोत्सवम्।।४३।।

ततश्च सद्यःसमलंकृतमणिसौधोपवने रैवतकदेशे यदुवीरेषु च प्रासादेष्विव सुधामार्जितचित्रसम्पद्विलसितेषु उन्नतिमत्सु विभूषितेषु

वनितासहायेषु समुपस्थितेषु पुराङ्गनासु च विटपालिपरिवृतासु कुसुमसुकुमाराङ्गीषु ललितपत्रकावलीचित्रकाननासु मारन्दरसमुद्भिन्न-मुद्वहन्तीषु लतास्विव वनान्तरपरिमिलितासु घनकाल इव नीलाम्बरे शशाङ्क इव रेवतीसखे बलासुर इव नवासवप्रिये बलेऽपि समुपागते पार्थचरितमिव प्रमोदितभरतकुलं सन्न्यासवृत्तिमिव सङ्गीतरसमाश्रितं सङ्गरोपक्रमणमिव चलितोग्रसेनानकदुन्दुभिसमुद्घोषितमुत्सवकौतुकमवर्तिष्ट।

सर्वाङ्गनापरिवृतः स च सत्यभामा
सल्लापसस्मितमुखो भगवानुपागात्।
ता देवकीप्रभृतयोऽपि मुदा समीयुः
सा द्वारकैव किल नागमदुत्सवाय॥४४॥

तत्राथ यादववधूसहिता सुभद्रा
लीलोत्सवानुगुणवेषविशेषरम्या।
साकं सखीभिरलसाङ्गलता समागात्
तारागणैरिव समं शरदिन्दुलेखा॥४५॥

पार्थस्तत्र निलीय दत्तनयनो दिव्योत्सवे कौतुका-
दालीमध्यगतां ददर्श सुदृशं लावण्यलेखामयीम्।
कर्षन्तीं जनलोचनानि हृदये हर्षं वमन्तीं पुरः
सैवेयं हरिसोदरीति सुषमाभूम्नैव निर्णीतवान्॥४६॥

अचिन्तयच्चैवमानन्दमन्थरेण चेतसा—

निगदिते हि गदेन तदा मना-
गतिशयोक्तिमशङ्कत मानसम्।
सुदृशमद्य विलोक्य तु मन्महे
विरलवाचममुं खलु यादवम्॥४७॥

हे मत्प्रियंवद गद त्वमुदारगात्र्या
रूपामृतेऽद्य विदितोऽसि यथार्थवादी।
या कापि शैशवकथा कथिता त्वयैव
तस्यां कथं नु भवितासि सखे न जाने॥४८॥

एतावतैव भुवनाद्भुतरूपलक्ष्मी-
सन्दर्शनेन विजयोऽद्य कृतार्थजन्मा।
यद्यस्ति साध्यमपरं स कृपापयोधि-
र्भूयोऽपि साधयतु मे भगवान् मुकुन्दः॥४९॥

इत्यादिचिन्तापरमम्बुजाक्ष्या
गात्रामृते नेत्रयुगेन मग्नम्।
पार्थं तमायात् कृतमन्दहासः
स निःसहायः कमलासहायः॥५०॥

चित्रं समाधिबलमस्य यतीश्वरस्ये-
त्यालापिनं हरिमुदीक्ष्य स लज्जितात्मा।
किं गूहसि प्रियसखेति करे गृहीत्वा
शंसन्तमेनमवदत् पुनरेष मन्दम्॥५१॥

सर्वं वेत्सि त्वमिह करुणाकालजीमूत यस्मा-
दानीतेयं नवरसझरी नेत्रसारङ्गयोर्मे।
तत्किं वक्ष्ये हृदयमधुना निःसहं मे विशेषा-
देतत्प्राप्त्यै मनुजसुकरं ब्रूहि सर्वं करिष्ये॥५२॥

इति वदन्तममन्दानुरागपरिपोषमिव नवकाषायमिषेण वपुषि धारयन्तमन्तरान्तरा लतानुप्रविष्टैर्दृष्टिपातैरापीतमाधवीरूपमाधुरीविधुरीकृतम-धरीकृतमधुधारया गिरा मधुरिपुरवादीत्।

एनां कौरवयाचितां हलधरादाकर्णयन्नुद्धवः
प्रोचे संसदि दानमात्रमयशो भूमीपतीनामिति।
तद्वाञ्छन्त्यखिलाः स्वयंवरविधिं कालातिपाती स ते
तस्मादस्त्वपहार एव विहितो राज्ञां स शूरात्मनाम्॥५३॥

तदत्र हंसाकृतिमेव हि त्वां
नीत्वा पुरीं राममुखैः सपक्षैः।

बालां मृणालीमिव हारयिष्ये
किञ्चित् क्षमस्वेह पयोदपीडाम्॥५४॥

इत्थमभिधाय निगूढं गतवति यदुपतौ यतिवरोऽपि लाभावगमेन लोभनीयतमां तामेव प्रियतमां सखीभिः सह सखेलसञ्चारिणीममृतपायं नयनाभ्यामापिबन् क्रमेण च निवृत्तोत्सवे निवर्तमाने यदुवृन्दे सहैवापयान्तीं मरालगमनामरालकेशीं मुरारिशासनादिवापहृत्य हृदये निवेशयन् पुनरपि तत्स्मरणशरण एव बभूव॥

अत्रागतं दयितयात्र सखीजनेन
संभाषितं प्रशिथिला कबरीह नद्धा।
इत्यादि तस्य पुनरप्यभवन् बहूनि
निर्मानुषेऽपि विपिने नयनामृतानि॥५५॥

तावन्नीलनिरन्तरा जलधरा हृद्याश्च विद्युल्लता
हासा नूतनमालतीसुमनसां केकारवाः कोमलाः।
एकैकं स्मरयन्त एव दयितामिन्द्रात्मजस्याभव-
न्नाश्वासाय नु लोभनाय नु पुनस्तापाय मोहाय वा॥५६।

आलक्ष्यवृक्षविवरेण समुन्नमन्तं
विद्युल्लतान्वितमसौ तरुणाम्बुवाहम्।
किं माधवीमुपनयन्नुपयाति शौरि-
रित्युत्सुकोऽजनि विमोहवशादकाण्डे ॥५७॥

मुकुन्दस्योपायैः सुदृशमवगम्यापि सुलभां
मनोवृत्तिं तस्या विशदमविदन् खेदमगमत्।
अनाश्वास्यं मेने गदनिगदितं बाल्यचरितं
प्रवृत्ते तारुण्ये हृदयमपरं नाम सुदृशाम् ॥५८॥

एवं च योगिनि वियोगदशां प्रपन्ने
वर्षाम्बु पावकतया किल पर्यणंसीत्।

विद्युत्प्रभापि विदधे हृदयान्धकारं
जातिप्रसूनमपि जातिविरोधि जातम्॥५९॥

अद्राक्षं पुनरेकदापि दयितामश्रौषमस्या गिरं
पार्श्वं प्राप्य शनैस्त्रपानतममुखं पश्यामि तस्या स्मितम्।
तामालिङ्गितवानहं तनुलतां वक्त्रारविन्दं पुन-
र्मन्दं चुम्बितवानिति स्म स यतिर्नक्तंदिवं दूयते ॥६०॥

भूयोऽपि कृष्णगिरमेव किलावलम्ब्य
प्राणान् वहन् कतिपयानि दिनानि नीत्वा।
अभ्यागतानथ ददर्श यदुप्रवीरां-
स्तालाङ्कसारणमुखान् स हि दिव्ययोगी ॥६१॥

ततः प्रणतानज्ञानप्रशमोऽस्त्वायुष्मतामित्यनुगृह्णानः स्वागतिकश्चासौ महायतिरूपविष्टेषु तेषु स्वयमबलाभिमुखाशयोऽपि बलाभिमुखो भूत्वा पुनरभाषिष्ट।

बलभद्रावलोकेन कृतार्था भिक्षुताधुना।
किं वा सुभद्रावगमो नचिरान्मे भवेत्पुनः ॥६२॥

इति पृच्छन्तमेनं यदृच्छया भिक्षुमतुच्छभक्तिभूमा रामोऽपि सामोदमवादीत्—

अद्यातिवृष्टिरहितेऽह्नि शैलदेश-
क्रीडारसेन खलु नः पुरतो विसृज्य।
अन्वक्षमेव समुपेष्यति वासुभद्रः
पूर्वं तु नात्र विदितो भगवत्प्रसङ्गः ॥६३॥

इत्यभिधाय पुनस्तत्तद्देशगतीरनुयुञ्जानेन रामेण साकं प्रसङ्ग-वशादलङ्घितधर्मपथा विविधाः कथा कथयत्यस्मिन् विस्मितेषु वृष्णिवीरेषु कृष्णोऽपि तदानीमुपगम्य नमोऽस्तु भद्रावहेभ्यो योगिभ्य इत्यभिववन्दे।

ततश्च संप्रति परब्रह्मांशभूतयोर्द्वयोरप्युपलम्भादवाप्तप्रमोदोऽस्मीति स्थिते यतीश्वरे भृशकुतूहली हली वृष्णिवरान्वितः कृष्णमाहूय व्याजहार–

यौजनशतिको भिक्षु-
यौगिकधीः सर्ववेदयश्चायम्।
चतुरो वार्षिकमासान्
वदस्व कुत्रोपवेश्य महनीयः ॥६४॥

आर्ये तिष्ठति धर्मतोऽत्र परतन्त्रोऽस्मीति कृष्णे वद-
त्यूचे सीरधरः पुरेऽत्र विजनं कन्यापुरान्नापरम्।
आरामोऽत्र तु योगभूमिरुचिता तत्रैव दुर्वाससं
कुन्तीवैनमभिप्रसाद्य भजतां भद्रं सुभद्रैव सा ॥६५॥

कृष्णोऽवदद् बहुविदेष युवा सुरूपः
कन्यागृहेऽस्य वसतिः किमु नाभिशङ्क्या।
मा मैवमच्युत चिरं हि परीक्षितोऽसौ
निःसङ्ग एव नियमीति जगाद रामः ॥६६॥

एवं चेदार्यो भवन्तश्च प्रमाणमित्यभिदधानो मुकुन्दः कर्मन्दिनमपि मन्दमूचे–

अस्मिन् पुरे विजनभूतलदुर्लभत्वात्
कन्यापुरे वसतिमिच्छति तावदार्यः।
तत्किं मनोभिलषितं भवतामिहेति
पृष्टो जगाद यतिरस्तु किलेत्युदारम् ॥६७॥

एनं त्वमेव नगरीं नय बालिकाम-
प्याज्ञापयेति हलिनो वचसैव शौरिः।
लालाटिकः स खलु कौक्कुटिकं यतिं तं
भामाविदर्भसुतयोर्विदितं निनाय ॥६८॥

हरिनगरीति सहर्षं
परमोज्ज्वलमणिमयीति साश्चर्यम्।
दयिताविभूषितेति
प्रोद्गतपुलकं पुरीं ययौ पार्थः ॥६९॥

कन्यापुरं तमुपनीय पुनः सुभद्रां
मन्दं जगाद हलिनो वचनं मुकुन्दः।
प्राप्तो वरोऽत्रयमिनां महनीयमूर्ति-
स्तत्प्रीणनं कुरु कुलस्य तवापि भूत्यै ॥७०॥

इत्थं नियुज्य लतिकाभवने विविक्ते
तस्याधिवासमुपकल्प्य जगाम देवः।
कन्यानिकेतजुषि योगिनि तत्सहाया
विप्राश्च ते मुमुदिरे यदुराजधान्याम् ॥७१॥

अथ सा यदुवरकन्या
सादरमादाय सोदरादेशम्।
चतुरसखीजनसहिता
निनाय तस्मै रसोत्तरां भिक्षाम्॥७२॥

तामायान्तीं सविधमतिरम्याङ्गपीयूषधारां
तर्षार्ताभ्यां स खलु नितरामापिबन्नीक्षणाभ्याम्।
तृप्तिं भेजे निरतिशयिनीं हृद्यमप्यन्नजातं
तस्य प्रीत्यै समजनि पुनस्तत्कराम्भोजसङ्गात् ॥७३॥

तस्याः प्रतिक्षणमनोज्ञमलक्ष्यदोषं
सामीप्यतो विशदभङ्गिविशेषमङ्गम्।
आपादचूडमवलोकयतो यथेष्टं
भिक्षामयः स विजयस्य महोत्सवोऽभूत् ॥७४॥

स प्रश्रयो मृदुतनोरुचितज्ञता सा
लज्जाकुलं च चतुरं च विचेष्टितं तत्।

सोऽप्यादरस्तदपि मौग्ध्यमुदारता सा
सर्वं विमोहनमजायत पाण्डुसूनोः ॥७५॥

आयाससंचलितकुन्तलबन्धनेन
मूर्ध्ना प्रणम्य मुकुलीकृतपाणिपद्मा
सा मन्दिरं गतवती कलहंसकान्ता-
मन्दाक्षदानचतुरैर्मृदुपादचारैः ॥७६॥

इति दिनमनु भिक्षाकर्मणे पक्ष्मलाक्षीं
सविधमुपसरन्तीमापिबन् वीक्ष्य कामम्।
वपुषि पुनरमुष्याः प्रत्यहं चित्तयोने-
रुदयमथ स पश्यन् प्रापदन्तर्विचिन्ताम् ॥७७॥

लसति किमपि तस्याः पाण्डुता गण्डमूले
गमनमलसमङ्गे कान्तता क्लान्तता च।
तदिह नियतमेषा कुत्रचिद्धन्यजन्म-
न्यनुनिपतितभावा किं नु वन्ध्या मदाशा ॥७८॥

हन्तेयमन्यहृदया यदि तत् कथं मां
कृष्णोऽनुकूलमनुशंसति विश्ववेदी।
तत्किं बतायमपि नाम स एव भावी
दैवाद् गदाभिहितबाल्यकथाविवर्तः ॥७९॥

अस्मद्वाञ्छितसाधनातिकुतुकी नालोचयेद्वा स्वयं
बालाया मतिमच्युतो न च भवेत् सा बाल्यवार्ता स्थिरा।
किं वा पाण्डुसुतो हरेः प्रियसखः पञ्चेषुणा वञ्चितो
हासस्यास्पदतां गतोऽद्य बत हा कोऽयं विधेः प्रक्रमः ॥८०॥

संदृष्टायां सुदृशि सुगमा भाववार्तेति मत्वा
लज्जावान् न प्रियसखमहं पृष्टवानस्मि शौरिम्।
सम्प्रत्यस्या मयि तु यतिवेषोचिताः संप्रथन्ते
भक्तिप्रह्वा विनयबहुमानावृता एव भावाः ॥८१॥

तत् किं करोमि निमिषार्धमपि प्रियाया-
स्तत्त्वं विबुद्ध्य चरितार्थमतिः कदा स्याम्।
अस्या प्रियोऽहमिति चेदवधारयेयं
विश्वाधिराज्यमपि नैव तथा मुदे मे ॥८२॥

भिक्षां प्रदाय सुदृशि प्रातियातवत्या-
मित्यादिचिन्तनशतैर्विषसाद पार्थः।
अभ्यागमेषु पुनरस्तमितान्यभाव-
मास्वादयन् प्रणयिनीं प्रमुमोच तापान् ॥८३॥

सा पुनः,

भक्त्या बाला यतिवरममुं प्रत्यहं पूजयन्ती
दृष्ट्वा तस्य श्रुतनिजपतिच्छायतां किञ्चिदङ्गे।
गाढोत्कण्ठा भृशतरमभूदर्जुने प्राणनाथे
तुल्यालोके भवति हि मनो वाञ्छितार्थातिमग्नम् ॥८४॥

पश्यन्ती योगिवर्ये प्रतिदिनविशदामेव पार्थाङ्गभङ्गीं
गूढं दृष्टा संखीभिर्मुहुरपि च तथैवेयमावेद्यमाना।
अश्रान्तक्लान्तचिन्तामिलदसुलभताचिन्तनात्यन्ततप्ता
हो हन्तानन्यचित्ता कृशतनुरभवद् वीतनिद्रा सुभद्रा॥८५॥

ततश्च,

जाताधिकार्तिमपि चादरमात्रशक्त्या
भिक्षाप्रदानविधिमादधतीं कथञ्चित्।
तां बलिकामनिशमाळिजनो मनोज्ञै-
राश्वासयत् किल विनोदनकेलिभेदैः ॥८६॥

ततः कदाचन सखीजनेन विनोदनकाम्यया मनोहरलतापादपधन्याभोगं कन्यापुरोपवनमुपनीयमानेयमकाण्डलब्धनयनोत्सवजनितपुलकमुकुळनिचुलिताङ्ग-लताकुटीरकुहरप्रहितेक्षणे कुतुकाकुले स्थिते कुहनायोगिनि तत इतः

प्रसृमरशिलीमुखप्रकरं प्रचलितप्रवाळकरवालं प्रसारितकेतकमुकुलकुन्तमुखं समराङ्कणमिवाङ्गजस्य तद्देशमविषह्यं मन्यमानापि सखीजनदाक्षिण्यात् तानि तानि ताभिः प्रदर्शितानि विनोदनानि किल विलोकयन्ती मध्ये मध्ये घनञ्जयनिपतितहृदयतयालिखितेवोत्कीर्णेव मुषितचैतन्येव कुसुमलतास्वन्यतमामेव क्षणं निरीक्षमाणा प्रतिक्षणोद्गतदीर्घनिःश्वासा सञ्चरणखेद इति पञ्चशरग्लानिं निगूहमाना कुहचिदुल्लसितरागां पल्लवावलिं वल्लभवार्तामिव सखीजनोपनीतां कर्णयोराद्रियमाणा क्वचित् प्रियवयस्यया चतुरपरिग्रन्थितां सलज्जखेदमाददाना, कुत्रचिदत्यन्कान्त्या सखीजनेन संवीज्यमाना पुनरपि कमपि कालं समययापनाग्रहाद वा सखीजनादराद् वा विजयनयनपुण्यपूराद् वा विजहार; परिसस्रुश्च विस्रम्भसंभाषणानि-

सखि! चूतपोतमेतं
जातिलता किं विलम्बते यातुम्।
किमिह सखि! ते विषादै-
र्लैतिकास्वपि सन्ति मन्दभागिन्यः ॥८७॥

अयि यूथिकां विलोकय
किसलयकरलालितामशोकेन।
धन्यासि यूथिके त्वं
धृतरागे वल्लभे समीपगते ॥८८॥

सखि! माधवीयमारा-
दर्जुनमुपयातुमतितरां त्वरते।
इति कथिता नमितमुखी
तामैक्षत भङ्गुरभ्रुवा दृष्ट्या ॥८९॥

इत्थं परार्थमपि नाम निजं निशम्य
तस्यास्तथाविधमुदीक्ष्य विकारभेदम्।
आनन्दसागरनिमग्नमना मुहूर्तं
तस्थौ चिराय विजयश्चरितार्थजन्मा ॥९०॥

एवं च कञ्चित् समयं विहृत्य बालाथ खेदालसपादचारा।
गृहं प्रयाति स्म समं सखीभिः समं च जिष्णोर्नयनोत्सवेन ॥९१॥

दयितानुरागबोधा-
दुदितो विजयस्य यः समाश्वासः।
अयमेव तत्समागम-
रणरणिकां मनसि शतगुणीचक्रे ॥९२॥

सा लीला तान्तमङ्गं तत् ता विस्रम्भकला गिरः।
इत्थं समाधयो भिक्षोः प्रावर्तन्त ततः परम् ॥९३॥

मृगीदृशोऽप्यनुदिनं प्रियौपम्यप्रकाशनात्।
विनोदनं परं जज्ञे मुनेरेव विलोकनम् ॥९४॥

एवं सा कमनीयमत्र कमनीयं तं भजन्ती यतिं
दृष्ट्वा तस्य भुजौ भुजङ्गसदृशौ मौर्वीकिणाङ्कावुभौ।
पार्थः किं न्वयमेव वेति हृदये शङ्काकुला हन्त मे
वाञ्छामूर्च्छितमेतदित्युपरता लोलाभवत् प्रत्यहम् ॥९५॥

दिने दिने सा परिवृद्धशङ्का
समेत्य लज्जातरला कदाचित्।
कथासु तत्त्वावगमाभिलाषा-
दपृच्छदेनं बहुदेशवार्ताम् ॥९६॥

सोऽपि देशचरितानि सर्वशो
नर्मभेदरमणीयमूचिवान्
सा च तद्वचनकौतुकाच्चिरं
शृण्वती पुनरनिर्णया ययौ ॥९७॥

[illegible]यतमासहसङ्कथया ततः
शतगुणार्तिरवर्तत पाण्डवः।

सुवदना पुनरप्यनुचोदने
सकुतुका त्रपया ववृते चिरम् ॥९८॥

तत्तु सल्लपितं तन्व्या तापशान्तिकृते कृतम्।
तापवृद्ध्यै द्वयोरासीद् दुर्वैद्यस्येव भेषजम् ॥९९॥

भूयोऽपि निःसहा सेयं कथञ्चिन्मन्दितत्रपा।
यतिमेत्यैकदापृच्छदाशाक्लेशजिघांसया ॥१००॥

अयि भगवन् !

इन्द्रप्रस्थं किमसि गतवांस्तत्र संबन्धिनी नः
कुन्तीदेवी किमु कुशलिनी नन्दनैर्धर्मजाद्यैः।
पुत्रस्तस्याः स खलु विजयः क्लिश्यते तीर्थचारै-
स्तीर्थस्नायिन् किमु स भवता वीक्षितो वा श्रुतो वा ॥१०१॥

इति निगद्य किमयं वक्ष्यतीति वेपितहृदयायामवस्थितायां तस्यां क्षणं प्रमोदरुद्धो धनञ्जयः सञ्जगाद–

आर्या पृथा कुशलिनी ननु धर्मजाद्या-
स्तत्सूनवश्च सुखिनो विजयस्त्विदानीम्।
सन्न्यासमेत्य कपटादिह वृष्णिपुर्या-
मास्ते मुकुन्दसहजापरिरम्भकाङ्क्षी॥१०२॥

इति निशम्य निरन्तरमुन्मिषत्-
पुलकजालवृता नमितानना।
विलिखती चरणेन भुवं क्षणं
स्थितवती च गता च गृहोदरम् ॥१०३॥

ततश्च सा दुर्लभतरवल्लभोपलम्भतदनुरागावगमजनितप्रहर्षप्रकर्षोदया-दुत्कूलिते रागसागरे भृशं परिप्लवमाना मुरहरो वा हलधरो वा यदुजनो वा किं मन्यत इत्यपायशतशङ्काकुला क्षणमपि च प्रियविश्लेषमसहमाना भिक्षाविधयेऽपि तदुपान्तं गन्तुमक्षममाणा शयितुमासितुमशितुमालपितुं

वाप्यरतिशालिनी स्निग्धमणितलेषु तळिमेषु च परिवर्तमाना सकलशिशिरोपचाराणां सखीजनवचसामप्यतिभूमिं गता मातरपितृजनस्यापि कातरतामकरोत्।

ततस्तदुदन्तवेदिमुकुन्दचोदितरुक्मिणीसमुपहृतभिक्षो धनञ्जयोऽपि प्रियावलोकनविनोदनलोपादनुपरोधमदनकदनपरिदह्यमानस्तद्दशामप्यतिवर्तमानां दुर्दशामभजत। ततश्च–

**खिन्दानमातृविनिवेदितबालिकार्तिः**
**सन्तापमप्यधिकमिन्द्रसुतस्य जानन्।**
**आप्तैर्मितैः समुपमन्त्र्य रहोविवाह-**
**माश्वासयत् स्वपितरौ निभृतं मुकुन्दः ॥१०४॥**

पुनरप्ययमुपायसागरः सागरशायी यदुसभायामेवमवादीत्–

**शान्ता नश्चिरकालमुत्सवरसाः सम्प्रत्युमेशोत्सवै-**
**र्द्वीपेऽन्यत्र दिनानि तावदधिकत्रिंशानि रंस्यामहे।**
**स्वाभीष्टैर्विभवैः समं यदुजनास्तत्रौग्रसेनादयः**
**सर्वे यान्तु सुखाय निःसुखरसान् मर्त्यान् पशून् मन्महे ॥१०५॥**

इत्यभिहितेषु मुदितेषु सकलभोजवृष्ण्यन्धकेषु सम्भृतसन्नाहेषु सुपृथुसौहृदं विपृथुनामकं निभृतमुदितवान् भगवान्–

**सर्वैं यान्त्यधुनान्तरीपमपरं त्वं द्वारकानिर्गम-**
**द्वारे रैवतके निवेश्य पृतनां त्रायस्व तावत् पुरीम्।**
**अन्ते क्वापि दिने निरेष्यति पुराद् भद्रां हरन्नर्जुन-**
**स्तं किञ्चित् प्रतिरुध्य मुञ्च च जवाद् दत्त्वा मदीयं रथम्॥१०६॥**

इति। ततश्च–

**रामादिभिः सह गतो यतिमाह देवः**
**प्राप्तो महोत्सव इहाम्बुधिमध्यतो नः।**

यामो वयं विजनमित्ययि मास्तु खेदः
सा माधवी ननु वशेऽत्र समर्पिता वः ॥१०७॥

इति। तदनु च–

जिगमिषुमवगम्य भ्रातरं तापताम्य-
त्तनुरपि तदुपान्तं प्राप्य बाला कथञ्चित्।
व्रजति सकललोकः कृष्ण! योगीन्द्रमेनं
कथमिति गुरुलज्जारुद्धकण्ठी जगाद॥१०८॥

माधवोऽपि सान्तः स्मितं सान्त्वयन्निमामवादीत्–

सम्पादितं ननु यदत्र मया विधेयं
भूयस्त्वमेव भज भीरु यथेष्टमेनम्।
ज्ञातं त्वया च चिरसंवसनात्तदिष्टं
नास्मासु कश्चिदित ऊर्ध्वमिहास्ति भारः ॥१०९॥

इति वचसा निजभ्रातुरनुमतिमवगम्य प्रसन्नायां कमन्यां सोऽपि खलु कुरुसिंहकेलीवनायिते पुरे कतिपयानेव रक्षकान् निक्षिप्य रैवतकरक्षिणामत्याहिते सति महाभेरीं निनादयेति सभापालमपि प्रभाष्य सञ्चारितपाञ्चजन्यध्वनिः संचचाल चञ्चलाक्षीसञ्चयैः सह वञ्चनामनुजः।

ततो हैमहलिकेन नैलाम्बरिकेण रामेण शेखरिताग्रभागा देवकीरोहिणी प्रमुखस्त्रैणानुगतवसुदेवोग्रसेनप्रमुखराजन्यकराजपुत्रकानुगामिमानुष्यकसम्मिलित-वात्सकवार्द्धकयौवतसर्वतोनिरुध्यमानहरित्तटाः प्रत्येकप्रत्याहृतप्रत्यग्रविविध-भूषणाम्बरपेयखाद्यादिसकलपरिच्छदपरिच्छुरितैः समुच्छ्रितपताकाश-तच्छायापरिच्छादितदिगन्तरैः निरन्तरपातिभिः नैकविधनौकासहस्रैः स्थलपथायितजलनिधिमार्गाः साङ्घोषिणेनोपेत्य दशसप्तयोजनायाम-विस्तारेऽस्मिन् महाद्वीपे तत इतो घटितपटकुटीसहस्राः कृष्णरामका यदवश्चातुस्त्रिंशद्दिवसिकं छन्दस्योत्सवमुदजुघूषन्।

ततश्च रहीभूतायां यदुनगर्याम्–

किमपि विगलदन्तःसञ्ज्वरा मञ्जुगात्री
यतिमभजत गाढव्रीळिता चोत्सुका च
स च गलितनिरोधां वीक्ष्य कान्तां न सेहे
कुचयुगपरिरम्भे चुम्बने वा विलम्बम् ॥११०॥

तथा पुनर्द्वित्रिदिनेषु तत्र हि
व्रजत्सु पर्युत्सुकचेतसोस्तयोः।
कदापि तां पार्श्वगतां निशामुखे
जगाद पार्थो मदनार्तिमूर्च्छया॥१११॥

नाथे माधवि! मन्मनो न सहते दूरे च नौ बान्धवा
गान्धर्वं विधिमेव मानय ततस्त्रायस्व मे जीवितम्।
मैत्रो नाम मुहुर्त एष शुभदः प्राप्तश्च किं मन्यसे
नो चेदद्य कृशाङ्गि मन्यथहतो हा हन्त कुन्तीसुतः ॥११२॥

इति निशम्य गिरं दयितस्य सा
स्वजनभीरूरवेपत चेतसा।
नतमुखी च विधेयमजानती
स्थितवती कलिताश्रुभरा दृशोः ॥११३॥

सा भ्रातरं भुवनसाक्षिणमेव तावत्
सस्मार सस्मरविषादभया दयालुम्।
पार्थोऽपि तद्विवशतामवलोक्य धीमा-
नन्तश्चिचिन्त पितरं त्रिदशाधिनाथम् ॥११४॥

तावन्मद्यान्धनिद्रायितमुसलिमुखान् वञ्चयन् वल्लभाभ्यां
द्वाभ्यां मातापितृभ्यां त्रिचतुरयदुभिश्चागतो वासुदेवः।
इन्द्राण्या साकमिन्द्रोऽप्यमरमुनिगणैरप्सरोभिः समागात्
प्रव्याप्तैर्दिव्यभाभिः शिव शिव दिवसम्मन्य आसीन्निशीथः
॥११५॥

ततः प्रमोहार्णवादुत्तीर्य प्रमोदार्णवाततीर्णयोः सुभद्रापार्थयोः परस्परसङ्गमपरिप्रीतेषु हरिप्रेयसीमुखदिव्यमानुषजनेषु समोदसम्भार-मम्भोरुहाक्षसम्भाविते दम्भोलिपाणौ सम्पादितकन्याप्रार्थनकृते स्वप्रियसुतं सप्रहर्षमालिङ्ग्य दिव्यलोकाहृतमणिमुकुटकटकाङ्गदहार- दुकूलाद्यैः स्वयमेव विभूषितवति शाश्वततपसि काश्यपमुना- वाश्रितहोमकर्मणि कर्मसाक्षिषु च नारदादिषु कुशलतमरम्भादिरम्भोरूसहितया जम्भारिदयितया निजभूषणविभूषिताङ्ग्याः स्वकान्त्या सुरसुन्दरीवृन्दमपि मन्दयन्त्याः समनुरुन्धतीप्रमुखमुनिप्रियाजनसमानीताया जगन्नाथसोदर्याः कुरुकुललक्ष्मी-निवासाम्बुजं कराम्बुजं संजगृहे सकौतुकानन्दो महेन्द्रसूनुः।

सौवस्तिकाः सुरमुनिप्रवरास्तदानीं
रम्भाशचीप्रभृतयश्च सखीविधेये।
देवेश्वरो घटयिता भुवनेश्वरोऽपि
दाम्पत्यमेतदिह नन्वगणेयभाग्यम् ॥११६॥

पूर्वं शचीमघवसङ्घटनात् परस्ता-
न्नालोकिता वरवधूरुचिरीदृशी नः
इत्थं प्रशंसनपरा सुरसिद्धसङ्घा-
स्तस्थुस्तदा नयनपूरितहर्षबाष्पाः ॥११७॥

एवंमभूतपूर्वे वृत्ते नातिविदिते विवाहोत्सवे,

शक्रोऽसौ चिरदृष्टपुत्रविरहक्लेशात् कथञ्चिद् ययौ
पुत्रं द्रक्ष्यसि खाण्डवे ध्रुवमिति स्मेरोऽगमन्नारदः।
गोविन्दोऽपि सखं वसन्निह सुखं गच्छोत्सवन्ते रथी
चापी द्रक्ष्यसि मां कुरुष्विति वदन् द्वीपं गतः सुप्तवान्
॥११८॥

एवं नाम कृतार्थयोरतिरहः कन्यापुरावासिनो-
राळीलाळितयोस्तयोः स ववृधे लज्जाविमिश्रो रसः।
यस्मिन् नूतनमेव जातमखिलं यत्र क्षणा वासराः

प्रत्यासन्ननिवास एव परमो यस्मिन्नभूदुत्सवः ॥११९॥

वक्त्रालोकनकौतुके नतमुखीमालापलीलारसौ
प्रस्तावेषु च मुग्धहासकलिकामात्रेण दत्तोत्तराम्।
आश्लेषे सदये मनागिव तनुं व्यावर्तयन्तीमसौ
वैलोम्येऽपि विलोभिनीं प्रियतमामानन्दवानन्वभूत् ॥१२०॥

क्रमेण विगलत्रपां किमपि दत्तकण्ठग्रहा-
मसंवृतकुचद्वयामनपनीतबिम्बाधराम्।
स्वयं प्रतिदिनं पुनर्मदनशासने वर्तिनीं
निशासु स यथासुखं समनुभूतवान् माधवीम्॥१२१॥

एवं प्रतिकलं तत्र वर्धमाने स्मरोत्सवे।
महोत्सवस्तु वृष्णीनां प्रायशोऽवधिमाययौ ॥१२२॥

तावत् प्रस्थानकाम्यत्प्रियतमवचसा राजपुत्री व्रतान्त-
व्याजादाराद्धविप्रा रथमिषुभरितं प्राग्रहीदौग्रसेनम्।
सूताभावादथास्मिन् किमपि परवशे शौरिणां शैशवेऽहं
सारथ्ये शिक्षितास्मीत्यवददियमयं विश्वभर्त्रे ननाम ॥१२३॥

ततश्च,

बिभ्राणं शक्रदत्तं मणिमकुटवरं कान्तया यन्तृमन्तं
सख्या चाधूतबालव्यजनमथ रथे वीक्ष्य पार्थं प्रकाशम्।
भद्रे भद्रासि वीरप्रवरवरणयेत्यङ्गनौघे सघोषे
कन्यागेहात् प्रतस्थे झटिति जलधरक्रन्दनस्यन्दनोऽयम्॥१२४॥

गृहीताभिहतेति गोपुरमुखात् संप्रेक्ष्य रक्षाभटान्
धारावर्षमवर्षदेष परितो निःशङ्कगामी शरान्।
साले गोपुरवेदिषु ध्वजशते वृक्षेषु लक्षोत्तरं
प्रोत्खाता विशिखा भयार्दितजना गात्रं न किञ्चित् क्षतम्
॥१२५॥

एवं निरुच्छ्वसितमूर्च्छितरक्षिलोके
प्रक्षोभ्य सर्वमभिरैवतकं गतेऽस्मिन्।
वीरेषु केऽप्यनुसृताः किल तस्य किञ्चित्
सिंहावेलोकितवशेन पराद्रुताश्च ॥१२६॥

ततो रैवताद्रिपथमारोहन्तम्-

अमुं सुभद्रासखमात्तचापं
रथोद्गलद्गर्जितघोषिताशम्।
सचापमम्भोदमिवापतन्तं
न सेहिरे ते गिरिपालसिंहाः ॥१२७॥

तत्र च ससिंहनादमुत्क्षुभितेषु तेषु सैन्येषु निराकुला मुरारिसोदरी दयितमेवमवादीत्–

पार्थस्य युद्धेऽपि यथा नियोक्ष्यसे
रथं तथा शिक्षय माधवीति माम्।
जगाद बाल्ये स हि मे सहोदर-
स्तदद्य युद्धे तव कौतुकिन्यहम् ॥१२८॥

इत्थं प्रियानिगदितो मुदितोऽयमूचे
सम्पूरयामि तव कौतुकमम्बुजाक्षि!।
योत्स्येऽद्य दारुणतरं न च हन्मि सेनां
धानुष्कतां मम विलोकय चोदयाश्वान्॥१२९॥

इति गदितया तया प्रचोदितेषु हयेषु प्रलयसलिलप्रवाहप्रायं पुरतः प्रतायमानैरानर्तयौधसहस्रैर्विमुक्तशक्त्यृष्टितोमरकळम्बककदम्बकनिरन्तरीकृते दिगन्तराळे धनञ्जयोऽपि निजभुजदण्डकुण्डलितचण्डकोदण्डहिण्डित-शरषण्डखण्डितसकलास्त्रमण्डल एव प्रत्येकं प्रत्यर्थिवीरानपि शरशतैः समावृणुते स्म।

दृष्टा येऽर्धपथस्पृशः प्रकटितज्याबन्धमोक्षाश्च ये
ये चापेषु समर्पिताः करतले सन्धित्सया ये धृताः।

तूणीरादसमग्रकृष्टवपुषो ये तच्च द्विषां सायकाः
छिद्यन्ते स्म शरैरनेन रभसा ते ते तथैव स्थिताः ॥१३०॥

अनन्तरं च युगबन्धखण्डनस्वस्थकायरथ्यतुरङ्गान् शकलितध्वज-वरूथरथाङ्गशताङ्गान् इषुदण्डपोथनपातितसादिनिषादिवीरान् विशीर्यमाण-पर्याणकुथानपि तुरङ्गमतङ्गजसङ्खान् पदातीनपि तत इतो दलितनिपतदुरस्त्रशिरस्त्राणश्रेणीन् कटकवलयकुण्डलखण्डनखणत्कार-खेदितकर्णपुटान् खडिति खण्डितखड्गलतांस्त्रुडिति त्रुटितचापतोमरा-लक्षतशरीरमात्रशेषानकरोन्महावीरः।

विकीर्णभूषामणिशोणभासं
शिरस्त्रवर्मादिदुकूलखण्डाम्।
अशोणितामप्यवनिं समन्तात्
सशोणितेति भ्रमयाम्बभूवुः ॥१३१॥

अन्योन्यपाटवालोकप्रमोदगलितत्रपौ।
आलिलिङ्गतुरुन्मुक्तरश्मिचापौ वधूवरौ ॥१३२॥

ततश्च,

सारथ्यखेदालसगात्रवल्ली
सा बाहुमंसे विनिवेश्य सख्याः।
प्रियेण सत्पल्लववीज्यमाना
क्षणं रथान्ते निषसाद तन्वी ॥१३३॥

तदा विपृथुरागतः समुपगुह्य तं मानयन्
प्रशस्य रणनैपुणीमदिशदच्युतस्यन्दनम्।
प्रसिद्धहयशालिना मणिरथेन तेन द्रुतं
जगाम स च पाण्डवो यमितसैन्धवः कान्तया ॥१३४॥

तदनु च,

विजित्य नः पर्वतदुर्गपालकान्
कुरूत्तमो यात्यपहृत्य माधवीम्।
इतीरितो मङ्क्षु भटैः सभापति-
र्जघान भेरीं प्रलयाम्बुदस्वनाम् ।।१३५।।

ततः कर्णरूक्षभेरीरवाकर्णनसरभसापहस्तिततसामिभुक्तपेयखाद्यादि-सम्भारेषु जृम्भितामर्षप्रकर्षविकर्षितनौकासहस्त्रक्षणलवोत्तीर्णमहार्णव-निवेदितदुश्च्यवनसुतदुश्चेष्टितश्रवणसम्भूयस्यद्रोषभारात् सम्भूय समुत्पतत्सु सकलवृष्ण्यन्धकयदुवीरेषु आद्रवत प्रहरतां गृह्णीत बध्नीतां लुनीत मृद्नीतां कृन्धिविचक्षणां कृन्तविचक्षणां च घोषणां कुर्वत्सु कवचः; कवचो धनुर्धनुरिति वादिषु रोषाक्रान्तोऽपि स्वयं सीरपाणिर्माशब्दिको भूत्वा बभाषे—

सर्वे तिष्ठत वृष्णयो मधुरिपुं पृष्ट्वैव कुर्मोऽखिलं
कृष्ण! क्वासि पुरस्त्वया कथमिदं नालोचितं धीमता।
ज्ञात्वा वाथ निगूहितं कथय मे सत्यं श्रुते त्वन्मते
कन्याचोरममुं खलं हलमुखप्रोतं करिष्याम्यहम् ।।१३६।।

एकेन वा किमिह पाण्डवकीटकेन
भीमादयोऽपि मुसलाभिहतिं सहन्ताम्।
दृष्कौरवापशदधिक्कृतिदीपितात्मा
निष्कौरवां धरणिमद्य बलः करोति ।।१३७।।

इति वदतस्तस्यैवानुवदमानेषु परस्सहस्त्रेषु यदुषु सस्मितमुखो जगाद वासुभद्रः—

सम्भूयैव पुरीं स किं न गमितो नाहं प्रमाणं तदा
पश्चादुत्सविनः सहैव हि वयं किं नान्तरीपे स्थिताः।
तत्किं पृच्छसि मां ध्रुवं स विजयो याच्ञाविधौ लज्जितः
प्रत्यक्षाहरणे च बन्धुकदनाशङ्की जहार च्छलात् ।।१३८।।

तदेत्य सम्मानयताशु पाण्डवं
पराजयादत्र वरं तदेव वः।
इतीरिता अप्यनतिक्षतक्रुधः
सम्मानसङ्ग्रामसमं प्रतस्थिरे ॥१३९॥

श्रुत्वा प्रस्थानभेरीं पथि कुरुवृषभः सोऽपि वीरस्वभावाद्
रोषाक्रान्तो बभाषे कुरुमहिषि रथं तूर्णमावर्तयेति।
भीमत्या वृष्णिपुत्र्या चरणनिपतनात् सान्त्वितः शान्तरोषः
कान्तासारथ्यधावत्तुरगरथजवादाशु दूरं प्रपेदे ॥१४०॥

ततः ससन्नाहाः पौरस्त्यगोपुरसरण्यां विनिःसरन्तो हलिपुरःसरा यदवः श्येनयागमिव शरगणास्तीर्णवेदिभागं, पुष्पसमयमिव शिलीमुखपूरितसालं, विष्णुरथमिव पत्रिवराक्रान्तकेतुदण्डं, विशिखात्मकमपि सकलविशिखाप्रदेशं, सर्वतः शरलक्षलक्षीकृतमपि रक्षिजनदर्शितविलक्षभावं, गोपुरदेशमप्यतिविस्मापनमालोक्य हरिवचसि किमपि जातप्रतिपत्तयः पुनरपि रैवतकान्तमासरन्तस्तत्र च शरशकलितशताङ्गशतशकलसन्ततिदन्तुरितान्तराम्, अन्तरान्तरा कुन्तखड्गशतनिशातशकलसञ्चयदुःसञ्चराम् उपर्युपर्यापतित-पर्याणपट्टोष्णीषकवचखण्डकोमलतया जयश्रीकेलिशय्यासमानाम्, अमांसशोणिताम्, अदृष्टश्रुतपूर्वामाहवभूमिमालोक्य विस्मयबहुमान-प्रशान्तरोषभारा विपृथुनाप्युपगम्य दूरगतोऽधुना कौरव इत्यावेदिता हरिवचनं हरितनयमपि मनमा मानयन्तो गर्वात्ययसव्रीडचेतसः सर्वेऽपि सान्तस्मितमाधवाधिष्ठितां कुशस्थलीमेव प्रतिपेदिरे।

एवं वृन्दे यदूनां गतरुषि समनुज्ञापयन्नुग्रसेनं
सार्धं सङ्कर्षणाद्यैः सकलयदुवरैः सत्यभामासमेतः।
सैन्यप्रक्षोभिताशो बहुहरणधनाक्रान्तचक्रीवदुष्ट्री
चक्रैश्चक्री स शक्रात्मजनिजभगिनीमाननार्थं प्रतस्थे ॥१४१॥

पार्थश्चासौ लङ्घिताध्वा सुखेन
क्रोशे पुर्याः प्राप्य गोपालवाटीम्।

मार्गश्रान्तिं शान्तिमानीय कान्ता-
मूचे किञ्चित् सान्त्वयन्नङ्कशय्याम् ॥१४२॥

कल्याणगात्रि शृणु सा खलु पार्षती त्वां
सद्यो मया सह गतां न सहेत नूनम्।
पूर्वोदितं च हृदि मुञ्चति सा न किञ्चित्
तद् गोपिकाकृतिरुपेत्य च मानयैनाम् ॥१४३॥

इत्थं प्रियेण गदिता वरवार्णिनी सा
पीताम्बरस्य भगिनी धृतपीतचेला।
गोपीजनैः सह गता खलु याज्ञसेनीं
प्रेष्यास्मि ते यदुसुतेति मुदा ववन्दे ॥१४४॥

सम्प्रीतयापि च तया बहुलम्भिताशीः
सम्प्राप्य साथ च ननाम पितृष्वसारम्।
प्राप्ता मुकुन्दसहजा किल पार्थपत्नी
पार्थेन साकमिति तत्र महोत्सवोऽभूत् ।१४५॥

पार्थो वल्लववाट एव मिलितः कृष्णादिवृष्णीश्वरै-
रिन्द्रप्रस्थमगात् समर्हणवलत्सोदर्यपर्याकुलम्।
किञ्च श्रीधरदत्तयौतकधनैर्नागाश्वरत्नादिभिः
पूर्वस्माद् ववृधे शताधिकतरं तत् पाण्डवानां पुरम् ॥१४६॥

तत्र च पुरे सुहृत्सम्भावनमहोत्सवमयेषु बहुषु दिनेषु गतेषु,

बलमुखयदुमण्डले प्रयाते
वसति च तत्र हरौ स शक्रसूनुः।
यदुवरसहजाकुचाङ्कुरे च
द्रुपदसुताकुचमण्डले च रेमे ॥१४७॥

इति सुभद्राहरणप्रबन्धःसमाप्तः।

# कौन्तेयाष्टकप्रबन्धः

कौन्तेयानवबुध्य सिध्यदशनोपायान् कुरुणां पतिः
श्रीदुर्वाससमेकदा कुटिलधीरामन्त्र्य नागाह्वये।
शिष्याणामयुतेन सार्धमधिकप्राज्यैः स भोज्यादिभिः
पूज्यं तं समबीभवत् स च मुनिस्तुष्टो वरं पृष्टवान् ॥१॥

धर्मात्मा ननु धर्मजः कुलपतिः सोऽस्माकमास्ते वने
तस्याप्येवमनुग्रहार्थमुटजं यायाः कुलश्रेयसे।
एतावानधुना यतीश्वर वरः किन्त्वत्र खेदासहा
पाञ्चाली क्षुधया न सीदतु तया भुक्ते ततो गम्यताम् ॥२॥

इत्थं पार्थिवकेतुनार्थितवरः शिष्यैः समेतो मुनि-
र्दिव्यज्ञानविलोकितद्रुपदजाभुक्तिः स मध्यन्दिने।
अष्टाशीतिसहस्रतुष्टसुजनश्लिष्टान्तिकं धर्मजं
प्रापत् सोऽपि च तं ननाम मघवा साक्षादिव त्रीक्षणम् ॥३॥

अत्यौदार्यनिधिस्तु धर्मतनयः साध्वेव माध्यन्दिनं
कृत्वागन्तुममुं दिदेश महिषी भुक्तेत्यनालोचयन्।
तावत् संभ्रमसङ्कुला सुमहतः शापानलाच्छङ्किता
कृष्णा हा बत दावरुद्धहरिणीदुःस्थामवस्थां दधौ ॥४॥

तप्ता साथ पुनस्तमेव शरणं मत्वा जगन्नायकं
प्राग् दुःशासनदौष्ट्यदृष्टकरुणावेगं निजं दैवतम्।
हा शौरे परिपालयेति चरणौ तस्यैव सेयं दृढं
ध्यायन्ती क्षणमात्रमास्त ददृशे तावत् त्रिधामा पुरः ॥५॥

प्रोक्तो वार्तां धृतार्त्या बत नृपसुतया क्षुध्यते लब्धमन्नं
महां देहीति शंसन्नधिकविवशया प्रोक्तसर्वान्नहानिः।
स्थालीलग्नं स शाकप्रति किल समुपानाय्य तद् विश्वमूर्ति-
र्भुक्त्वा तृप्तोऽस्मि सोऽहं सखि सपदि मुनीनाह्वयेत्यादिदेश ॥६॥

तावद् वेलागतास्ते नृवर शिवशिवार्णोगताः पूर्णपूर्णा-
स्तूर्णं तीर्णक्षुधोऽमी वयमयि जय जीवेति तोषोत्थघोषाः।
योगीन्द्रा व्यर्थपाकोदयचकितधियः प्रद्रुतं विद्रुतास्ते
वृष्णीशो विश्वसाक्षी नृपतिमपि भृशं प्रीणयित्वा तिरोभूत् ॥७॥

अतर्क्यतृप्तेः प्रविचिन्त्य हेतुं
व्रजन् मुनिर्दिव्यदृशा विदित्वा।
ननाम कृष्णं प्रशशंस कृष्णां
नृपं च तं कौरवमप्यनिन्दीत् ॥८॥

इति कौन्तेयाष्टकप्रबन्धःसमाप्तः॥

# किरातप्रबन्धः

कृते च किर्मीरवधे बकारिणा
वनं गतः काम्यकमस्तकण्टकम्।
युधिष्ठिरो धौम्यमुखैः सह द्विजैः
स्थितिं व्यधाद् द्वैतवनान्तिके चिरम् ॥१॥

युधिष्ठिरः सत्यवतीसुतान्मुने-
रवाप्य विद्यामरिनिर्जयोत्सुकः।
जिष्णुं समाहूय वचः समाददे
पुरद्विषः पाशुपतास्त्रलब्धये ॥२॥

गान्धारीतनयस्य निर्घृणतया राज्यं न नो दीयते
भीष्मद्रोणपुरोगमैर्नृपगणैः सार्धं विरोधो भवेत्।
तस्मादर्जुन! दुर्जनान्तकर! ते स्वस्त्यस्तु गत्वा गिरिं
बाणं पाशुपतं ग्रहीतुमधुना मारारिमाराधय ॥३॥

गुरोरनुज्ञामधिगम्य भूयः
समेत्य कैलासगिरेः समीपम्।
हरं समाराधयितुं यतात्मा
धनञ्जयस्तत्र तपश्चकार ॥४॥

फलेन पर्णेन जलेन वायुना
स्थितिं शरीरस्य स कल्पयन् क्रमाद्।
उपोढकार्श्योऽधिकनिर्मलोन्वहं
बभूव पक्षे बहुले यथा शशी ॥५॥

ततः सर्वान् परित्यज्य नियमान् मुनिसेवितान्।
स तु पञ्चाग्निमध्यस्थः पदाङ्गुष्ठाग्रविष्ठितः ॥६॥

इन्द्रियपञ्चकतुरगा-
निन्द्रसुतो हृदयमन्दुरानिलये।
चन्द्राभरणस्तम्भे
हन्त बबन्धाशु धैर्यपाशेन॥७॥

अहं शिवः शिवः सर्वं सर्वं सोऽहमहं शिवः।
शिवादन्यज्जगत्यस्मिन् न किञ्चित् प्रतिपद्यते॥८॥

उदग्रतेजोभिहतैर्महर्षिभि-
र्निवेदिते तादृशि सव्यसाचिनि।
तपश्चरन्तं तमनन्यदैवतं
विज्ञापयामास गिरीशमम्बिका॥९॥

देवो लोकशिवंकरः खलु शिवो देवेन्द्रसूनोरपा-
स्योद्यद्दर्पभरं वरानभिमतान् दातुं विरोधिच्छिदः।
कैरातं वपुरास्थितः स्थिरचरौघात्मा कृतात्मोत्तमं
गन्तुं प्रक्रमते स्म विक्रमनिधिं चाखेटकूटेन तम् ॥१०॥

देवी देवं सोमचूडं निकाम-
प्रेमा सोमा प्राप्तकैरातवेषम्।
प्रेक्ष्य प्रेक्ष्यं तत्सदृक्षं तदानी-
मूरीचक्रे चारु रूपं शबर्याः ॥११॥

केचिद् भूताः प्रभूता कटुतरघनबुक्कारवाः कुक्कुरौघा
जाताः कोदण्डरूपाः कतिचन कीतिचिद्वागुराभाररूपाः।
तद्दण्डाः केऽपि पाशाः कतिचन कतिचिद्वागुराद्यं बहन्त-
श्चान्ये चापेषुदोषः पुरहरमनुजग्मुः पुलिन्देन्द्रवेषाः ॥१२॥

तदनु परमकारुणिकः स खलु परमेश्वरः परिगृहीतशबरराजाकृतिः परिलसितबर्हिबर्हबन्धबन्धुरकेशभारः ताम्रतरश्मश्रुनेत्रयुगलातिभीषण-मुखपुण्डरीकः काचमयगुञ्जामयदामनिकरविराजितवक्षोभागः शङ्ख-वलयालङ्कृतकरतलकलितकार्मुकबाणसञ्चयः सितेतराम्बरपरि-कलितकमनीयकटीतटदेशः चरणविन्यासाकम्पितधरणीमण्डलः तदनन्तरं तदभिवीक्ष्य ससम्भ्रममशेषजगत्सवित्र्या गोत्राराजपुत्र्या सत्रा गोत्रारिनन्दनमनुजिघृक्षुः गिरीशादयं गिरिशः प्रतस्थे।।

**एवम्भूतैर्भूतजातैः परीतो भूताधीशः प्रस्थतः प्रस्थितोऽसौ।**
**श्वेताहार्यस्यार्ययावार्यघोषं तेने कूटाखेटमेषोऽटवीषु ॥१३॥**

अनन्तरं च सरभसमत इतो गजयूथपतिविलुलितकमलिनीपरिमलः इतः क्रोडकुलदृश्यमानमद्रमुस्तारसामोदः इतः करिकलभभज्यमानसल्लकीक-षायगन्धः इतो निपतितशुष्कपत्रमर्मरध्वनः इतो वनमहिषविषा-णकोटिभिद्यमानवल्मीकधूलिः इतो मृगकदम्बकम् इतो वनगजक्रन्दितम् इतः शिखण्डिकुलविरुतम् इतः कपिञ्जलकूजितम् इयमार्द्रपङ्कमलिना वराहपद्धतिः इयमभिनवशमरसश्यामला हरिणरोमन्थफेनविन्दुसंहतिः एषा प्रत्यग्रप्रसूतमृगीगर्भरुधिरलोहिनी भूमिः चमरपङ्क्तिरियम् अनुगम्यता-मुच्छुष्कमृगकरीषपांसुला त्वरिततरमध्यास्यतामियं वनस्थली तरुशिखरमारुह्यतामालोक्यतां दिगियमाकर्ण्यतामयं शब्दः गृह्यतां धनुः अवहितैः स्थीयतां मुच्यन्तां श्वानः इत्यन्योन्यमभिवदतो मृगयाप्रसक्तस्य महतो जनसमूहस्य तरुगहनानीतविग्रहस्य क्षोदितकाननः कोलाहलोऽभवत्।।

**आपादलम्बिजटमातपमात्रभक्ष-**
**मूर्ध्वीभवद् भुजमुदारतपः कृशाङ्गम्।**
**दृष्ट्यानुगृह्य कुरुवीरमुनीन्द्रमेवं**
**त्रैधा बभूव सुतवत्सलता भवान्याः ॥१४॥**

**संक्रन्दनात्मजनुषा सह संप्रहारे**
**संक्रीडितुं कुतुकवानुडुराजचूडः।**

संघर्षसंघटनकारणमिन्द्रसूना-
वङ्कूरयन् क्षणमसौ वनसीम्नि तस्थौ ॥१५॥

एतस्मिन्नन्तरेऽतर्कितसमुपगमश्चोदितो धार्तराष्ट्रैः
पार्थव्यापादनाय प्रकटितविकटस्तब्धरोमस्वरूपः।
भिन्दन्नुग्रैः खुराग्रैः क्षितिमवसरलाभोद्भवद्भूरिहर्षो
मूकाख्यः कोऽपि दैत्यः सपदि गतभयस्तत्प्रदेशं जगाहे ॥१६॥

निध्यायोद्धतमिद्धरोषमभियं तं चाभियन्तं सुतो
वृत्रारेर्न तु वन्य एष नियतं घोराकृतिः सूकरः ।
दैत्यः कोऽपि जिघांसुररंसलतमो मा याति मायाहित-
क्रीडाकारमिमं नयामि यमधामेत्याददे कार्मुकम् ॥१७॥

विशिखो विजयेन वेगतोऽस्तः
शबरेणापि च पोत्रिणेऽभेदम् ।
व्यतनोदतनोः पपात चासौ
विपुलायां विपुलारवः परासुः ॥१८॥

तमुद्ग्रहीतुमुद्युक्ते तस्मिन् मार्गति मार्गणम्।
सचापः कोऽपि शबरस्तमुपेत्येदमब्रवीत् ॥१९॥

सविधगहनवर्ती भूधरेन्द्रस्य भर्ता
नृवर! शबरराजः प्रेक्षितुं काङ्क्षते त्वाम् ।
अपरिमितमहिम्नस्तस्य भृत्यं विवक्षुं
कमपि समुपयातं विद्धि मां तन्नियोगात् ॥२०॥

तदीयशररंहसा हतमवेहि चैनं मृगं
लघीयसि तवाशुगे कथय शक्तिरीदृक् कुतः।
महत्तरमहीधरप्रवरपक्षविच्छेदने
पविः प्रभवति स्वयं न खलु तूललेशः क्वचित् ॥२१॥

लक्षं तस्य चमूपतेरपहृतं तावत् त्वयास्तामिदं
संरक्ष्यः कृतमन्तुरप्यशरणः क्षुद्रो हि लोकोत्तरैः।
बाणं तु प्रणिपत्य देहि शमयन् कोपं प्रमादोद्भवं
नो चेदत्र तपस्यितुं क्षणमवस्थातुं च सर्वत्र वा ॥२२॥

हंहो क्षुद्र! किरात! वस्त्वविदिते तुभ्यं मृगेभ्यः परं
मादृक् कुप्यति को नु शौर्यविभवो मांस्याकमात्राशिने।
अस्मद्बाणमनन्यदृश्यमहिमाभोगं त्वया लिप्सुना
तत्तूक्तं परुषं तदुत्तरगिरां दातायमेव क्षमी ॥२३॥

किञ्चाधुना तपसितात्र वने विविक्ते
नेच्छामि वोऽभिगमवीक्षणभाषणानि।
तद् गच्छ सत्वरमितोऽथ न चेदिदानीं
सज्यं धनुः करधृतं विशिखं च तीक्ष्णम् ॥२४॥

निरस्यथा मा कुलमस्मदीयं
कस्मिन् कुले जाल्म पितामही ते।
तातस्य जातेति वदावदं त-
मपोढवानस्त्रबलेन पार्थः ॥२५॥

आरादस्त्राभिभूते झटिति विलुठति भ्रान्तचित्ते स्वभृत्ये
गूढामोदः किरातेष्वधिपतिरभिनीतोग्रसंरम्भजृम्भः।
विष्वद्रीचीं विकर्षन् विसृमरविविधध्वानरुद्धाखिलाशां
पौलिन्दीं वाहिनीं तां वलमथनभुवः सन्निधिं सम्प्रपेदे॥२६॥

रे क्षुद्रात्मन्! किरात! श्वगणपरिवृतः क्षुल्लकैः सार्धमेभि-
र्मार्गन् मार्गाण्यभीक्ष्णं गिरितटभुवि नो वेत्सि वृत्तानि राज्ञाम्।
अज्ञात्वा तत्त्वतो माममरपुरवधूगीयमानापदानं
युद्धायासि प्रवृत्तः फलमनुभव तस्याविवेकस्य सद्यः॥२७॥

रे क्षुद्र! क्षितिपतिवंशकीट! साक्षात्
कर्तारं जगदवगच्छ साम्प्रतं माम्।
यद्वंशं व्यपदिशसि स्फुटं तमेनं
जानामि प्रकटकलङ्कबंहिमानम् ॥२८॥

पारस्त्रैणेयं च तस्यात्मजं तं
जनाम्येव त्वादृशां वंशबीजम्।
तद्वंश्यानां वेद्मि मुख्यं ययातिं
विप्रस्त्रीं तां योऽभिकः पर्यगृह्णात् ॥२९॥

तद्वंश्यस्य च शन्तनोर्नचरितं केनेह विज्ञायते
यस्तां दाशपतेरुपायत सुतां कामातुरः पुंश्चलीम्।
तत्पुत्रस्य सुतं च गोलकममुं जानामि पाण्डुं पुन-
र्युष्मान् पञ्च तदात्मजांश्च सुतरां जानामि कुण्डानिमान्
॥३०॥

अथ किमपि रहस्यं त्वाद्य पृच्छामि कस्मा-
न्नृपदुहितरमेकां पञ्च पर्यग्रहीद्वम्।
भवतु परमपीतः संप्रदास्ये चतस्रः
परिणयत किरातीः साधु मां प्रार्थयस्व ॥३१॥

मध्येराजसभं हठेन भवतामग्रे ननु प्रेयसीं
पत्नीं हन्त! नमः शिवाय! रिपुभिस्तावत् तथा क्लेशिताम्।
नेत्राभ्यामवलोकयन् यदभवस्तूष्णीं ततो ज्ञायते
विक्रान्तिस्तव तादृशो यदि यशस्त्रैलोक्यमाक्रामति ॥३२॥

तिष्ठत्वेतदशेषमेव बहुमन्तव्यं पुनस्तावकं
वृत्तं वेद्मि विशिष्टसेव्यमुचितं बुद्ध्वा यदासेवसे।
छेत्ता ब्रह्मशिरः श्मशानवसतिर्दक्षाध्वरध्वंसको
भूतप्रेतपतिः स पश्यतु भवान् केनापरेणार्च्यते ॥३३॥

प्रणिन्दनं त्रिपुरवधूमदच्छिदो
जगत्पतेर्निशमयतः किरीटिनः ।
हृदि क्षणादधरितकल्पपावकः
प्रवर्धते प्रतिघहुताशनः पुरा ॥३४॥

रे रे मांसिकपाश! यत् त्वमधुना चन्द्रस्य वन्द्यं कुलं
साक्षान्निन्दसि गर्हसे यदपि नः सर्वं तदेतत् सहे।
यत् त्वेवं त्रिपुरद्रुहो भगवतः कुत्सां विधत्सेतरां
तच्छ्रोतारमहो धिगद्य बत मां धिग् गाण्डिवं हा शरान् ॥३५॥

इत्थं वाग्भी रुषितहृदयौ व्याधराजेन्द्रसूनू
गर्जन्तौ तौ कलुषितदृशौ भ्रूकुटीभीषणास्यौ।
तावत् तीक्ष्णैरतिशितशिखैः सायकैः पीडयन्ता-
वन्योन्यं तौ निखिलभयदं चक्रतुः सम्प्रहारम् ॥३६॥

कारुण्यपूरमृदुलेन हृदा किरातो
रोषातिरेककलुषेण च पाण्डुसूनुः।
अल्पं महान्तमपि विक्रममादधाना-
वातेनतुश्चिरतरं समरं समानम् ॥३७॥

अर्जुनस्य धनुर्मुक्तो बाणजालोऽनलप्रभः।
शिवं भित्वा भुवं भित्त्वा त्रैलोक्ये संचचार ह॥३८॥

आग्नेयं वारुणेनाथ माहेन्द्रं मारुतेन च।
ब्राह्मं च वैष्णवेनायमेवं सर्वं व्यनाशयत् ॥३९॥

ततः क्रुध्यत्यस्मिन् प्रहरति शितैः सायकगणै-
र्विदीर्णाङ्गं दृष्ट्वा निजपतिमसावाकुलमनाः।
व्रजेयुः पुष्पत्वं सपदि विशिखाः साहसकृत-
स्तवेत्येवं शापं व्यसृजदिह तस्मै गिरिसुता ॥४०॥

तावत् तूणीमुखात् तानहह! शरवरान् वीक्ष्य पुष्पाणि पार्थः
क्रुद्धो वेगेन तस्मिन् व्यधित सुमुहतीं पुष्पवृष्टिं किराते।
दृष्ट्वा सा गोत्रकन्या प्रियमथ सुमनोगूढमूर्तिं विषण्णा
चक्रे शक्रात्मजं तं पुनरपि समरे पुष्पबाणैर्विहीनम्॥४१॥

शरवररहिते निषङ्गयुग्मे
सुरवरसूनुरतीव रोषशाली।
व्यतनुत धनुषाथ ताडनं तं
शबरवरं कठिनेन गाण्डिवेन॥४२॥

तद्धनुः प्रहरणातिरुष्टधी-
र्व्याधराडपि विवृद्धमत्सरः।
पार्थमात्मधनुषा च ताडनं
कर्तुमारभत घोरदर्शनः॥४३॥

प्रादुष्षन्तं विश्वसंहारदक्षं
क्वापि क्वापि क्रोधलेशं पुरारेः।
मा मा पार्थः सोऽयमित्यात्तभीतिः
शान्तिं निन्ये स्मारयन्ती किराती॥४४॥

शिरसि धनुरटन्या ताड्यमानस्य शम्भो-
रलिकनयनकोणे किञ्चिदारज्यमाने।
उपनिषुदुपगूढं रुद्रमुद्घोषयन्ती
परिहरति किराती मध्यमं पाण्डवानाम्॥४५॥

वीभत्सुनाथ धनुषा ताडितं चन्द्रशेखरम्।
दृष्ट्वा शरासनं तस्य जाह्नव्यापहृतं बलात्॥४६॥

असिमुद्यम्य तरसा पार्थो रुद्रमभिद्रुतः।
चिच्छेद विशिखेनान्यैरच्छेद्यमसिमीश्वरः॥४७॥

छुरिकां जिष्णुरुद्यम्य हरस्योरस्यताडयत्।
प्रकोष्ठेनाशु चिच्छेद तां तदा वृषभध्वजः॥४८॥

शिलासङ्घैर्वृक्षसङ्घैर्जघ्नतुश्च परस्परम्।
तावुभौ रोषसम्पन्नौ श्वेताश्वपरमेश्वरौ॥४९॥

गाढमुष्टितलजानुनिपात-
ध्वानपूरितदिगन्तनिकुञ्जौ।
तौ चिराय कुरुतः स्म नियुद्धं
व्याधराजसुरराजकुमारौ॥५०॥

बाहुभ्यामभिवृद्धतालकठिनस्थूलायताभ्यां हठा-
दापीड्योरसि विस्तृते मृगयुना व्याधूय मुक्तो जवात्।
विस्रस्तावयवः क्षणाद् व्यपगताशेषाभिमानः श्वसन्
मूर्च्छाकुड्मलितेक्षणः स्रवदसृग्वक्त्रः पपातार्जुनः॥५१॥

हा कष्टं पिण्डीभूततनुरहम्। किं नु खलु मयि नानुकूलो भगवान् व्योमकेशः। किं नु स्वल्वीदृशे मम पराक्रमस्य परिपाकः। किं नु खलु वक्ष्यामि राजानमजातशत्रुम्। हा कष्टं मन्मात्रा गर्भभरणक्लेशोऽनुभूतः। कथमिव धार्तराष्ट्राणां पुरतो निर्लज्जो गच्छामि।

हा कष्टं धर्मराजानुजः श्रीकृष्णाग्रियवयस्यो द्रोणाचार्यशिष्यः वृकोदरसहोदरो गाण्डीवधन्वा सन्नपि विजयः केनापि वनेचरेणानस्त्रज्ञेन चापाद्यायुधेष्वनिपुणेन पराजितोऽभूदिति सकलजनापहास्यो भविष्यामि। परिहासपात्रस्य मे किं जीवितेन। हा मातः। कुन्तिभोजतनये। अर्जुनगतमपत्यस्नेहमन्येषु चतुर्षु पुत्रेषु संविभजस्व।

अवमानात् परं मृत्युः क्षत्रियाणां विशेषतः।
तस्मादद्य मरिष्यामि नात्राहं जीवितास्पदम्॥५२॥

धर्मसूनोर्गतो मोहो दुर्योधनगता मही।
चण्डालपीडितस्यास्य कुतो मे हरदर्शनम्॥५३॥

इत्थं प्रतापं कलयन् मृदा तं
कृत्वा गिरीशं भृशभक्तिचेताः।
अस्तोकपुष्पाञ्जलिमादधान-
स्तस्थौ किरीटी विवशान्तरात्मा॥५४॥

भूयः शिवाङ्घ्रियुगभक्तिपवित्रितेन
पार्थः समेन मनसा सुचिरं विभाव्य।
उन्मीलयन् नयनतामरसे किरात-
मन्यादृशत्वमुपयान्तमिवालुलोके॥५५॥

गङ्गाकल्लोलमाला भुजगवरजटामालिका चन्द्रलेखा
श्रीमद्भूषाकपालावलिमणिमकुटं चन्द्रसूर्याग्निनेत्रम्।
क्ष्वेलग्रैवेयभूषा परशुमृगकपालं पिनाकं कराग्रे
वक्षोभागेऽस्थिमाला लसदजिनदुकूलं महानूपुराहिः॥५६॥

साक्षाच्छ्रीपार्वतीयं सहविजयजया षण्मुखो भद्रकाली
शास्ता नन्दी च भृङ्गी गणपतिर्ऋषभः सिंहकुम्भोदराद्याः।
इन्द्राद्या लोकपालाः सकलसुरगणाः सिद्धगन्धर्वमुख्याः
साध्या विद्याधरेन्द्राः सकलवसुगणा नारदाद्या मुनीन्द्राः॥५७॥

आश्चर्यं महदाश्चर्यमहो सर्वं ममाग्रतः।
दृश्यते शाम्भवं तेजः सर्वलोकैककारणम्॥५८॥
नमस्ते सकलाध्यक्ष! नमस्ते भक्तवत्सल!।
नमस्ते सर्वभूतेश! नमस्ते वृषभध्वज!॥५९॥

प्रसीद मे पर्वतराजकन्ये!
प्रसीद मे शङ्करजीवनाथे!।
प्रसीद मे देवमुनीन्द्रवन्द्ये!
प्रसीद मे देवि दयाम्बुराशे!॥६०॥

कृतो मया यदज्ञानात् विमर्दोऽयं त्वया सह।
शरणं संप्रपन्नोऽस्मि तत् क्षमस्वाद्य शङ्कर!॥६१॥

करुणामृततुन्दिलैः कटाक्षैः
शमिताशेषपरिश्रमः पुरारेः।
उदतिष्ठदुदूढभक्तिभार-
प्रसरद्बाष्पसमुत्थितः किरीटी॥६२॥

भो भो फल्गुन! तुष्टोऽस्मि कर्मणाप्रतिमेन ते।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः॥६३॥

इत्युक्त्वा प्रणतं प्रगृह्य भगवानाश्लिष्य पार्थं मुहु-
र्दत्त्वा तूणकृपाणकार्मुकशरान् तस्मै प्रसादोन्मुखः।
भीष्मद्रोणमुखान् कुरून् न तु परं जेतुं त्रिलोकीमपि
प्रीतः पाशुपतं समन्त्रमुपदिश्यास्त्रं तिरोभूद् गणैः॥६४॥

इति किरातप्रबन्धः समाप्तः

## Appendix-A

तत्राथ ते सत्यवतीसुतस्य पादारविन्दात् प्रविसृत्वरीभिः।
नखप्रभाभिर्नवपुष्पपङ्क्तिं जटालतानां जनयाम्बभूवुः॥

अत्यादरेण परिगृह्य कृतां सपर्यां
वर्यां युधिष्ठिरमुखैः स महामुनीन्द्रः।
तुष्टो जगाद वचनं वरतुष्टिहेतो-
र्यस्येहितं जयति ति भूतदयापयोधेः॥

जेतुं भीष्मपुरस्सरान् युधि रिपूनाराधनीयो हरः
सद्यः शक्रसुतेन क्लृप्ततपसा मन्त्रो मया दीयते।
इत्युक्त्वा च तथोपदिश्य स मुनिस्तस्मै समामन्त्र्य तं
राजानं प्रययौ पराशरसुतो वैहायसेनाध्वना॥

तदनु जयवियोगविधुरोऽपि विजयवियोगसाध्यरिपुविजय-समुन्मुखीकृतचेता रजनिकरकुलतिलकभूतो धर्मजातः समाहूय सर्वाङ्गीणंविनयभूषापरिष्कृताङ्गं शक्रात्मजमित्युवाच-

वत्स! त्वयैव महतः परिपन्थिकृच्छ्रा-
दुद्धारणीय इति निश्चितमानसोऽस्मि।
तद् गच्छ पाशुपतमाशु गृहाण शस्त्रं
तुष्टात्मनः पशुपतेर्विमलैस्तपोभिः॥

इत्यग्रजस्य वचनं वचनीयहीनं
श्रुत्वार्जुनः शुभमना महनीयकीर्तिः।
मङ्गल्यमाल्यमिव तच्छिरसा दधानः
प्रालेयशैलमधिगन्तुमनाः प्रतस्थे॥

पशुपतिमभिराद्धुं प्रस्थितं पाण्डुपुत्रं
निजपतिमवगम्य प्रेमभारानताङ्गी।
कुवलयदलनीलैरस्य लोलैरपङ्गै-
रकुरुत च निचोलं शीतभूमिं यियासोः॥

तदनु पुरन्दरनन्दनः पुरारिचरणपरिचरणपरायणो मुरारिकरुणाशरण-स्तदीयचरणारविन्दमधुकरायमानमानसश्चण्डतरकोदण्डमण्डितभुजदण्डः पण्डिताग्रेसरो दिग्विजयसञ्चारावगतसञ्चरः समतीतवननदनदीपर्वतः पार्वतीगुरुमचलेश्वरमचलहृदयः समारुरोह। तत्र च परिसरनिपतितवियन्नदीविमलजलपरिशोभितपार्श्वे निखिलतरुवरनिकरनीरन्ध्रिततटे विष्फारभीतविद्रावितदुष्टसत्त्वे सत्त्वराशिरयम् ईश्वरेश्वरमुपासाञ्चक्रे।

फलपर्णजलानिलाशनानि प्रविहाय क्रमतस्तपस्यतोऽस्य।
विषयेषु न लोलतां प्रपेदे विजयस्याक्षगुणः कराग्र एव॥

तस्याथ नारदमुखात् तपसः प्रभावं
श्रुत्वा हरस्त्रिजगतामधिपो दयालुः।
देव्या तया सदसि सूचिततद्दिदृक्षु-
र्दित्सन्नभीष्टमपि लुब्धकतामयासीत्॥

देवी देवं सोमचूडं निकामप्रेमा सोमा प्राप्तकैरातवेषम्।
प्रेक्षं प्रेक्षं तत्सदृक्षं तदानीमूरीचक्रे चारु रूपं शबर्याः॥

परिस्फुरत्पल्लवपाटलांशुका प्रकोष्ठडोलायितकाचकङ्कणा।
उरोजयोः कुञ्जरकुम्भतुल्ययोर्युगेन गुञ्जाफलदाम बिभ्रती॥

उदारवन्यप्रसवावचूडिनी सामनवेषैः सहिता सखीजनैः।
नितम्बभारालसमन्थरैः पदैरनुप्रयाति स्म गिरीशमम्बिका॥

ततश्च तौ रजतगिरिशिखरान्निर्गच्छन्तौ किमेतदिति सांशयिकैरपि तदनुसरणोचितवेषरचनाकुलैः प्रमथकुलैः परिवार्यमाणौ समुच्चलित-लाङ्गूलमितस्ततो धावद्भिर्दूरचारश्रमविदारितवदनलम्बमानरसना-ग्रनिपातिनीभिः सृणिकाकणिकाभिर्वनपद्धतिं शुद्धतरीकुर्वद्भिर्द्रुततरश्वसित-कम्पमानावयवैस्तेषु तेषु वनकुञ्जेषु श्वापदानन्विष्यान्विष्य हुङ्कारं रचयद्भिः विश्वनिगमविश्वकद्रुभिरविमुच्यमानपार्श्वभागौ दीपकमृगायमाणनिज-हरिणशाबकानुधाव्यमानपार्ष्णिभागौ प्रशमिततुहिनजडिमोद्वेगेन भाविनि पदे पदे वनदेवताभिरवकीर्यमाणसुरतरुप्रसवास्तरणेन हिमवतः कटकपथेन सविलासं सञ्चरमाणौ कावेतावदृष्टपूर्वौ वनमस्माकमाक्रमत इति रोषक-षायिततया निवारयितुकामैरपि तेजोविशेषप्रतिहतोत्साहैरन्यैः शबरयुवभिः केवलमवलोक्यमानौ जटावल्लरीमूलपल्लवमुकुलीभवदञ्जलि-भिस्तपस्विपुञ्जैर्नभसि विमानवेगं निरुध्य हर्षाश्रुभिः सममभि-वृष्यमाणजयशब्दौ जगदादिमौ दम्पती सनियममुपासीनस्य शुनासीरसुतस्य तपोवनं प्रति प्रतस्थाते।

तत्र च अत इतो गजयूथपतिविलुलितकमलिनीपरिमलः इतः करिकलभभज्यमानसल्लकीकषायगन्धः इतो वनमहिषविषाणभिद्य-मानवल्मीकधूलिः इतो मृगकदम्बकम् इतो वराहयूथम् इतः शिखण्डिविरुतम् अयमुन्मदगन्धगजगण्डकडूयनपरिमलालीनमुखमधुकरस्तरुः एषा हि प्रत्यग्रसूतमृगीगर्भरुधिरलोहिनी भूमिः चमरपङ्क्तिरियमनुगम्यता-मुच्छुष्कमृगकरीषपांसुला त्वरितमध्यास्यतामियं वनस्थली तरुशिखर-मारुह्यताम् आलोक्यतां दिगियम् आकर्ण्यतामयं शब्दो गृह्यतां धनुः अवहितैः स्थीयतां मुच्यन्तां श्वानः इत्यन्योन्यमभिवदतो मृगयाप्रसक्तस्य किरातसमूहस्य संक्षोभितकाननः कोऽपि कोलाहलोऽभूत्।

तं वीक्ष्य रौद्रवपुषं मृगशाबकेषु
त्रासाद्विशत्सु कटिलम्बितवल्कभागान्।
पर्याकुले कलकलैरपि पक्षिजाले
पार्थो निवृत्य नियमाज्जगृहे शरासम्॥

अथापतन्तं धृतसूकराकृतिं
खुराहतग्रावविनिर्यदर्चिषम्।
स घोरघोणादलितान्तिकद्रुमं
जिघांसुमालोकत मूकदानवम्॥

इति निश्चित्य सत्वरमेष सत्त्वराशिर्दुष्टसत्त्वनिबर्हणाय वामचरणजानुविन्यस्तदक्षिणचरणमधिधरणि निधाय स्वांसभागसम्भावितशक्रसुतश्चक्रीकृतधनुः शक्रारिमेनं संप्रहर्तुमुपाक्रमत। ततस्तदानीमेव कुण्डलितकार्मुकश्चण्डीव मृगानुसारी चण्डतरः कश्चन वनेचरः समालक्ष्यत।

अग्रम्पश्यश्मश्रुपूर्णोरुक्त्रः पिञ्छानद्धक्रूरकेशः स्थवीयान्।
चापं चेलं कृष्णमाबिभ्रदङ्गे तूणीबाणैरञ्चिते रोषपूर्णः॥

मा मुञ्च बाणं मदनुद्रुतेऽस्मिन्नपेहि जाल्मेति किरातनेतुः।
वचः स लक्ष्यं मनसो न कुर्वन् वराहमस्त्रस्य चकार लक्ष्यम्॥

शिलीमुखाभ्यां शिवसव्यसाचिनोः
समुज्झिताभ्यां युगपत् किटेस्ततः।
समं विभज्यायुरभुज्यत क्षणात्
सहोदराभ्यामिव पैतृकं धनम्॥

भूदारे निहते तस्मिन्नुदारशररंहसा।
ततः कुपितोऽपि कुरुप्रवीरस्तपःशान्ततया नातिपरुषमेवमवादीत्।

इति मुनेरन्तर्दर्परसपरीवाहवेणीवाणीमाकर्ण्य क्षोणीधरधन्वापि सस्मितं प्रत्यभाणीत्।

दयापरस्य त्वयि मे शरो महा-
नपातयिष्यत् प्रथमं न चेदमुम्।
तवैष बाणं प्रतिहत्य घोणया
तपोधन! त्वां न्यहनिष्यदुद्धतः॥

मृदुबुद्धिरङ्ग वचसैव लक्ष्यसे
मृगहिंसनं विपिनसीम्नि मा दृशाम्।
शतशः स्वधर्म इति पद्यते बुधैः
शबरस्य वा वद तापेधनस्य वा॥

संदृश्यते तव तपः खलु शूद्धमेतद्
यज्जन्तुहिंसनविधौ दृढवबद्धवाञ्छम्।
आस्तामिदं भुजबलश्च मृगात्ययेऽस्मिन्
साहाय्यकं यदुपजीवति मे शरस्य॥

ईवृशीं वचनरीतिमपास्यन्नेहि सान्त्वय कियानसि मे त्वम्।
अक्ष्णि किञ्चिदरुणिम्नि जगत्यामन्तकोऽपि मदतीव बिभीयात्॥

इति शङ्करस्य न्यक्कारवादेन सातङ्कः कुरुशशाङ्कः पुनरपि गिरं कामप्यङ्कूरयामास।

यस्माद्वनेचरकूलाधम जल्पसि त्व-
मेवं पुनः पुलकयन् स्वजनस्य दृप्तः।
तस्मादसंशयमुपान्तजुषः किरात्या-
स्ताटङ्कमेव सहसे न कपोलमित्रम्॥

वनेचर! त्वं गिरिकन्दरास्पदो
न वेत्सि पुंसो भुवि बाहुशालिनः।
विकत्थनं त्वां पुरतो मृगीदृशां
नयामि बाणैरिह पोत्रिणो गतिम्॥

तादृग् वचः श्रवणदाहि मुनेर्निशम्य
सर्वे गणाः सह रुषा विजिघांसवोऽपि।
देव्या विलोक्य वदनं स्मितगर्भगण्डं
तूणार्धकृष्टविशिखेन करेण तस्थुः॥

अथ भिल्लमल्लकुरुवल्लभावुभौ
परिफुल्लभल्लकुलशल्यपल्लवैः।
स्थगितावलोकसरणिं दिवौकसां
समरं भयङ्करजवं वितेनतुः॥

यद्यदस्त्रमथ शक्रनन्दनः
शत्रवे प्रहरति स्म निर्दयम्।
तत्तदाशु तरसाशुगैरदा-
दाशुशुक्षणिविलोचनस्तदा॥

नागास्त्रं वपुषो विभूषणमभूदाग्नेयमत्युज्ज्वलं
निर्वाणं सुरसिन्धुपाथसि पुनर्जिष्णोरभूदीशितुः।
भूषाजातभुजर्मिः कबलितं वायव्यमस्त्रं पुन-
र्दिग्धं यत्तु विषेण तत्खलु शशी सद्यःसिषेचामृतैः॥

सरुषीव हरे विकृष्टचापे
सशरं शैलसुतापि जातशङ्का।
मघवत्सुतमङ्गलाय देवी
मनसा 'या त इषु' श्रुतिं जजाप॥

ससम्भ्रमाकृष्टधनुर्गुणोऽपि
शम्भुः कृपाम्भोनिधिरिन्द्रसूनौ।
सम्बद्धमात्रान् कतिचिच्च देहे
चक्रे परार्धान् कतिचिच्च बाणान्॥

ततः क्रुध्यत्यस्मिन् निशितनिशितैः सायकगणै-
र्विदीर्णाङ्गं दृष्ट्वा निजपतिमसावाकुलमनाः।

व्रजेयुः पुष्पत्वं सपदि विशिखाः साहसकृत-
स्तवेत्येवं शापं व्यसृजदिह तस्मै गिरिसुता॥

उपरोद्धुमपारयन् प्रभावं
महनीयं विजयस्य मर्त्यवृत्त्या।
उररीकुरुते पुरा किरातो
निजमेवैश्वरमप्रमेयमोजः॥

प्रवरध्वनिपूरितान्तरिक्षं
प्रहरन्तौ स्म पिनाकगाण्डिवाभ्याम्।
शबरेन्द्रसुरेन्द्रनन्दनौ तौ
चिरमायोधनकेलिमादधाते॥

प्रहितं वदने करालघोणे
कठिने स्थूलहनौ पृथासुतेन।
द्विजराजनिभं शरासनं तत्
प्रणिपत्स्ये सहसैव लुब्धकेन॥

स गाण्डिवदण्डोऽपि खाण्डवे तक्षकवधूवधसाधनतया चिरमस्मत्कुल-विरोधीति क्रोधनैस्तस्य जटावनकुटुम्बिभिः कुण्डलिभिर्भक्षित इव तत्क्षणान्नालक्ष्यत।

हरप्रभावेण हृते च कार्मुके
रजोविमृष्टक्षतजार्द्रपाणिना।
स्थिरो भवेति ब्रुवता किरीटिना
किरातराजः सुचिरं न्ययुध्यत॥

परुषे मुनिमुष्टिताडने
पतिते लुब्धकवामवक्षसि।
शिथिला जगलुः किरातिका-
सितगुञ्जामणिहारयष्टयः॥

प्रादुर्भूतं विश्वसंहारदक्षं
क्वापि क्वापि क्रोधलेशं पुरारेः।
मा मा पार्थः सोऽयमित्यात्तभीतिः
शान्तिं निन्ये स्मारयन्ती किराती॥

"हा कष्टं पिण्डीभूततनुरहम्"।
अवाङ्मुखत्वेन निपात्य शम्भुना
समुज्झितोऽयं ददृशे विमोहितः।
तवाथ जामातरि मे दशामिमां
निवेदयेत्यद्रिमिव ब्रुवन् रहः॥

क्रमेण लब्धसंज्ञो धनञ्जयः पुष्टतरखेदमेव विषसाद।
कृष्णेनापि समुज्झितोऽहमधुना सर्वात्मना बन्धुना
नूनं दूरगतोऽपि रक्षति स नः सर्वापदः सर्वदा।
पाञ्चाली परिरक्षिता नृपसभे दुष्टेन कृष्टा तदा
दूरादेव स मां विपन्नमधुना हा हन्त! नो पश्यति॥

हे पार्वतीश परमेश्वर भक्तबन्धो!
जानीहि मामुपगतं विषमामवस्थाम्।
प्राणप्रयाणसमयेऽद्य कृपापयोधे!
भृत्यस्य ते मम दृशोरिह सन्निधेहि॥

मामेव प्रतिपालयन् मम गुरुर्लब्धास्त्रमत्रेश्वरा-
दायास्यन्तमरातिसैन्यममुना जेष्यन्नसौ तिष्ठाति।
श्रुत्वायं मम वृत्तमेतदरिभिः संकीर्त्यमानं मुदा
कष्टामेव दशामतीव तरसा यास्यत्यतोऽपि ध्रुवम्॥

मुग्धेन्दुशेखर! भवन्तमहं तपस्यन्
केनापि लुब्धककुलेन पराजितोऽस्मि।
मा भूत्तवेदमयशो बहुशो नमस्ते
क्षिप्रं प्रसीद मयि लुब्धकलुप्तजीवे॥

इति स्तुवन् निस्तुलभक्तिभारः
स निर्ममे निर्मलचित्तवृत्तिः।
महेशबिम्बं महनीयकीर्तिं
मृत्साभिरुत्सारितहस्तयुग्मः॥

हे नाथ नाथ भगवन्नयि भक्तबन्धो!
क्षिप्रं प्रसीद परमेश्वर पार्वतीश!।
आपन्नघोरविपदोऽपि भवन्ति तूर्ण-
मासेव्य नष्टविपदो भगवन् भवन्तम्॥

इति स कलितभक्तिर्यानि यानीह पुष्पा-
ण्यलसतरकराभ्यामार्चिचच्चन्द्रचूडे।
शबरशिरसि पश्यंस्तानि तान्येव कोपा-
दवददिति तदा तं मायिनं मन्यमानः॥

अस्त्राणीह रणे मम त्वमधुना विश्वेशमूर्ध्न्यर्पिता-
न्याहर्तुं कुसुमान्यपि प्रभवसि त्वां ताडयाम्येव भोः।
इत्युक्त्वा तरसाभ्यपप्तदधिकं क्रोधाकुलः फल्गुनो
मा मा ताडय ताडयेति भगवानाह स्म गौरीपतिः॥

ऊरीचकार भगवान् निजमेव रूपं
गौरीपतिः परमकारुणिकस्तदानीम्।
विख्यातविक्रमनिधेः पुरुहूतसूनो-
रग्रे समग्रमहिमा स्वयमाविरासीत्॥

शबरी च ततः स्वयं भवानी
करुणापूरतरङ्गिता बभूव।
अपरे शबराश्च नन्दिभृङ्गि-
प्रमुखाः पारिषदाः क्षणाद् बभूवुः॥

ततश्चासौ पुरतः कण्ठाभरणघण्टाझणत्कारसहचरेण कण्ठगर्जितेन कर्णयोः कल्पितसुधारसमोक्षे महोक्षे निषेदिवांसं भुजमूलप्रसारित-

गिरिजापाणियुगनखाङ्कुरधोरणीद्विगुणीकृतहारमणिरमणीयवक्षसं पारिषद-गणाञ्जलिकमलवनमध्यराजहंसायमानं मार्दवभरितशार्दूलचर्मनिर्मित-पल्ययनपर्यङ्कोपरिभागतिर्यगाचितैकचरणपल्लवसंवाहनपरेण शिलादकुमारेण दर्पदुर्ललननिवारणाय बन्धनकनकश्रङ्खले निरुद्ध्य मुहुर्मुहुः करपुटास्फालितवृषभककुदश्रृङ्गेण भृङ्गिरिटिना च लक्ष्यमाणोभयपक्षभागं गाण्डीवताडनपरिपीडितं चूडाशशिनमाश्वासयितुमवतरद्भिरुडुनिकरैरिव सुरतरुकुसुमवर्षैरवकीर्यमाणं जटाभसितकुशचीरधारिभिस्तैरेवाम्नायपुरुषैः परिपठ्यमानशतरुद्रीयविरुतप्रबन्धम् अम्बरे सविधमवलम्बमानैस्तुरुबुरुप्र-मुखसुरवैणिकैरुपवीण्यमानभक्तजनरक्षणापदानप्रकरणं कर्णपूरीकृततमालम-ञ्जरीमधुझरीमिषेण कटाक्षात् साक्षात् कृपामिव वर्षन्तं प्रज्वलद्भिः परिष्कारपन्नगफणारत्नैः शरव्रणैरिवानुबध्यमानावयवं भगवन्तं महादेवमुद्वीक्ष्य सविनयमुपसरन् पदारविन्दयोः सहस्रकृत्वः प्राणंसीत्।

अथ सपदि सलज्जो भक्तिभारानताङ्गः
पुरमथनपदान्ते दण्डपातं पपात।
मम कृतमपराधं सर्वमेतत् क्षमस्वे-
त्युदितभयदमोऽयं पुण्यवान् पाण्डुसूनुः॥

स्वामिन् मया जलधिया त्वयि देवदेव!
वाचा शरेण धनुषा दृढमुष्टिना च।
यत्ते चतुर्विधमकारि रणे तदागः
क्षन्तव्यमद्य भवता करुणार्णवेन॥

अनुग्रहीतुं कृतविग्रहेण
त्वया सहाहं कृतविग्रहोऽस्मि।
अलुब्धको भक्तवरप्रदाने
भवानिहाभूदथ लुब्धको यत्॥

इति विज्ञापयन्तमेनं प्लवङ्गकेतनमनङ्गशासनोऽप्यवेमवादीत्–

यथा तुरीयेण युधि प्रवीर
तवापराधेन भवामि हृष्टः।
तथा न भक्त्या तपसां विभूत्या
तरुप्रसूनार्चनया महत्या॥

## Appendix-B

कृतेऽथ किर्मीरवधे बकारिणा
वनं गतः काम्यकमस्तकण्टकम्।
युधिष्ठिरो धौम्यमुखैः सह द्विजैः
स्थितिं व्याधाद् द्वैतवनान्तिके चिरम्॥

भवादृशेषु प्रमदाजनोदितं
भवत्यधिक्षेप इवानुशासनम्।
तथापि वक्तुं व्यवसाययन्ति
मां निरस्तनारीसमया दुराधयः॥

पुमान् न शिक्षाविषयो वधूनां
विद्वान् विशेषण ततोऽपि भर्ता।
तथाप्यहं त्वामनुशास्मि नाथ!
न शक्यते हातुमनागसीं माम्॥

विपदोऽभिभवन्त्यविक्रमं
रहयन्त्यापदुपेतमायति।
लघुता नियता निरायते-
रगरीयान्नु पदं नृपश्रिया॥

यदवोचत वीक्ष्य मानिनी
परितः स्नेहमयेन चक्षुषा।
अपि वागधिपस्य दुर्वचं
वचनं तत्त्वदधीत विस्मयम्॥

परिणामसुखे गरीयसि
व्यथकेऽस्मिन् वचसि क्षतौजसाम्।
अतिवीर्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः॥

तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत्।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्॥

अथ द्वैतवनाभिधाने वने निवसतः पाण्डवस्य विमतविनाशोपायमनुचिन्तयतः सरोषभीसोमकसुता(?) भीमसेनसाहसवचननिरसननिरतस्य तस्य सत्यवतीसूनुराविरासीत्।

निरास्पदं प्रश्नकुतूहलित्व-
मस्मास्वधीनं किमु निःस्पृहाणाम्।
तथापि कल्याणकरीं गिरं ते
मां श्रोतुमिच्छा मुखरीकरोति॥

लभ्या धरित्री तव विक्रमेण
ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः।
अतः प्रकर्षाय विधिर्विधेयः
प्रकर्षतन्त्रा हि रणे जयश्रीः॥

यस्मिन्नैश्वर्यकृतव्यलीकः
पराभवं प्राप्त इवान्तकोऽपि।
धुन्वन् धनुस्तस्य रणे न कुर्या-
न्मनो भयैकप्रवणं स भीष्मः॥

सृजन्तमाजाविषुसंहतीर्वः
सहेत कोपज्वलितं गुरुं कः।
परिस्फुरल्लोलशिखाग्रजिह्वं
जगज्जिघत्सन्तमिवान्तवह्निम्॥

निरीक्ष्य संरम्भनिरस्तधैर्यं
राधेयमाराधितजामदग्न्यम्।
असंस्तुतेषु प्रसभं भयेषु
जायेत मृत्योरपि पक्षपातः॥

यथा समासादितसाधनेन
सुदुश्चरामाचरता तपस्याम्।
एते दुरापं समदाप्य वीर्य-
मुन्मूलितारः कपिकेतनेन॥

तत्सङ्कटेषु कङ्कटमदिशन्मन्त्रं स धर्मपुत्राय।
स्थाणुमनेन भजेति प्रादात् सोऽप्यर्जुनाय तं हृष्टः॥

पितृपैतामहमस्मद्राज्यं दुष्टेन शकुनिनापहृतम्।
भीष्मादयोऽत्र जेया रक्ष्योऽहं पार्थ! तव महान् भारः॥

ततोऽर्जुनः सत्यवतीसुतान्मुने-
रवाप्य विद्यामरिनिर्जयोत्सुकः।
ययौ हिमाद्रिं तपसा प्रसादितात्
पुरद्विषः पाशुपतास्त्रलब्धये॥

तदनु सकलकुलाचलचक्रवर्तिनमनिमिषरमणी-सञ्चारसञ्जातरामणीयकम् आनाकलोकनगरोच्छ्रितविपुलशिखरं खरकिर-णरथतुरगखुरदलितशिलातलम् उज्ज्वलैरनेकविधैर्माणिभिरिव महौषधैरुपशो-भितम् अतिशान्तात्माभिश्चाश्रममृगैरिव मुनिभिरध्यासितपर्यन्तं दर्यन्तशायितकेसरिविरावैरिव निर्झरध्वनिगम्भीरैः सविधसञ्चारिवारिदस्त-नितैर्मुखरितदिशावकाशं यशोभिरिव भागीरथीफेनपिण्डपाण्डरैस्तुषा-रासारपूरैरापूरितधरावलयम् अविरलदलपालिकबलितककुबन्तरैश्च प्रियाल-सालरसालोद्दालविचुलनिचुलसरलबकुलवञ्चुलमहिलाररलिजम्भलकर्प-रालप्रभुखैस्तरुनिकरैर्निबद्धनिचोलितभूमण्डलं हिमकरमिव हरिणाङ्कविग्रहं, राजकुलमिवोज्ज्वलत्खड्गिमण्डलं, श्वेतद्वीपमिव पुण्डरीकनेत्रोल्लसितं,

कैलासशैलमिव तरलचन्द्रकनीलकण्ठ- लास्यक्रीडामनोहरं, सत्यलोकमिव पुष्करसम्भवालङ्कृतं, पातालमिव नागसहस्रनिवासभूतं महामखमिवानेकद्विजशतसेवितं, शब्दप्रपञ्चमिव प्रचुरधातुविकारविरचितविविधरूपविशेषं, न्यायशास्त्रमार्गमिव प्रकटितसत्त्वजातिच्छलनिग्रहस्थानं, जामदग्न्यमिव निजोन्नतिपराजिताशेषमहीभृतं, दाशरथिमिवेक्ष्वाकुवंशतिलकाकारं, रामसेतुमिव विभीषणध्वनिविजृम्भमाणशाखामृगसहस्रोपसेवितनलाकलितम्, अखिललोकाभिवर्जितमहिमानम् आलयं गुणानाम् अतिबहलप्रमदभरतरलितमानसो विस्मयविकस्वरविशालविलोचनसञ्चार सम्भाव्यमानवनविशेषशोभातिशयः स मदकरियूथयूथपमन्दमन्दगतिरिन्दुशेखरजामातरम् आकरमखिलाद्भुताना- मुद्भृतवर्ष्माणमिव मनोरथं हिमालयनामानं महीधरमध्यरौक्षीत्।

**तपनमण्डलदीपितमेकतः**
**सततनैशतमोवृतमन्यतः।**
**हसितभिन्नतमिस्रचयं पुरः**
**शिवमिवानुगतं गजचर्मणा॥**

**विततशीकरराशिभिरुच्छ्रितै-**
**रुपलरोधविवर्तिभिरम्बुभिः।**
**दधतमुन्नतसानुसमुद्धतां**
**धृतसितव्यजनामिव जाह्नवीम्॥**

**उत्फुलस्थलनलिनीगणादमुष्मा-**
**दुद्भृतः सरसिजसम्भवः परागः।**
**वात्याभिर्वियति वितर्तितः समन्ता-**
**दाधत्ते कनकमयातपत्रलक्ष्मीम्॥**

**तत्र च सुत्रामसुतो वित्रासितविष्टपानि चित्राणि।**
**घोरतराणि तपांसि व्यतनुत विततताप तेजसा च जगत्॥**

**गुरूपदिष्टमार्गेण भक्त्या परमया युतः।**
**पूजयामास सर्वेशमेकाग्रहृदयस्थितः॥**

अनिकेतः स वर्षासु शिशिरे जलसंश्रयः।
ग्रीष्मे पञ्चाग्निमध्यस्थश्चचारैवं तपश्चिरम्॥

ऊर्ध्वबाहुः,

रात्रौ कुमुदवन्नेत्रे दिवा स्थलसरोजवत्।
विनिद्रिते विधायेत्थं ध्यायमानो महेश्वरम्॥
दधमानस्य नियमान् वपुस्तस्य सुखोचितम्।
कृशीभवन् क्रमाद् भेजे तेजःसत्त्वावशेषताम्॥

शमयन् धृतेन्द्रियशमैकसुखः
शुचिभिर्गुणैरघमयं स तमः।
प्रतिवासरं सुकृतिभिर्ववृधे
विमलः कलाभिरिव शीतरुचिः॥

मनसा जपैः प्रणतिभिः प्रयतः
समुपेयिवानधिपतिं स दिवः।
सहजेतरौ जयशमौ दधती
बिभराम्बभूव युगपन्महसी॥

शिरसा हरिन्मणिनिभः स वहन्
कृतजन्मनोऽभिषवेण जटाः।
उपमां ययावरुणदीधितिभिः
परिमृष्टमूर्धनि तमालतरौ॥

धृतहेतिरप्यधृतजिह्ममति-
श्चरितैर्मुनीनधरयन् गुरुभिः।
रजयाञ्चकार विरजाः स मृगान्
कमिवेशते रमयितुं न गुणाः॥

नवपल्लवाञ्जलिभृतः प्रचये
बृहतस्तरून् गमयतावनतिम्।
स्तृणता तृणैः प्रतिनिशं मृदुभिः
शयनीयतामुपयतीं वसुधाम्॥

पतितैरपेतजलदान्नभसः
पृषतैरपां शमयता च रजः।
स दयालुनेव परिगाढकृशः
परिचर्ययानुजगृहे तपसा॥

एवं प्रवर्तमानस्तु सोऽहंभावसमन्वितः।
पार्थः पाशुपतास्त्रार्थी तपस्तेपे हरं प्रति॥
क्रमप्रवृद्धैर्विविधैस्तपोभिरतिमानुषैः।
भक्त्या चाव्यभिचारिण्या स देवं समतूतुषत्॥
तपसा तस्य इत्यादि।

अस्ति सकलजगत्प्रशस्तमहिमा वैमानिकसरणिलङ्घनजाङ्घालश्रृङ्गोन्नतिः अतिभङ्गुरविहारकुहनामतङ्गजचण्डतरशुण्डादण्डाभिघातक्षुण्णगण्डोपलसण्डीनधूलीधूसरसकलावयवतया भगवतः खण्डपरशोर्भसितावगुण्ठितां मूर्तिमिवानुवर्तमानः चित्रतरोपत्यकान्तरविपुलवलभिदुपलमरीचिवीचिकारकुण्ठदशकण्ठभुजदण्डलतागाढनिपीडनपाटवघटितव्रणकिणश्यामिकामिवाद्यापि विवशीकृतधनाधनः(?) कूटस्थः सकलकुलगिरीणां कोशागारं कुबेरस्य गोष्ठीबन्धः पाण्डिमगुणानाम् आवासस्थानमादिदम्पत्योराधिपत्यमद्भुतानां विहारसौधो धनदावरोधविलासिनीनां विद्याधरीजनसङ्गीतविद्याभ्यासवेदिका पर्वतसार्वभौमः परिहसितशरदमृतकरणविलासः कैलासो नाम।

प्रकीर्णभस्माधिकपाण्डराणि
पर्यन्तदिव्यप्रसवान्तराणि।
...रम्भान् शिवयोर्विहारान्
शंसन्ति यत्सानुशिलातलानि॥

श्रृङ्गेषु यत्र शिशिरांशुकलङ्करङ्कोः
शङ्काकुलाः सपदि चारणमुग्धकान्ताः।
प्रच्छादयन्ति करपल्लवसम्पुटेन
पर्यस्तकेशमवतंसयवाङ्कुराणि॥

प्रतीक्ष्य दिक्षु प्रसृतान् यदीयान्
प्रकाशरश्मीन् बहुलेऽपि पक्षे।
चन्द्रातपभ्रान्तिजुषश्चकोरा-
श्चञ्चूपुटैश्चर्वितुमारभन्ते॥

यस्य किल पर्वतराजस्यान्तःपुरयुवतयो वनदेवताः यानकगजः सार्वभौमः हारावली तारापङ्क्तिः क्रीडावनी मानससरोवरं विहारोद्यानं चैत्ररथं वनपालः कुबेरः सेवावसरविलासिजनः सिद्धविद्याधरसीमन्तिनीवर्गः कोशागारमलकापुरी कुलदेवता कुमुदिनीरमणचूडामणिः क्रीडनको विनायकः सामन्ता गन्धमादनविन्ध्यमन्दरादयः सामाजिकाः सानन्दनन्दिप्रमुखाः चमूचराश्चारणगणाः।

शिखरविहृतिभाजां यत्र सिद्धाङ्गनानां
वदनरुचिविशेषैर्वञ्चितश्रीर्मृगाङ्कः।
प्रतिकृतिकपटेन प्रायशो गूढचारी
प्रतिरजनि विधत्ते प्रौढलज्जाभिनीतिम्॥

क्रीडाजुषां सानुषु किन्नरीणां
गीतामृतास्वादसुखोपलम्भात्।
क्षीणादरा यत्र भवन्त्यजस्र-
मेणा नवीनासु तृणावलीषु॥

तस्य पर्वतराजस्य शिखरदेशे कृताधिवासो भगवान् मुग्धामृतकिरणमूलशिल्पी संसारजलधिसन्तारणसांयात्रिकः सांवर्तिकनटन-सनातनशैलूषः सकलभुवनभयङ्करसागरगरभरहरणजाङ्गलिकः पवित्र-तरमुक्तिकन्यकापाणिग्रहणपरभक्तजनपुरोधाः पङ्कजाक्षरुधिरभिक्षाटना-पुराणाभिक्षुकः त्रिपुरजनदीनालापोपदेशदेशिकः कल्मषदवदहनदावानलः करुणामृतलह- रीकल्लोलमाली कपटेतरभणितिकाननमयूरः कल्पान्त-प्रमितवेधश्शतक- पालभारी दारुकावननिवासितापसवधूजनसम्मोहनाद्-भुततारुण्यरूपसन्दर्भः कलकम्रजटातटिल्लतावेल्लितककुद्धरः

कन्दलितानन्दमन्दहसितस्पन्दवन्धुरबदनचन्द्रमण्डलः कुण्डलिपतिघटित-कुण्डलमण्डनरमणीयगण्डभागः शार्दूलचर्मवसनचमत्कृतोत्तरासङ्गः प्रालम्बीकृतपन्नगकु . (ल)फूत्कारपवनोद्धूतधवलभस्माङ्गरागशृङ्गारित-समलगगनाङ्कणः विपुलतरललाटलोचनविरचितललामलीलायितः विश्वजन प्राणवीरव्रतनिपुणवीक्षाविशेषः वसुन्धराधुरन्धरवातन्धयकलितयज्ञोपवीतः परुषतरपशुपाशाङ्कुशसारङ्गधारसावधानैश्चतुर्भिर्भुजस्तम्भैर्भूषितः सन्तत-मन्तिकवर्तिनीं सकलभुवनसंसारप्रवर्तनमूलविद्यां साविन्मयजलधिचन्द्रलेखां पञ्चशरपुनस्सञ्जीवनमन्त्रपरदेवतां प्रतिनवशृङ्गारप्रथमावतारसरणिं प्राचीनभणितिचूतलतापरिणतविहृतिपरभृतिकां षट्समयकमलकानन-सञ्चरणकेलिकलहंसीं कलुषदवदहनकादम्बिनीं दानवकुलतूलपावकज्वालां तापसजनहृदयतामरसतपनकिरणलेखां तापत्रयहरणसुधातरङ्गिणीं त्रिभुवन-जनपरिपालनसिद्धमूलिकाम् अखिलनिगमनीवींदेवीमनवधिकानु-रागोत्तरङ्गमपाङ्गयन् पर्यन्तवर्तिनः सानन्दान् नन्दिप्रमुखान् प्रमथपरिवृढान् प्रकटतरस्नेहमनुगृह्णानो भवानीपतिरध्युवास।

अङ्गैरभङ्गपुलकाङ्कुरपालिकाभि-
रानन्दवाष्पकणिकाशिशिरैरपाङ्गैः।
आमुक्तभक्तिकवचैरपि चोक्तिबन्धै-
राराधयन्तियमनन्यधियो मुनीन्द्राः॥

शिरसि लसितगङ्गं पाणिरङ्गत्कुरङ्गं -
भसितविलसदङ्गं पार्वतीबद्धसङ्गम्।
जगदखिलमवन्तं चन्द्रचूडं स्तुवन्ति
प्रवणहृदयकाया देवतानां निकायाः॥

नमः शिवयाद्भुतविग्रहाय ते-
नमः शिवायाद्भुतविक्रमाय ते।
नमः शिवायाखिलनायकाय ते।
नमः शिवायामृतहेतवे नमः॥

नमो नमः पापहराय शम्भवे नमो नमश्चन्द्रकलार्पिताय।
नमो नमः सर्वहृदि स्थितात्मने नमो नमो वेदविभूषणाय ते॥

अमरीकबरीपुष्पभ्रमरीमुखरीकृतम्।
दूरीकरोतु दुरितं गौरीचरणपङ्कजम्॥

उन्मज्जन्ति निमज्जन्ति भुवनानि चतुर्दश।
स्वेदबिन्दुविलम्बीनि यदङ्गे तां नमाम्युमाम्॥

ततः पिनाकी भगवान् सर्वपापहरो हरः।
कैरातं वेषमास्थाय काञ्चनद्रुमसन्निभः॥

कोटरीकोटयः सर्वा ह्यूर्ध्वगा मूर्धजाः स्थिताः।
वक्राश्च वक्रगतयश्चक्रुस्तेषां त्ववक्रताम्॥

शिवमूर्ध्नि शिरोमाला वनमालेव शोभते।
गङ्गा पिङ्गत्वमापन्ना केशानां क्लेशनाशिनी॥

बभूव शीतांशुकला केशबन्धनसूत्रवत्।
कुठारहरिणौ शुभ्रौ कुण्डलाविव रेजतुः॥

त्रिणेत्रस्य त्रिणेत्रं तत् तिलकाकारमाबभौ।
नेत्रे परे दीर्घतरे वृत्ते रक्ते बभूवतुः॥

हारनागोऽपि कण्ठस्य कृष्णसूत्रमिवाबभौ।
अङ्गदीभूतभुजगौ तस्य तूणी बभूवतुः॥

अङ्गुलित्रं तलित्रं च कटकस्थावुपेयतुः।
सर्पौ शार्दूलचर्मास्य कृष्णवस्त्रमिवाबभौ॥

एवं किरातवेषोऽयं बभूव परमेश्वरः।
चचार च गिरौ तस्मिन् मृगयाव्यग्रधीरिव॥

अरुणोर्ध्वकेशपाशं बद्ध्वा सूत्रेण मूर्ध्नि मध्ये सा।
कम्बुकृतकुण्डलोद्यत्कर्णयुगा कमललोचना श्यामा॥

काणवराटकविरचितमाल्यानाबद्ध्य कन्धरे देवी।
वामकरे फलमूलं मूलखनित्रीं च दक्षिणे दधती॥

परिस्फुरत्पल्लवकोमलाम्बरा प्रकोष्ठडोलायितकाचकङ्कणा।
उरोजयोः कुञ्जरकुम्भसम्पदोर्युगेन गुञ्जाफलदाम बिभ्रती॥

मनश्शिलापङ्कललामचारुणा सदन्तताटङ्करुचा मुखेन्दुना।
वरोपनीतं गुहवाहनच्छदं नवं नयन्ती श्रपणावतंसताम्॥

इत्थमुपात्तकिरातीवेषा विरराज शैलजा देवी।
सह विजयादिसखीभिः समानवेषाभिरनुजगाम शिवम्॥

वनवाततरङ्गितालकान्ता वदनामोदविलोलभृङ्गमाला।
स्तनभारिविवर्तमानगुञ्जा शबरी सा शबरेन्द्रमन्वियाय॥

नन्दीशभृङ्गिप्रमुखाः सर्वे भूतगणास्तदा।
अनुजग्मुरथेशानं कैरातं वपुरास्थितम्॥

केचिच्छबररूपाश्च केचित् कुक्कुररूपिणः।
केचिद् वागुररूपाश्च केचिद् वागुरयष्टयः॥

केचिद् वागुरवाहित्राः केचिद् वागुरवाहकाः।
एवं नानाविधा भूत्वा भूता भूमिं व्यचारयन्॥

श्वानः केचन वागुराश्च कतिचित् पाशास्तथान्ये परे
घण्टाः केऽपि वनेचराश्च मृगयाव्यापारकोलाहले।

आसन् भूतगणाः पिनाकधनुषस्त्रासेन चञ्चन्मृग-
श्रेणीक्षोभविकम्पमानधरणीपृष्ठेऽथ पृष्ठानुगाः॥

घण्टानादैः शुनां नादैः स्वेषां नादैर्मृगस्वनैः।
ज्याघोषैः पदविक्षेपैः पूरयाञ्चक्रिरे दिशः॥

इतः करिकलभ इत्यादि।

स बलौघः पदक्षेपप्रक्षुण्णावनिरेणुभिः।
ययौ सञ्छादयन् व्योम विमानशतसङ्कुलम्॥

अन्वीयमानं सह सिद्धसङ्घैः संस्तूयमानं मुदितैर्मुनीन्द्रैः।
अन्वीयमानं वनदेवताभिः पुण्यं पुराणं मिथुनं प्रतस्थे॥

कच्छान्ते सुरसरितो निधाय सेनामन्वीतः स कतिपयैः किरातवर्यैः।
प्रच्छन्नस्तरुगहनैः सगुल्मजालैर्लक्ष्मीवाननुपदमस्य सम्प्रतस्थे॥

तपस्यन्तं पार्थं तरणिमिव विद्योतितदिश
दिशामातङ्गेन्द्रश्रवणकुहरापूरणचणैः।
निजैर्ध्वानैर्भिन्दन्निव खमसुरः कश्चन रुषा
जिघांसुस्तस्याग्रे व्यतनुत पदं सूकरवपुः॥

मूको नाम दितेः पुत्रो दुर्योधनहिते रतः।
वाराहं रूपमास्थाय पार्थं हन्तुमुपा( ऽसस?सरत् )॥

खुरक्रमणसञ्चूर्णत्परिकीर्णाश्मरेणुभिः।
घोणाग्रोद्घृष्टभूभागो दंष्ट्राग्रोद्भिन्नपादपः॥

वपुषा परमेण भूधराणामपि संभाव्यपराक्रमं विभेदे।
मृगमाशु विलोकयाञ्चकार स्थिरदंष्ट्राङ्कमुखं महेन्द्रसूनुः॥

स्फुटबद्धसटोन्नतिः स दूरादभिधावन्नवधीरितान्यकृत्यः।
जयमिच्छति तस्य जातशङ्के मनसीमं मुहुरादधे वितर्कम्॥

घनपोत्रविदीर्णसालमूलो निबिडस्कन्धनिकाषरुग्णवप्रः।
अयमेकचरोऽभिवर्तते मां समरायेव समाजुहूषमाणः॥

न केवलमयं वन्यो वराहः कश्चनासुरः।
जिघांसतीव मामद्य मायया सूकराकृतिः॥

बहुशः कृतसत्कृतेर्विधातुं प्रियमिच्छन्नथवा सुयोधनस्य।
क्षुभितं वनगोचराभियोगाद्गणमाशिश्रियदाकुलं तिरश्चाम्॥

अवलीढसनाभिरश्वसेनः प्रसभं खाण्डवजातवेदसा वा।
प्रतिकर्तुमुपागतः समन्युः कृतवैरो यदि वा वृकोदरेण॥

प्रत्यासीदति मामेव नान्यत्र निहितेक्षणः।
हन्तव्योऽयमवश्यं मे रिपुवत् स्खलयन् मनः॥

एनं बाणाग्रपीतासुं न कुर्यां यदि सम्प्रति।
अनेनाहं निहन्तव्यो ध्रुवमेव हि पोत्रिणा॥

इति तेन विचिन्त्य चापनाम प्रथमं पौरुषचिह्नमाललम्बे।
उपलब्धगुणः परस्य भेदे सचिवः शुद्ध इवाददे च बाणम्॥

ददृशेऽथ सविस्मयं शिवाभ्यां स्थिरपूर्णायतचापमण्डलस्थः।
रचितस्तिसृणां पुरां विधातुं वधमात्मेव भयानकः परेषाम्॥

स भवस्य भवक्षयैकहेतोः सितसप्तेश्च विधास्यतोः सहार्थम्।
रिपुरा( प ) पराभवाय मध्यं प्रकृतिप्रत्यययोरिवानुबन्धम्॥

अथ दीपितवारिवाहवर्त्मा रववित्रासितवारणोऽनिवार्यः।
निपपात जवादिषुः पिनाकान्महतोऽभ्रादिव साशनिः कृशानुः॥

हरेण चागत्य विकृष्टधन्वना ममैष लक्षो न निहन्यतामिति।
निवार्यमाणोऽप्यवमत्य तद्वचो मृषावराहे प्रजिघाय सायकम्॥

तपस्विना तेन समं महाद्युतिः पपात तस्मिन् गिरिशोज्झितः शरः।
प्रकाशिताशेषदिशा पराचले सहातपेनेव सहस्त्रदीधितिः॥

अविवेकवृथाश्रमाविवार्थं क्षयलोभाविव संश्रितानुरागम्।
विजिगीषुमिवानयप्रमादाववसादं विशिखौ विनिन्यतुस्तम्॥

स गतः क्षितिमुष्णशोणितार्द्रः खुरदंष्ट्राग्रनिपातदारिताश्मा।
असुभिः क्षणमीक्षितेन्द्रसूनुर्विहतामर्षगुरुध्वनिर्निरासे॥

आदेशं शिरसादाय नन्दी शर्वस्य सत्वरम्।
ययौ पार्थान्तिकं प्रांशुः पादचारीव पर्वतः॥

तिष्ठ तिष्ठ च मा त्वं गा दुष्ट चोर! क्व गच्छसि।
मदीश्वरमनादृत्य किमर्थामिषुमग्रहीः॥

तत्र कार्मुकभृतं महीपतिः पश्यति स्म सहसा वनेचरम्।
सन्निकाशयितुमग्रतः स्थितं शासनं कुसुमकेतुविद्विषः॥

स प्रयुज्य तनये महीपतेरात्मजातिसदृशीं किलानतिम्।
सान्त्वपूर्वभिनीतिहेतुकं वक्तुमित्थमुपचक्रमे वचः॥

अभ्यघानि मुनिचापलात् त्वया यन्मृगः क्षितिपतेः परिग्रहः।
अक्षमिष्ट तदयं प्रमाद्यतां संवृणोति खलु दोषमज्ञता॥

जन्मवेषतपसां विरोधिनीं मा कृथाः पुनरमूमतिक्रियाम्।
आपदेत्युभयलोकदूषणी वर्तमानमपथे हि दुर्मदम्॥

अस्त्रवेदविदयं महीपतिः पर्वतीय इति मावजीगणः।
गोपितुं भुवमिमां मरुत्वता शैलवासमनुनीय लम्भितः॥

आत्मनीनमुपतिष्ठते गुणाः सम्भवन्त्युपरमन्ति चापदः।
इत्यनेकफलभाजि मा स्म भूदर्थिता कथमिवार्यसंगमे॥

दृश्यतामयमनौकहान्तरे तिग्महेतिपृतनाभिरन्वितः।
साहिवीचिरिव सिन्धुरुद्धतो भूपतिः समयसेतुवारितः॥

सज्यं धनुर्वहति योऽहिपतिस्थवीयः
स्थेयाञ्जयन् हरितुरङ्गमकेतुलक्ष्मीम्।
अस्यानुकूलय मतिं मतिमन्नेन
सख्या सुखं समभियास्यसि चिन्तितानि॥

ततः किरातस्य वचोभिरुद्धतैः पराहतः शैल इवार्णवाम्बुभिः।
जहौ न धैर्य कुपितोऽपि पाण्डवः सुदुर्ग्रहान्तःकरणा हि साधवः॥

वयं क्व वर्णाश्रमरक्षणोचिताः क्व जातिहीना मृगजीवितच्छिदः।
सहापकृष्टैर्महतां न संगतं भवन्ति गोमायुसखा न दन्तिनः॥

मृगान् विनिघ्नन् मृगयुः स्वहेतुना कृतोपकारः कथमिच्छतां तपः।
कृपेति चेदस्तु मृगः क्षतः क्षणादनेन पूर्वं न मयेति का गतिः॥

यदा विगृह्णाति हतं तदा यशः करोतु मैत्रीं मम दुषिता गुणाः।
स्थितिं समीक्ष्योभयथा परीक्षकः करोत्यवज्ञोपहतं पृथग्जनम्॥

मया मृगान् हन्तुरनेन हेतुना विरुद्धमाक्षेपवचस्तितिक्षितम्।
शरार्थमेष्यत्यथ लप्स्यते गतिं शिरोमणिं दृष्टिविषाज्जिघृक्षतः॥

वनेचर! त्वं गिरिकन्दरास्पदो न वेत्सि पुंसो भुवि बाहुशालिनः।
विकत्थनं त्वां पुरतो मृगीदृशां नयामि बाणैरिह पोत्रिणो गतिम्॥

इतीरिताकूतमनीलवाजिनं रणाय दूतः प्रतितर्ज्य तेजसा।
ययौ समीपं ध्वजिनीं समीयुषः प्रसन्नरूपस्य विरूपचक्षुषः॥

ततोऽपवादेन पताकिनीपतेश्चचाल निर्ह्रादवती महाचमूः।
युगान्तवाताभिहतेव कुर्वती निनादमम्भोनिधिवीचिसंहतिः॥

अतः परं शरव्राताः कथयन्तु तवोत्तरम्।
इत्युक्त्वैवार्जुनस्तूर्णं तूणीराच्छरमाददे॥

बाणं धनुषि सन्धाय कर्णान्तमपकृष्य च।
फल्गुनः परमक्रुद्धो मुमोच परमेश्वरे॥

पार्थहस्तप्रमुक्तोऽसौ पत्री परमरंहसा।
हरं भित्त्वा भुवं भित्त्वा पातालमभिजग्मिवान्॥

तत्र तयोरितरेतरमनितरसदृशानुभावभाजनयोरत्रैव कपटपोत्रिणि प्रकटितनिजलक्षविपक्षभावयोरुन्मिषितरोषकलुषितचेतसो:शबर राजशतमख-पुत्रयोरुद्रासितसकलवनदेवतानि समरविहारसाहसानि समभवन्।

प्रतिदिशं प्लवगाधिपलक्ष्मणा विशिखसन्ततितापितमूर्तिभिः।
रविकरग्लपितैरिव वारिभिः शिवबलैः परिमण्डलिता दधे॥

प्रमहसि शरजालच्छन्नविश्वान्तराले
विधुवति धनुराविर्मण्डलं पाण्डुसूनौ।
कथमपि जयलक्ष्मीर्भीतभीतेव हातुं
विषमयनसेनापक्षपातं विषेहे॥

अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः।
भेजे दिशं परित्यक्तमहेष्वासा च सा चमूः॥
अपश्यद्भिरिवेशानं रणान्निववृते गणैः।
मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितं मनः॥

स सासिः सासुसूः सासो येयायेयाययाययः।
ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन्॥

न नोननुन्नो नुन्नो नो नाना नानानना ननु।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत्॥

चचार रुचिरश्चारुश्चञ्चच्चीररुचा रुचः।
चारुचुञ्चुश्चिरारेची चारैराचारचञ्चुरः॥

विहायसि च्छादितदिग्भिरावृते पिनाकगाण्डीवविनिस्सृतैः शरैः।
क्षणेन निःशेषमिवावचूर्णिता रवेरलक्ष्यन्त न कुत्रचित् कराः॥

ललाटनेत्रज्वलनोष्मतापिताः कपर्दसिन्धोः परिपीतपाथसः।
फणामणीनां कषणेन भोगिनां शिलीमुखाः शातमुखाः किरीटिनः॥

पुरामरातिं मृदुसम्प्रहारवान् मुनेर्दृढाकृष्टशरासनच्युताः।
प्रहृष्टरोम्णा वपुषा शरावलीर्बभार भक्त्येव निवेदिताः स्रजः॥

निरन्तरशरव्राततिरोहितदिगन्तरम्।
समभूत् समरं तत्र कपिध्वजकिरातयोः॥

उद्गिरद्गरलार्चिष्कैः सहस्रैर्विस्तृतैः फणैः।
संयुक्तं भुजगेन्द्रास्त्रं विससर्ज महेश्वरः॥

तस्य चापाग्रतः क्षिप्रं तत्र तार्क्ष्यस्तदग्रहीत्।
सहस्रानन संयुक्तं ससिंहं शरभो यथा॥

आग्नेयं वारुणेनापि माहेन्द्रं मारुतेन च।
वायव्यं वैष्णवेनायं सर्वमेवं व्यनाशयत्॥

बहुना किं समस्तानि महास्त्राण्यपि भूपतेः।
व्यर्थीचकार सहसा प्रत्यस्त्रैः स किरातपः॥

रणशिरसि निरीक्ष्य सम्प्रमुक्तान् निशितशरान् सुरनाथनन्दनेन।
सपदि गिरिसुता शशाप सैवं कुसुममयास्तव सम्भवन्तु बाणाः॥

कुसुममयशराम्बुराशिमध्ये गिरिशममुत्र निरीक्ष्य मज्जमानम्।
गिरिवरतनया किरीटिनं तं रहितनिषङ्गशरं पुनश्चकार॥

ततस्तु मुक्ताजिनभोगिभोगप्रकाशपूर्वोऽथ रुषा परीतः।
अतीत्य चैनं तरसा किरातमताडयन्मूर्धनि कार्मुकेण॥

प्रहरति धनुषा रुषैव पार्थे वपुषि शिवापरिरम्भभुग्नसौख्ये।
कुचवलयपदानि शैलजायाः परिहरति स्म भृशं पिनाकपाणिः॥

शिरसि धनुरटन्या ताड्यमानस्य शम्भो
रलिकनयनकोणे किञ्चिदारज्यमाने।
उपनिषदुपगूढं रुद्रमुद्घोषयन्ती
परिहरति किराती मध्यमं पाण्डवानाम्॥

वीभत्सुनाथ धनुषा ताडितं चन्द्रशेखरम्।
दृष्ट्वा शरासनं तस्य जाह्नव्यापहृतं बलात्॥

पादपैः प्रस्तरैरुग्रैस्तावुभौ जिष्णुशङ्करौ।
अतीव रोषसम्पन्नावन्योन्यमभिजघ्नतुः॥

विहाय भयमादितो रुषमपास्य मुक्त्वा त्वरां
निधाय सुदृढं मनः समवधार्य पक्षं निजम्।

सहेतुसनिदर्शनप्रसृमरस्थिरोदारवा-
गुपक्रमसमन्वितो भवति वादयुद्धे कृती।

महति ततः प्रवर्तमाने तादृशि सम्प्रहारे किरातराजप्रभावादपहृतशरशरासनः पाकशासनिः कुलिशनिकाशैर्मुष्टिभिस्तमताडयत्। तथा,

तयोस्समं समजनि मुष्टिभिर्मिथो
रणोत्सवो वनभुवि विश्ववीरयोः।
यथा मृगाश्चटचटनिस्स्वनश्रवा-
द्धि तत्रसुर्दवदहनाभिशङ्कया॥

सुमेरुवप्रप्रतिमेन वक्षसा
निपीड्य मुक्तः शबरेण मूर्च्छितः।
स लब्धसंज्ञः पुनरुत्थितो जये
चकाङ्क्ष तस्यार्चनया पुरद्विषः॥

स मन्त्रवत् सैकतलिङ्गमूर्धनि
न्यवर्तयद्यत्कुसुमं वनाहृतम्।
सुविस्मितस्तत्तदरालकुन्तले
पुलिन्दभर्तुः शिरसि व्यलोकयत्॥

स तस्य हर्षादुपसृत्य पादयोः
कृतप्रणामस्य पुरः प्रसेदिवान्।
महोक्षमास्थाय निषेवितो गणै-
रुमासखः सन्निदधे दयानिधिः॥

हर्षोदञ्चितमन्दहासविसरद्दन्तप्रभामण्डलै-
स्तन्वानं गगने निलिम्पितटिनीकल्लोललीलायितम्।
तं देवं दयिताकटाक्षपटलीकल्माषितोरस्थलं
पश्यन् पाण्डुसुतः क्षणेन विजहावाधीनशेषानसौ॥

तं विलोक्य पुरुषं पुरातनं
पाण्डुसूनुरयमुत्थितः क्षणात्।
सम्मदाश्रुनिवहोक्षिताननः
प्राञ्जलिः प्रयतधीरभाषत॥

प्रसीद जगतां नाथ! प्रसीद परमेश्वर!।
प्रसीद पार्वतीकान्त! प्रसीद करुणानिधे!॥
अजानता त्वां भगवन्! यन्मयापकृतं तव
तन्मे क्षमस्व दासस्य प्रपन्नस्य दयाम्बुधे!॥

इति विलपति पार्थे भक्तिभाजां प्रधाने
करुणकरुणमन्तर्मन्युना दह्यमाने।
पशुपतिरनुकम्पाबाष्पपर्याकुलाक्षीं
विवलितिवदनेन्दुर्वीक्षते शैलपुत्रीम्॥

सगद्गदमुवाचेदं संभ्रमाकुलया गिरा।
कामये दिव्यमस्त्रं तद् घोरं पाशुपतं प्रभो!॥

इति किरातप्रबन्धः समाप्तः।

# कैलासवर्णनप्रबन्धः

अजे विमतजनविलासिनीनयनवारिनिर्झरवर्धनकलाकौशल-धुरीणदोर्दण्डचण्डिमा स पाण्डवसूनुः आरादेव दूरतरविसारिणीभिर्नारायणभुजबललोड्य (वीम?मान) मन्दरमहीधरान्दोलितकलशाम्बुराशिकल्लोलमाला- परस्परोन्मर्दनिष्पत- (री?त्) फेनकूटपाण्डित्यपाटच्चरद्युतिभिः उत्तालताण्डवाडम्बरप्रसृमरप्रमोदत्रिपुरहरवदनसरसिजोदित्व (रम?रा) ट्टहासद्युतिनिवहसहचरिणीभिः अविरतर्सान्निहितपशुपतिमकुटशशाङ्कलेखसौहृदय्यसमापतितसककलोकैरवाकरकान्तिकदम्बकविडम्बिनीभिः प्रभामण्डलीभिः अपिहितापरवर्णाधिकरणधावल्यद्वैताविद्यासिद्धान्तमध्यापयन्तमाशाविभागान्, अन्तरिक्षपरिमाणजिघृक्षयेव स्वीकृतनिरतिशयौन्नत्यपरिणाहैः अतिवेलनैर्मल्ययोगादविभाव्यमानरूपैः स्वेच्छानुरूपसञ्चाररसिकदिविजविमानसरभससंघट्साध्वस (?) ध्वस्त (मान) मानिनीस्वयंग्रहसुखायमानवैमानिकाभिनन्द्यमानैः अपेतसंख्यैः शिखरैः उल्लिखितोर्ध्वाण्डकटाहम्, अमरनगरतरङ्गिणीतुङ्गतरङ्गभङ्गशीकरभारिवालसमीरणसञ्चरणसुभगलताभवनविहरण (मना?) सु (?) चारणकिन्नरसीमन्तिनीवदनसरसिजनिर्गच्छदच्छिन्न-(भवदवदात) गर्भनिर्भरमनोहरसंगीताकर्णनसमुत्सुकस्तिमितोत्कर्णकुरङ्गयूथम्, अमृतकरकरावमर्शद्रुतशशिकान्तमणिनिष्यन्दझरीसहस्रोपकण्ठप्ररूढैः इतरेतराश्लेषनिबिडविटपिदुवेहफलकुसुमकलिकाकिसलयगुलुच्छच्छदभरावनम्रैः पादपैः उपशोभितोपान्तदेशम्, अभ्यर्णविक्रीडदमरेश्वरौपवाह्यसाधर्म्यदुर्वहैः स्फाटिकमणिगण्डशैलैरुपरुद्धैकभागम्, क्वचिद् अतिचिरारब्धनपोयोगविगलितहामोहमहिपोज्ज्वलहृदयपुण्डरीकमध्यप्रतिष्ठापितपरमशिवस्वरूपैः अशेषकलुष-

राशिचूर्णीकरणनिपुणरुद्राक्षवलयविलसितप्रकोष्ठैः पञ्चाङ्ग परिस्फुरित-भसितत्रिपुण्ड्राभरणैः शतरुद्रीयमध्यसुप्रतिष्ठितपरमरहस्यमन्त्रोद्धज-पैकतानमानसैः तापसैः उद्भासमानम् क्वचिच्च स्मरान्तक-पदाम्बुजसेवामहोत्सवकूतूहलिभिः अनेकलोकान्तरापतितैः असमान-वेषभाषाकारपरिचितैः अत्यन्तभक्तिभरनम्रकन्धरैः अवसरमभिलषद्भिः उद्भिन्नपुलकनिचुलिताकृतिभिः उत्तमाङ्गनिवेशितकरकमलकोरकैः त्रिपुरदहनमदनसहननभासितकारिवारणासुरदण्डधरदम्भखण्डनव- प्रति (घान्ति?बन्धी) भवदन्तकवधकालकूटकबलनप्रमुखप्रवरचित्रचरित्र-स्तोत्रवाचालितदिशाकूलैः महाजनैः महनीयमानम्, अपरत्र च तपोवनप्रियतमा नैसर्गिकमपि विरोधं दूरीकुर्वाणैः अस्खलितसौहार्दसारसमाहितहृदयैः, अचलवृत्तिभिः नानामृगैः परिवृतम्, निखिलभुवनकोशसुचरितपरिपाकमिव (संभूयन्त? सम्भूतं), आनन्दस्याप्यानन्दपारतन्त्र्यसंदापिनम्, उच्चाटनौषधमिव समस्तदुश्चरितानां, सहायमिव गुणगणस्य, अरातिमिव दुराचाराणां, अवतारमिव सुचरितानां सवितारमिव साधुजन-मानससरसीरुहाणाम्, आत्मानमिव अधःकृताशेषमहीभृ (नं? तां), रघुपतिमिव खरविरोधिनम्। सरसिजसम्भवमिव सत्यावासम्, अभिमन्युमिव सुभद्रोत्पतिं, भृगुपतिमिव अर्जुनकुलवर्धनोल्ललितं, हरिमिवा-नन्तभोगसुखोपविष्टं, हरमिव सर्वमङ्गलोल्लसितं, अपरिगणित-कन्दरोपेतमप्येकगुहाधिष्ठानं, सर्वप्रियमप्यत्यन्तमहितम्, अवाङ्मनसगोचरम्, अनवरतवात्सल्यमात्रगृहीतविग्रहेण यथाजाताग्रहेण परिकल्पितशिरोलङ्कारं कैलाशैलमालोकयामास॥

**इति कैलासवर्णनप्रबन्धः समाप्तः।**

# व्यासोत्पत्तिप्रबन्धः

सुरपुरतरुणीमुखारविन्द-
स्तुतनवकीर्तिवितानितावकाशः।
उपचितभुजदण्डचण्डिमा प्रा-
गुपरिचरो वसुरित्यभून्नरेन्द्रः॥१॥

दृष्ट्वा शुक्तिमतीं पुरीपरिसरे यान्तीं स्रवन्तीवरां
रुन्धानं मदनान्धमेष कुपितः कोलाहलाख्यं गिरिम्।
क्षोदीकृत्य पदाथ ताद्विवरतो यान्त्या तया तुष्टया
तत्संयोगजमर्पितं नृमिथुनं जग्राह जाताग्रहः॥२॥

कृत्वा सेनाधिपत्ये पुरुषमिह पुनः पुण्यपूरैकलभ्यां
पाणौकृत्य स्त्रियं तां त्रिभुवनहृदयानन्दिनीं मेदिनीशः।
आतन्वन्नादरेण स्वकुलसमुचितान्येतया रामयाऽमा
रेमे चेतोभिरामे पुर इह गिरिकाभिख्यया ख्यातकीर्तिः॥३

सुस्नाता सुदती तुरीयदिवसे कान्ता कदाचिन्नृपं
मन्दं मन्दमुपेन्त्य मञ्जुगमना मन्दस्मितार्द्राननना।
साकूतैर्ललितैरपाङ्गलसितैः प्राप्तं जगादार्त्तवं
मेध्यानाहर भो मृगानिति तदैवोचे पितृणां गणः॥४॥

क्षोणीपतौ मदकलं प्रति कृष्णसारं
तूणीमुखे पतितपाणिनखाङ्कुरेऽस्मिन्।
एणीकुलानि तरलैर्यमुनाजलानां
वेणीमिवाक्षिकलनैर्विपिने वितेनुः॥५॥

ऋतुस्नातां प्रियां तत्र ध्यायतः पृथिवीपतेः।
रेतःपपात सङ्कल्पसमागमबलात्तदा॥६॥
वटपत्रोदरे न्यस्य तद्रेतः पतितं नृपः।
श्येनस्य हस्ते प्रददौ प्रियायैदातुमात्मनः॥७॥

तदनु गगनमुच्चैर्लङ्ध्यमानं तमन्यः
सपदि पललबुध्या पत्रिराजोऽभ्यधावत्।
अलमलमितिवाचां विस्तेरणात्र युद्धे
महति नृपतिरेतो यामुनेऽम्भस्यपप्तत्॥८॥

पुराब्जयोनिशापेन मत्स्यरूपाप्सरोवरा।
अद्रिजा पतितं रेतः सहसा पुनरग्रसीत्॥९॥

आपीय तं मत्स्यवधूस्तदानीं
आपन्नसत्वामथ वर्तमानाम्।
आनायभृत् कोऽपि निबध्य दैवा-
दानीय तां शङ्कुलया व्यलावीत्॥१०॥

तदीयगर्भे तरुणार्कशोभं
निरीक्ष्य दाशोमिथुनं तदानीम्।
आश्चर्यपर्याकुलचित्तवृत्ति-
र्न्यवेदयत्तद्वसवे नृपाय॥११॥

तयोःपुमांसमादाय कन्यामस्मै ददौ नृपः।
लालिता चामुना काली ववृधे मत्स्यगन्धिनी॥१२॥

सा मत्स्यगन्धीति जगत्प्रसिद्धा
कन्या पितुर्दाशपतेर्नियोगात्।
कलिन्दकन्यासलिलप्रवाहे
समाददे नाविकवृत्तिमुद्राम्॥१३॥

मुनिःकदाचिद् दिननाथतेजाः
पराशराख्यः पथिकैरुपेतः।
त्रिपुण्ड्रधारो हरसक्तचित्तः
भानोस्सुतातीरमगात्तितीर्षुः॥१४॥

नौकाञ्चले कृतपदां नवयौवनोद्यत्-
सौन्दर्यसारतरलीकृतविश्वलोकाम्।
तां क्षेपणीविरलसमानकारविन्दां
कन्यां पराशरमुनिः कलयाञ्चकार॥१५॥

ततस्तदानीमतुलजलभरणभासुरपयोधरनिराकरणचरणचतुरकचभारभासुरां, मधुरमधूलीपानकेलिदुर्ललितालिपालिललितालकालिविराजितां, चिल्ली-वल्लीनदीनटनरङ्गायमाणनिटिलतलां, उज्जृंम्भाम्भोजचलदलायत- विलोचनां, अतिचतुरशरच्चन्द्रनिन्दापराननारविन्दां, जम्भारिकुम्भीन्द्रकुम्भसदृश-कुचभारविनम्रमुग्धमध्यलतां, घनजघनभारभुग्नमृदुलपादपयोजां, यक्षेश्वरस्थितिमिव अलकाभासुरां, शरदमिव पयोधरमनोहरां, नक्षत्रमालामिव चित्रश्रवणालङ्कृतां, दीर्घिकामिव कमलानन्दां, विराटराजधानीमिव मत्स्यौजसां, शशाङ्कतनुमिव प्रसादोपेतां, सरस्वतीमिव विकलाम्भोजलोचनां, जलदकाललीलामिव अकुलीनां, वृश्चिकस्थितिमिव क्रमातिक्रान्तकन्या-तुलामतुलामपि तुलाकोटियोग्यां भौमामपि सहस्रालोकनोचितां, विमलाम्बरामपि मुनिविकारपरां, एनामालोकयामास॥१६॥

सरोजसौभाग्यमुषा तदानी-
मुरोजयुग्मेन विराजमानाम्।
परापरज्ञोऽपि निरीक्ष्य कन्यां
पराशरः पञ्चशरातुरोऽभूत्॥१७॥

पृथङ्नयास्मान् पथिकान् विहाय
नावो बिभेम्यायतलोलनेत्रे।
इत्येवमुक्त्वा मुनिनाथ पान्थान्
निनाय बद्धाञ्जलिराशु बाला॥१८॥

पुनस्तयानीतमनल्पपोत-
मेकस्समारुह्य मुनिस्तदानीम्।
एह्येहि वत्से मदनाभितप्तं
परिष्वजस्येति मुहुर्बभाषे॥१९॥

एतदाकर्ण्य सा तन्वी वेपमानाब्रवीन्मुनिम्।
कन्याहं मत्स्यगन्धी च तीरगाः पथिकाः मुने॥२०॥

तदनु मुनिवरोऽसौ कन्यकात्वाविरोधा-
न्नवसुरभिलमङ्गं चारु तस्या विधाय।
तुहिनकणविकीर्णं सैकतं भूतलं तद्
हृदयनिहितमर्थं तत्र लेभे च सर्वम्॥२१॥

अथ निगमतरोः फलप्रकाण्डं
प्रणवलतानलिनीदिनाधिनाथः।
विपुलतरपुराणसागरोद्य-
न्मणिरभवन्मुनिपुङ्गवः कुमारः॥२२॥

इति व्यासोत्पत्तिप्रबन्धः समाप्तः॥

## युधिष्ठिराभिषेकप्रबन्धः

पूर्वं विप्रविनिर्जिताः किल गताः श्रुत्वाथ तान् पाण्डवा-
नात्तामर्षममून् निहन्तुमनसो वार्ष्णेययोगात् पुरः।
ते सर्पा इव कर्णदर्शनजुषो गान्धारमन्त्रेरिताः
कौरव्याः कुटिलाः समेत्य रुरुधुः पाञ्चालभृभृत्पुरीम्॥१॥

तत्र चाकाण्डे कर्णजयद्रथसौबलसुयोघनप्रधानवीरवरप्रेरितकौरवबल-समाक्रान्तपुरजनाक्रन्द-नाकर्णनामर्षसमभिद्रुतधृष्टद्युम्नशिखण्डिप्रमुख-प्रवीराञ्चितपाञ्चालपृतनासंप्रवृत्तसंप्रहारक्रमविवृद्धकोलाहलाकर्णनादन्तर-वस्थातुमसहिष्णुरूढरथेषूढकोदण्डेषु पाण्डववीरेषु नासीराग्रमापतितेषु-

राधेयगान्धारसुतोग्रदंष्ट्र-
सुयोधनोदग्रविषेण घोरम्।
अतर्जयत् कार्मुकमर्जुनस्य
विष्फारमन्त्रैः कुरुसैन्यनागम्॥२॥

ततश्च पञ्चाप्यमी तुल्यदारग्रहणजनितकुरुकलङ्का वध्यन्तां वध्यन्तामित्यभिपत्य घोराहवकारिषु तत इतः पतद्वृकोदरदवानलहेतिनिवारणासमर्थेषु ससिन्धुराजेष्वपि कुरुवीरेषु संमुखापतितसव्यसाचिसायकपातसंमूर्च्छिते सूतापवाहिते सूतसूनौ प्रस्थानदुःशकुनयोगोऽयमिति दुष्टशकुनिसमाश्वास्यमानान् पर्याकुलान् दुर्योधनादीनभ्येत्य फल्गुनेषुमिव कर्णभेदिनीं वाचमूचे भीमसेनः-

यूयं कस्मादकस्मादिह समुपगताः सूतसूनोः श्रमार्थं
नेतुं वा तं शरासं विजयकरसमाकृष्टिभिः क्लिष्टसारम्।
कन्यासूर्भूमिरेषेत्यपरमिह वधूरत्नमन्वेषितुं वा
सौभ्रात्रादीक्षितुं वा कपटजतुकुटीभस्मपिण्डानिमान् नः॥३॥

इत्युदीर्य सपत्राचिकीर्षौ निष्पत्रीकृतसाले काल इव दण्डधरे समाद्रवत्यमुष्मिन् हाहारवैस्तस्य सिंहारवमनुकुर्वती निवृत्तेऽप्यस्मिन् भीममयीरिव दिशः पश्यन्ती पर्यधावत दुर्योधनसेना।

पराजिताः कर्णपुरोगमास्ते
पुरोचनं वर्त्मनि गर्हयन्तः।
रथैर्ययुः खण्डितकेतुदण्डैः
पुरं विलक्षाः कुरुराजपुत्राः॥४॥

जयश्रियं प्राप्य वधूं द्वितीयां
कृतोत्सवोद्घोषमुपागतांस्तान्।
पतीन् प्रहर्षेण ददर्श कृष्णा
न वेत्ति सा मुग्धवधूः किलेर्ष्याम्॥५॥

इत्थं मानपरे किल
रुन्धति सबले कुरुद्वहे याते।
अनुरुन्धन् पुनरागात्
सम्मानपरो यदूद्वहः सबलः॥६॥

तं माधवं पुरवधूजनधैर्यचोरं
तापिञ्च्छगुच्छरुचिमाश्रितजालमार्गा।
पत्युः सखेति भुवनातिशयीति कृष्णा
कारुण्यसिन्धुरिति कौतुकिनी ददर्श॥७॥

तत्रोत्तरोत्तरमहोत्सवमोदमानैः
पाञ्चालपाण्डुतनयैरभिपूज्यमानः।

रामान्वितोऽरमत फल्गुनवल्गुबद्ध-
क्रीडाविनोदनतनूनि दिनानि शौरिः॥८॥

प्रीताशयोऽथ विदुरो धृतराष्ट्रमूचे
दिष्ट्यास्मदन्वयमगात् खलु याज्ञसेनी।
किं किं सुयोधनवृतेति वदन्तमेनं
पाण्डोः सुतैरधिगतेति पुनर्न्यगादीत्॥९॥

ततश्च दिष्ट्या न नष्टाः कृतार्थाश्च पार्था इति सावहित्थविकत्थिनि धृतराष्ट्रे निःसहचेताः कर्णसहायो दुर्योधनो रहसि तं स्वपितरमेवं प्रावोचत्।

अयि प्रियसुयोधन तात! निरुद्योगिनामस्माकं द्विवारं पराजयदायिषु सद्यः समुच्छेद्येषु सहजरिपुषु तेषु सपरितोषं ब्रूषे। किं पुनरेषु विधातव्यमित्यभिधीयताम्—तत्रैव चारैर्विषप्रदानं वा द्रुपदस्य धनप्रदानामेषां निर्वासनं वा, द्रुपदपुत्रैर्बलमत्तौर्व्यतिभेदनं वा, तुल्यवल्लभानामेषां मिथो वैरकरणं वा, पाञ्चाल्या एव मन्त्रौषधैस्तेभ्यो विभेदनं वा, हृद्याङ्गनाभिरैन्याभिरमून् विलोभ्य तस्या विरोधनं वा, प्रबलतरवृकोदरच्छलवधेन दुर्बलानामेषां किङ्करीकरणं वा, पुरमानीय पुरेव गरादिप्रयोगो वेति।

परीक्षितभ्रष्टममीषु तादृशं
पराक्रमणैव तु ते वधोचिताः।
तदर्थिना पक्षबलं नृपेन्दुना
प्रवर्ध्यतामित्यवदद् रवेः सुतः॥१०॥

धृतराष्ट्रस्त्ववादीत्—

राधेय वीर! ननु युक्तमिदं वचस्ते
मा कुप्य निष्परिकरेष्वपि तेषु भग्नः।
सोऽयं पराक्रमरसः फलिता कदेति
भीष्मादिभिः सह ममास्ति विचिन्तनीयम्॥११॥

इति समाहूतैः शान्तनवद्रोणविदुरैः सामदण्डभेदैरिवोपागतैः पार्श्वकायः

शूलिकयोः दुयोधनकर्णयोर्दुर्नयदुर्यशसोरिव प्रसरमुपरुन्धद्भिः षड्गुणानिव पाञ्चालीपाण्डवानुपगृह्य मानयितुं बहुधा प्रतिपाद्यमानः प्रज्ञाचक्षुः स्वयं प्रतिचेता नीतिविदुरं विदुरमेव द्रुपदपुरं प्रजिघाय।

**येषामयं शाश्वतिको विरोध-**
**स्तेषां मिथो द्वन्द्वसमुत्सुकानाम्**
**द्रागेकवद्भावमसौ विधास्य-**
**न्नन्धो नृपः शाब्दिकवद् बभासे॥१२॥**

**प्राप्तोऽथ तत्र विदुरः सहसा पुरस्ताद्**
**गोविन्ददर्शनवशादवशीकृतात्मा।**
**तैर्जातुषालयकृतोपकृतिं विचिन्त्य**
**वाष्पायितैर्द्रुतमवन्द्यत पाण्डवेयैः॥१३॥**

तत्र च ते विदुरकथितप्रज्ञाचक्षुर्विज्ञापनश्रवणाद् यज्ञसेनादिभिः सह संमन्त्र्य मुकुन्दशासनं प्रमाणयन्तः सकुन्तीपार्षतीकाः पार्षतानुगताः श्वशुरदत्तवहुमात्रहास्तिकपादाताश्वीयरथकड्यपरिपीड्यमानक्षितिचक्राश्चक्रधर-हलधराभ्यां सह वक्रवचनपरिहासरसपरिलङ्घितमार्गाः कुतूहलमत्तपुरजनं हस्तिनपुरमभिप्रविष्टाः परिहृष्टान् धृतराष्ट्रभीष्मादीनभिप्रणेमुः।

**कुरुमातरमेत्य पार्षती**
**सह कुन्त्या प्रणनाम सौबलीम्।**
**सुभगे! कुरुवंशवर्धिनी**
**भवितासीत्यवदन्मुदैव सा॥१४॥**

**पाण्डुरूप्यमुदवाप्य गृहे ते**
**शौरिसीरिविदुरादिपरीताः।**
**गूहिताशयसुयोधनकर्ण-**
**प्रीणिताः सदयिताः सुखमूषुः॥१५॥**

ततो धर्मसूनुममुं प्रकृतिवृद्धिहेतुं गुणशालिनं शुद्धाकारं कौरवपदस्यार्धे निवेशयितुकामस्तद्धितवेदी पौरजानपदादीनपि वृद्धानुपानयन् धृतराष्ट्रो जतुगेहजतापनिर्वापणार्थमिवाभिषेकक्रियां प्रारभत।

गाङ्गेयकुम्भेष्वथ गाङ्गमम्भः
प्रजाप्रमोदेन सहोपनीतम्।
व्यासोऽपि दैवाद् ददृशे शरीरी
पूरोः कुलस्येव स भाग्यपूरः॥१६॥

जित्वा धरित्रीमखिलां क्षितीशान्
कृत्वा वशे दिव्यमधैस्त्वमिष्ट्वा।
सुखेन जीवेति तमभ्यषिञ्चन्
कानीनधौम्यप्रमुखा मुनीन्द्राः॥१७॥

गाङ्गतोयपरिषेकतस्तदा
पाण्डुरेव ददृशे स पाण्डवः।
किञ्च साधु धृतराष्ट्रमप्यमुं
मेनिरे मुदितचेतसः प्रजाः॥१८॥

यदैव मूर्धन्यभिषेकधारा
महर्षिदत्ता निपपात राज्ञः।
अमर्षदत्ता हृदये तदैव
सन्तापधारापि सुयोधनस्य॥१९॥

ततश्च प्रज्वलिष्यत्प्रतापत्रासशरणागतं द्युमणिमण्डलमिव मणिमकुटं शिरसा संभावयन्नर्धराज्याभिषेक इति प्रजाभिः प्रमोदविस्मृतमनुस्मारयितुमिवार्धराजाकृतौ फालदेशे कृतपट्टबन्धनो रत्नभूताः सर्वेऽपि वयं त्वामेवाश्रयाम इति मन्त्रितुमिव कर्णान्तर्गतैर्दिव्यमणिमण्डलैराकलितकुण्डलः परनगरेभ्यः समुपगम्य वक्षोभागमारोक्ष्यतीनां विजयलक्ष्मीणां गणनाङ्कानिव मौक्तिकगणानुरसा धारयन् कनकवलयभरणमिषाद्धरणिवलयमेव निरायासं भुजेनोद्वहन्निव समरोद्यमकौतुकादिव कटकबन्धदर्शितश्रीरतुललक्ष्मीप्रदातृतयेव समुद्रतां गतेन विद्रुमकान्तिधरेण करेणोल्लसन् परिहितदिव्यक्षौमोपरि विराजितानेककाञ्चीमण्डलतयैककाञ्चीलाभचरितार्थं तुण्डीरराजं विडम्बयन्निव कमलाक्षकटाक्षपथेनावतीर्णयेव दुर्योधनकुनयभनेन समाश्रितयेव

सद्यःप्रविष्टया राजलक्ष्म्या विशेषोज्ज्वलीकृततनुः सादरप्रणतैः सोदरादिभिः साकं नागपुरप्रदक्षिणाय प्राक्रमत।

**ब्रह्मवर्चसिभिरर्पिताशिषो**
**राजवर्चसधरो नरोद्वहः।**
**पल्यवर्चसिनि हस्तिवर्चसि-**
**न्यास्थितः करिणि पर्यगात् पुरीम्॥२०॥**

ततश्च नगरपरिक्रमणप्रकटितप्रभावहल्लोहलनिर्लोलितमानससकलमानवविविधमाननावलोकनादमर्षप्रकर्षप्रधर्षितधीरसूयानिधिः सुयोधनो रहसि पितरमेत्य शोककलिलो विललाप।

**स्वं पार्थसात्कृतश्री-**
**र्दासेरप्रमुखदुरुपदेशेन।**
**दासीकरिष्यसि परं**
**तेषां वत कुरुकुलार्भकानेतान्॥२१॥**

निशम्य चैतत् सन्तापशाली सान्तर्विचारो गान्धारीपतिः कौन्तेयानाहूय सान्त्वयन्नेवमवादीत्।

**पुत्रा मे दुर्विनीता मृदुलमतिरमून् नाहमोशे निरोद्धुं**
**तद् याचे सस्यकान् वो ननु सहवसतौ संपतेयुर्विरोधाः।**
**पूर्वैरध्यासितं प्राक् करिपुरजननात् खाण्डवप्रस्थसंज्ञं**
**तं देशं यात यूयं सकलहितपरो माधवो मन्यते चेत्॥२२॥**

इति वदति कुरुपितरि पितृवचनं मानयितव्यमेवेति माधवगिरा पाण्डवेषु खाण्डवप्रस्थप्रस्थायिषु धर्मसुतस्य राज्ञो लोकरञ्जनशक्त्या वा नन्दसुतस्य हृदयाकर्षणशक्त्या वा सहैव प्रतिष्ठासमानेषु नागरजनेषु अर्धप्रभुणा सह निर्गच्छतां कुलोच्छेदः प्रतिक्रियेति प्रतिरुन्धति ससौबले सुयोधने तेषु च लक्ष्मीसहायमेव सहायं मन्यमानेषु यौतकलब्धबलमात्रानुयात्रिकेषु व्यासधौम्यादिसमेतेषु क्रमेण सज्जातकफलमिवायुराद्यधिष्ठितं विष्णुलोकमिव विमुक्तजनवासं तल्पदेशभिव कान्तारचितं तत्प्रदेशमवाप्य निवासोपायं

चिन्तयत्सु पौरेयानस्मान् वानेयान् कुर्वतः सुयोधनस्याहमद्यैवेत्यर्धोक्तिविरते क्रुद्धात्मनि वृकोदरे चिरन्तनेन पुंसा विचिन्तितस्य पुरन्दरस्याज्ञया पुरतो ददृशे किल निरायासलिखिलशिल्पकर्मा विश्वकर्मा।

इन्द्राज्ञयागतोऽहं नन्दात्मज तव हि शासनं कर्तुम्।
तत्किं करोमि भगवन्नित्ययमपतत् पदाम्बुजे शौरेः॥२३॥

इन्द्रप्रसादपिशुनामिन्द्रप्रस्थाभिधां पुरीमधुना।
इननन्दिनीतटान्ते विरचय करकौशलानुरूपां ते॥२४॥

इति हरिवचनेन त्वष्टरि स्पष्टमेव
स्पृशति किमपि पृथ्वीं विश्वतः पार्श्वधेन।
अलसदवनिपृष्ठाद् गोपुरोद्यानवापी-
मणिभवनसहस्रभ्राजिता राजधानी॥२५॥

या सूत्रकारप्रवरस्य वैभवात्
क्वचिन्न वक्तव्यपदं समेयुषी।
अशेषसम्पादितगुप्तिबन्धना
श्रियं दधौ व्याकरणातिगामिनीम्॥२६॥

ततश्च विश्वकर्माणं विश्वनाथं वा मनसि बहुमानयत्सु विस्मयप्रमोदाकुलेषु सकलेषु,

दत्त्वा धनं धर्मसुतो द्विजेभ्यो
जयेति जीवेति विघोषिताशीः।
आरूढनागो नगरीमयासी-
द्धरिं पुरोधाय दिवं यथेन्द्रः॥२७॥

ततश्च,

दिव्यश्रीजुषि तत्पुरे कुतुकिनो देशान्तरादागता
विप्रेन्द्रा वणिजश्च सर्वनिगमप्रष्ठाः प्रतिष्ठां ययुः।

शिल्पज्ञा अपि गायकाश्च गणिकाः सद्वर्णरागश्रियः
किं भूम्ना वचसां दिनैः कतिपयैः पूर्णं तदासीत् पुरम्॥२८॥

तत्राथ सूतजसुयोधनसौबलाद्या
भीष्मादिभिः सह समेत्य सभाजितास्तैः।
आलोक्य तत्पुरविभूतिमभूतपूर्वा-
मन्योन्यमौनशरणाः स्वपुरीमवापुः॥२९॥

त्वष्टारमिष्टैरुपचारभेदैः संप्रेष्य संप्रीणितपौरलोकाः।
पञ्चापि पाञ्चालसुतामुखेन्दुसञ्जोषसञ्जातरसा ननन्दुः॥३०॥

इति युधिष्ठिराभिषेकप्रबन्धः समाप्तः॥

## मत्स्यावतारप्रबन्धः

किं मत्स्याकृतिमाश्रितोऽसि दयिते! त्वन्नेत्रमैत्रीरसात्
किं ते तोयगतिः सुखाय भवती तत्सम्भवेत्यादरः।
शोच्या नन्वनिमेषता तव कथं त्वां पश्यतो नो भवे-
दित्थं सल्लपितं मुकुन्दरमयोर्मुग्धं शिवायास्तु वः॥१॥

निगमहरणगर्वाध्मातदुर्वारदैत्य-
क्षपणनिपुणघोरप्रक्रमं चक्रपाणेः।
वपुरधिकविशालव्यायतं त्रायतां तत्
प्रलयजलधिलीलाशीफरं शाफरं वः॥२॥

पुरा विश्वप्लाविन्युपनमति कल्पान्तसमये
पुरस्तादुत्तिष्ठन्नपर इव संवर्तसमयः।
घनध्वानोदग्रस्त्रिभुवनविनाशं प्रकटयन्
हयग्रीवो नाम त्रिदशकुलवैरी समुदभूत्॥३॥

स खलु समरधरणिषु परिमथितसकलसुरकुलमहिमा, निजतेजसा दहनस्यापि दाहदायी, तपनस्यापि तापहेतुः, शतमन्युमपि गतमन्युमादधानः, दण्डधरेऽपि दण्डमर्पयन्, पाशिनमप्यपाशतामुपनयन्, प्रभञ्जनस्यापि भञ्जनं सञ्जनयन्, भूयोऽपि भूयस्तरवैरभारेण सुरशब्दमप्यसहमान इव पृथ्वीसुरानपि परिमर्दयन्, अध्वराणामनवभृथमपि समाप्तिसमयमुत्पादयन्, अध्ययनेष्वपि निजगर्जितैरकाण्डानध्यायमुत्थापयन्, पुनरपि चैकप्रयत्नेन सकलधर्मपथनिर्मूलनकर्मण्युपायमालोच्य निखिलमूलभूतनिगमकुलापहरणमेव साधुतरं मन्यमानः कदाचन सञ्चरिष्णुर्विष्णुपदेन ब्रह्मणः पदमुपसरन्

अमुं पुनः संवर्तसमयसमुपगमसंवर्तमाननिद्रावतारनिमीलदष्टनयनं क्लिष्टतरया गिरा गीयमानशतधृतिमपि प्रमुषितधृतिं चतुराननमप्यचतुरवदन-मन्यादृशतामुपगतमालक्ष्य तत्क्षणनिश्चितनिजमनोरथलाभः, तस्य च स्वापाय कलितचेतसोऽपि स्वापायमजानतो देवस्य वदनसीमन्याकुलाकुलामाक-लितवासामासन्नविपदुपचिन्तयेव परिम्लानवर्णां साध्वसादिवावसन्नस्वरां सम्भ्रमादिवाकुलितपदक्रमां त्रयीमयीं सरस्वतीं बलादपजहार।

उद्यत्ताराभिरामां विधिमयवदनालक्ष्यकामानुबन्धां
सोऽयं प्रौढार्थवादप्रचयकचभरां चारुमन्त्रानुलापाम्।
गूढाद्वैतप्रदेशात्मकगुरुजघनामुल्लसत्पादशोभा-
मापूर्णाङ्गी त्रिवेदीसुदृशमपहरन् पूर्णकामो बभूव॥४॥

हा हा किमेतदिति किञ्चन सम्भ्रमेण
शंसन्तमेव पुनरप्यधिरूढनिद्रम्।
ब्रह्माणमेष निभृतं विहसन् प्रतस्थे
कल्पागमेऽप्यपरिकुण्ठितशक्तिभूमा॥५॥

तावत् त्रयीविरहिते भुवने बभूवुः
कर्माणि हन्त सकलानि विमन्त्रकाणि।
अन्योन्यमेव च निगूहितविस्मृतीनां
हासास्पदं क्षणमभूच्चरितं द्विजानाम्॥६॥

एवं वेदप्रपञ्चे विलयमुपगते जातकम्पे निलिम्प-
व्राते दैतेयजातेरपि मदविभवे तायमाने तदानीम्।
तत्प्रत्यानीतिहेतोरकुरुत भगवानुद्यमं पद्मनाभो
नो चेदाम्नायगम्यः स्वयमिह भुवने कीदृशः प्राभवः स्यात्॥७॥

तत्तादृशे च समये दनुजेन्द्रदर्प-
कल्पान्तकालबलबाधितसाधुमार्गे।
गूढं निलीय निवसन्निव धर्मराशि-
रेकस्तपोनिधिरभूद् द्रमिलेषु राजा॥८॥

स खलु कमलनयनपदकमलपरिचरणव्रतः सत्यव्रतनामा तपोधनः कदाचन जलविहरणरसपरिहिण्डितपाण्ड्ययुवतीकुचकलशस्खलित-सलिलकणमौक्तिककणकृतमालायां घृतमालायां सरिति सन्तर्पयन्नर्पय-न्नन्तरङ्गमान्तरे ज्योतिषि च, तदन्तरे किल मन्त्रपूतसलिलभरितकराञ्जलिपुटे सलिलपवित्रीकरणविमुक्तकनकशकलायमानं विमलाम्बुबिम्बितमिव हृदयनिहितपरमज्योतिरङ्कुरं प्रदीपिततपोमयमहानलस्फुटितपतितस्फुलि-ङ्गशङ्कावहम् अपरिमितरोचिषं कमपि शफरपोतमपश्यत्।।

तं च पुनरञ्चितकुतुकमञ्जलिजलेन सह सरिति निहितमपि प्रबलतरचिलिचिमकुलकबलनभयचकितहृदयमिव सविध एव परिवलन्तमवलोकयन् किमिदमिति क्षणमिव निवसन् मुनिस्तन्मुखादेव-मविकलकरुणमसृणामशृणोद्धारतीम्।।

**आश्रितं मामनाथे किं प्रास्यसि त्वं नदीजले।**
**मात्स्यनीतिमतिक्रूरां वेत्सि किं न महामुने!।।९।।**

इति निशाम्य तदीयवाचमुदीयमानविस्मयकृपाबलविस्मृततत्स्व-रूपविचारो मुनीन्द्रो महामणिखण्डकान्तिमण्डजार्भकमेनं कुण्डिकाम्बुपूरे विनिधाय विधाय नियमशेषं ततस्तटिनीतटनिकटजमुटजाभ्यन्तरं जगाहे।।।

**ततोऽयमल्पकालेन वर्धमानः कमण्डलौ।**
**उदञ्चितमहातेजाः कथञ्चिदिव तस्थिवान्।।१०।।**

**ब्रह्माण्डभाण्डेऽप्यमितं बतासौ**
**कमण्डलौ मित्सति मत्स्वरूपम्।**
**इतीव हासेन स कूटमत्स्यो**
**ववल्ग वल्गुस्वनितो जलान्ते।।११।।**

**ततो जगत्क्षेमकरस्य तस्य**
**स्वयं किल क्षेममवेक्षमाणः।**
**उपान्तमायान्तमृषिं ययाचे**
**ततो महीयांसमसौ निवासम्।।१२।।**

आविस्मितोऽस्य परिवर्धनतस्तदानी-
मविस्मितश्च कुतुकेन स तपासेन्द्रः।
मत्वा विसारशिशुमेनमसारमेव
कुम्भे न्यधत्त निहितं श्रुतिवाक्यगुम्फे॥१३॥

नूनं स लोकनाथ-
स्तदा तु नातीव खेदमापेदे।
कलशाम्बुराशिशायी
कलशाम्बुन्येव येन निहितोऽभूत्॥१४॥

क्षणमथ चलदम्भोमण्डलं कुम्भदेशे
तमथ तरुणरम्भास्तम्भवज्जृम्भमाणम्।
मुनिरयमनुकम्पासिन्धुरन्धुप्रदेशं
विपुलजलमनैषीत् पालनैषी मनीषी॥१५॥

स जलप्रकृतिस्तावत् कूपदेशमवापितः।
असह्यामुन्नतिं भेजे नवीन इव भूपतिः॥१६॥

कूपतो झटिति वापिकाजलं
प्रापितोऽथ मुनिना महाझषः।
तैलबिन्दुरिव तोयसङ्गमा-
दानशे सकलमेव तत्क्षणात्॥१७॥

लोकस्तमनलं मेने तेजसा शफराधिपम्।
लोकमप्यनलं मेने निवस्तुं शफराधिपः॥१८॥

अतृप्तिमन्तं सकलेषु वारिषु
प्रतिक्षणोज्जृम्भितपीनविग्रहम्।
विसारतामागतमेनमीश्वरं
प्रमेहवन्तं मुनयः शशङ्किरे॥१९॥
ततो मुनिस्तमानिन्ये कासारं बहुयोजनम्।
कासारस्थितिरस्येयं दुरन्तेत्यपि चिन्तयन्॥२०॥

ततश्च तूलजालनिपतिबालस्फुलिङ्ग इव तरुणजनहृदयाङ्कुरितदुर्लभरागाङ्कुर इव सुमतिजनहृदयनिहितोपदेश इव तार्किकयूथविनिहितविवादलव इव सज्जनसमाचरितदुश्चरितलेश इव पिशुनमुखनिहितनिगूढवृत्तान्त इव निमेषमात्रेण निरवधि परिवर्धमाने, प्रलयपवनदलितपतितकनकशिखरिमहाशृङ्गशङ्काकारिणि, सन्ध्यातपबन्धूकितमहाम्बुदविडम्बिनि निरुपरोधमहसि महामीने, द्वित्रैरेव मुहूर्त्तैरपरिमितपरिवहमानसलिलरचितोदरमखिलमपि तत्सरोमण्डलमेकमीनमयमिवालक्ष्यत।।

चित्रं चित्रमहो बतेति विवशं नासाग्रदत्ताङ्गुलिं
पश्यन्तं स्थितमेव तापसमसावाहूय वैसारिणः।
आलेढुं मम नालमेतदुदकं किं मे निवासक्षमं
जानीषे न जलाशयान्तरमिति व्याचष्ट धृष्टाक्षरभ्।।२१।।

आश्चर्यमोहकरुणाभयकम्पितात्मा
योगेश्वरं तमथ योगबलेन राजा।
अम्भोधिशायिनममुं पुनरम्बुराशौ
चिक्षेप पक्षहतिभीतमिवाचलेन्द्रम्।।२२।।

तत्र पुनरतिविस्तारिपारावारवारिपूरावतारादीषदुच्छ्वसन्तमुच्चलन्तमुन्नदन्तमम्भोनिधिं प्रति गम्भीरिमतुङ्गिमस्पर्धानिबद्धरोषनिपतितमिव मेरुशैलं, तीरदेशसमारुरुक्षासमागतमिव बाडवानलम्, अन्तरान्तरा सलिलपानविदारितदारुणाननकुहरतया स्कन्दशरसन्दलितकन्दराञ्चितक्रौञ्चाचलश्रियमिव सन्दर्शयन्तं, भुजङ्गविलङ्घनभीतिसमाक्रान्तपातालोकमिव दृश्यमानम्, अभितो घूर्णमानविशालकर्णयुगलतया भागद्वयविमुक्तविचलदरित्रयुगलविचित्रसञ्चचारमिव महापोतं, सततसमुन्मिषितभास्वरनेत्रयुगलतया उभयसानुनिलीनदिवसकरतुहिनकरमण्डलमिव हिमाचलम्, ऊर्ध्वीकृततुङ्गैकशृङ्गतया मीनकुलसाम्राज्यपिशुनकेतुदण्डमिवोन्नमयन्तं, प्रलयपयसि निपतिष्यतो मुनिसप्तकस्यावरोहणवंशयष्टिमिव प्रदर्शयन्तं, जाज्वल्यमानशरीरस-

रीसरदंशुसन्तानसंशयावहया वंशरोपङ्क्त्या सलिलनिमग्नमपि बहिरवेक्ष्यमाणम्, इतस्ततः क्रीडाविलग्नसमुद्गत्वरकल्लोलजाल-निर्यन्त्रणनिमज्जितपर्यन्तभूमण्डलतया वारिराशेरिवासन्नभूमण्डल-प्लावनविभ्रममभ्यासयन्तम्, गगनगङ्गासङ्गमकौतुकमिव पयोधिवारां पूरयन्तं, सलिलसम्प्लवनमुपनतमिव गगनचारिणामुपदिशन्तम्, अक्षान्तबलविक्षोभित-जलक्रोडं, परिक्रीडमानमेनं मीनाधिनाथमालोक्य भीतभीतेषु सरभसापसरणमुखरितपाथस्सु यादस्सु, सरभसगमनानभिज्ञतया बद्धचक्रेषु नक्रचक्रवालेषु कर्दमकुहरनिर्मज्जनकर्मकर्मठेषु कमठेषु, त्वरितविचलन-जनितसलिलातङ्केषु जलमातङ्गेषु, तत इतः समुद्वल्गनमीनमणीकृतगगनतलेषु शफरकुलेषु, महावर्तगर्तनिपतनजनितभ्रमिषु तिमिषु, पुच्छताडनपीड-नोपनमदमङ्गलेषु तिमिङ्गिलेषु, जलराशिरपि स्वयममृतमथनप्रकम्पेऽप्य-सम्भावनीयामखिलजगत्क्षयप्रक्षोभेऽप्यननुभवनीयामतिव्यापदमापेदे।।

इत्थमयमङ्गविस्तृतिमतिदेशव्याप्तमखिलबाधं च।
प्रथयन् शफरस्वामी शबरस्वामीव लक्षितो लोकैः।।२३।।

सोऽयं स्वैरचरोऽपि विश्वभुवनप्रक्षोभिणस्तादृशो
रूपस्यासदृशं वचोऽतिकरुणं किञ्चिद् बभाषो झषः।
हा भीतोऽस्मि मुने तिमिङ्गिलगिलप्राया महाभीषणा
मत्स्या मत्सविधि जिघत्सव इमे वल्गन्ति किं मन्यसे।।२४।।

इत्थं निशम्य गिरमेष ततः परस्ता-
दस्मै हितं किमपि कर्तुमवीक्षमाणः।
कृत्स्नं किमेतदिति चिन्तितवान् महर्षि-
रत्यन्तरुद्धमनसो हि भवेद् विचारः।।२५।।

स्वतस्तावत्तेजोनिधिरयमकाण्डे च ददृशे
ततः स्पष्टां वाणीमलपदपि धीमानिव पुमान्।
क्षणादेतावन्तं वपुषि परिपोषं च विदधे
तथाप्येवं ब्रूते करुणवचनं नाम किमिदम्।।२६।।

विश्रृङ्खलेयं वपुषो विभूति-
स्तिमिङ्गिलेष्वप्यविभावनीया।
कथं किलैवं शफरे विभाव्या
विशङ्कया किं नं तु मीन एषः॥२७॥

आविष्करोति महिमानममानमेनं
मीनच्छलेन मयि कश्चन देव एव।
हा हन्त मीन इति दीन इति भ्रमान्मे
जातानि जाल्यचरितान्यतिलज्जयन्ति॥२८॥

उच्चावचैः किमु विकल्पशतैरिदानीं
गच्छामि कं शरणमन्यमिहाकुलोऽहम्।
प्रच्छादितस्वतनुमीश्वरमेनमेव
पृच्छामि तावदिति निश्चितधीरवादीत्॥२९॥

हन्त देव! करुणाकर! प्रभो!
नन्तुमप्यनिपुणोऽस्मि शङ्कया।
जन्तुमात्रमिति चिन्तया कृता-
मन्थतापरिणतिं क्षमस्व मे॥३०॥

किं त्वं क्रीडसि बाडवो हुतवहो रूपान्तरेणाधुना
किं तोये चरसि स्वराज्यविभवं द्रष्टुं प्रचेताः स्वयम्।
गूढक्ष्माधरबाधनाय निभृतं शक्रो नु चिक्रंससे
किं काकोलपिपासया विवलसे शम्भुस्त्वमम्भोनिधौ॥३१॥

चित्तं तु मे कथयतीव दुरन्तभूमा
दुग्धाम्बुराशिशयनो भगवानिति त्वाम्।
तत्त्वं प्रभो! सपदि वर्णय निणयार्थी
विश्वैकनाथ! कृपणः शरणं गतोऽहम्॥३२॥

इत्यालपन्तमवशं विनमन्तमेनं
वैसारिणः स करुणाक्षरमाबभाषे।

आपादयन् विवृतवक्त्रदरीनिरीतै-
दंष्ट्रांशुभिः किमपि फेनिलमम्बुराशिम्॥३३॥

सम्मोहं त्यज निर्मलाशय! मुने! त्वन्मानसाम्भोरुहे
निर्मायं विहरन्तमेकपुरुषं नारायणं विद्धि माम्।
जानेऽहं तव कल्पवारिधिजलव्यालोकने कौतुकं
तेनेदं त्वदनुग्रहाय विहितं जानीहि मैनं वपुः॥३४॥

अहनि समुपगन्ता सप्तमे दृप्तमेघ-
प्रहितसलिलवीचीविप्लुतः कल्पकालः।
त्वमपि च जलपूरे तत्र सप्तर्षियुक्तो
विचर विगतशोकां प्राप्य नौकामिहैकाम्॥३५॥

तत्र च तदानीं,

संसारवारिधिसमे विपुलाम्बुपूरे
धूतां षडूर्मिभिरिवाथ महोर्मिजालैः।
प्रज्ञामिवाशु तरणिं मम शृङ्गदेशे
तत्त्वोपदेशवचसीव दृढीकुरु त्वम्॥३६॥

इत्येवं निगदति सद्य एव तस्मि-
न्निस्सीमं प्रविशति गर्भमम्बुराशेः।
प्रस्तीमप्रमदभरेण तापसेन्द्रः
सप्ताहं हरिपदचिन्तनैरनैषीत्॥३७॥

ततः क्रमेण च गतेषु भुवनविलयसमुपगमविगलितबल-नरपशुपतगकुलविवशतरदशाविशेषशोचनीयेषु वासरेषु,

सत्यव्रतोऽपि च मुकुन्दपदारविन्द-
प्रत्यर्पितेन मनसा विनिमीलिताक्षः।
सद्यः श्रुतैरहह कल्पघनाघनाली-
निष्पेषघोरनिनदैः सहसोदमीलत्॥३८॥

उन्मील्य सकलदिक्षु विक्षिप्तचक्षुषि विक्षुभितहृदन्तरे समन्ततो दिगन्ततः समिन्धानसन्तमससन्ततिभिरन्धीकृत इव स्थिते मुनीश्वरे, हरित्तटभस्त्रान्तरनिरित्वरपुरस्तान्मारुतोद्दामवैद्युतानलसन्तापितकालाम्बुदमयकालायसपिण्डविस्तारणार्थमयोघनघट्टनिनदैरिव निष्ठुरतरगर्जितरवैरवकीर्णकर्णपुटासु जन्तुघटासु तत इतस्सम्पातिचम्पाविलासमात्रावशेषे ज्योतिषां प्रसरे, प्रयास्यदखिलजन्तुसन्तानोज्झितमारुतेष्विव सञ्चालितसकलभुवनतलेषु झंझामारुतेष्वपि सञ्चरत्सु भुवनभवनोपरि वितानितमेचकोल्लोचेष्विव रोचमानेषु जलनिधिवेलातलेभ्यः समुपनतसलिलप्लावनभयेन गगनपथमधिरूढेष्विव निबिडतमतमालकाननेषु, पुष्कलतरपुष्करभरपूरितेषु पुष्करपथनिरोधिषु पुष्कलावर्तकेषु, नीलिमाभिमानिनीरदकुलपरिचूर्णितधवलिमगर्वितशर्वपर्वतसर्वतोविकीर्यमाणशकलनिवहशङ्काकरैरतिकर्कशजलशर्कराजालैरभिमिलितासु प्रथमपतितासु पृथुलतरजलधारासु, विशीर्यमाणधरातलनिराश्रयसन्धावमानगन्धगुणशङ्काकरे नवरजोगन्धेऽपि सन्तायमाने, तत्क्षणेन वियत्तटपरिभ्रभदभ्रतरजलधरमयकरिघटासहस्रदूरतरलम्बमानशुण्डादण्डा इवातिस्थूलंभावुकाः, झटिति विघटितसन्धिबन्धनिपतिष्यदम्बरभित्तिमुत्तम्भनोत्तम्भितरजतस्तम्भशतसमानतामुपगताः निकाममामूलतो विदारितधरातलाः, निरुच्छ्वासविमूर्च्छितपशुमृगततयः गगनतलमपि सर्वतो निर्विवरमेकप्रवाहमयमिवातन्वानाः प्रतिनिमिषमूरुद्वयसमुदरद्वयसमुदकं पूरयन्त्यो वनानामपि वनात्मतया भुवनानामपि भुवनात्मतया पुनरुक्तिवैचित्र्यमिवोपदर्शयन्त्यो घोरघोरवारिधारा धाराधरप्रहिता निखिलमपि जगज्जातं निमज्जयामासुः॥

**इयानभूत् केन पयोविभूमा**
**घनाघनानामिति नाभिशङ्क्यम्।**
**समुद्धतानेकशतह्रदानां**
**दरिद्रता का नु जलप्रवाहे॥३९॥**

ततश्च चिरतरदुर्लभपरस्परविलोकनकुतूहलसमाकुला इव समुद्धतमहत्तरतरङ्गहस्ताः समस्तपयोनिधयः निजसलिलाधाराणामपि

धाराधराणामेतादृशनिरवधिसलिलसम्पदुपलम्भादिव विजृम्भितक्षोभाः प्रचुरतरप्रक्षोभपक्षीयमाणदुर्बलजलजन्तवः दुर्वीरगर्वोदयसर्वतः प्रवलमानप्रबलसत्त्वसञ्चयाः, क्षणादिव क्षोणीतलमाक्रम्य सम्मुखसमापतदुन्मदसलिलप्रवाहवेगानां पराङ्मुखप्रसरमेवोपदिशन्तः, पृथ्वीतलमध्यदेशे चतुराशान्तादधिकाशान्तसमापतदुत्तुङ्गतरङ्गसङ्घपरस्पर-सङ्घट्टनसमुत्पतदनल्पतरपयःपूरप्रसरैरितोमुखीमपि पयोवृष्टिमन्यतोमुखीमिव दर्शयन्तः, शूरा इव महासत्त्ववन्तो, भीरव इव बहुतरभङ्गवन्तः कालवशेन किलैकार्णवमेव जगदातेनिरे।

सत्यव्रतोऽवि च तथा भुवनप्रकम्पे
चित्तं निधाय सुदृढं पुरुषे पुराणे।
अत्यम्बुसीमनि परिप्लवते स्म यावत्
सप्तर्षिमण्डलमदृश्यत तावदारात्॥४०॥

तानपि मुनीननारतघनाघनघर्षणवशेन गगनपृष्ठादपभ्रष्टानिव सलिले दृष्ट्वा किमपि कृतार्थीकृतोऽपि सत्यव्रतोऽयमनालम्बे महाम्बुपूरे तैरेव साकमाकम्पितमतिः सम्प्लवमानो जलप्रकरपरिप्लवनपरिग्लपितभुजबलः समुल्लोलकल्लोलजालसमास्फालननिरुच्छ्वासीकृतवेदनस्तथाविधक-पटशफराधिपवचसि विश्वस्तचेता विश्वस्थितिहेतुं तमेव भगवन्तं करुणाभरणं शरणं ययौ॥

परिणुन्ना तदा देवी हरिणा करुणाबलात्।
धरणी तरणीभूता सरणौ समदृश्यत॥४१॥

सामुद्रिका इव जले विवशा मुनीन्द्राः
सामुद्रिकामिह निरीक्ष्य विशालरूपाम्।
सर्वे ससम्भ्रममिमामधिरुह्य जाताः
स्वं स्वं पदं प्रतिगता इव ते कृतार्थाः॥४२॥

तेषु क्षणं किल कृतार्थितमानसेषु
हा! हन्त घोरतरमारुतघूर्णमाना।

नौकेयमुच्चलिततुङ्गतरङ्गपूर-
क्षोभेण कामपि दुरन्तदशां प्रपेदे ॥४३॥

विक्षिप्यमाणेव दिगन्तरेषु
विभ्राम्यमाणेव निमज्जितेव।
दूरं समाघूर्णदकर्णधारा
नौका नृपश्रीरिव मन्त्रिहीना॥४४॥

मेनिरे मुनयः पूर्वं वारिसंप्लवनं वरम्।
वारिपाते पुरा दृष्टखेदभारनिरूपणे॥४५॥

अकुलापि च नौकेव माननीयेति मेनिरे।

एवं नाम तपोधना भृशतरव्याकम्पिनौकासरत्-
पाथश्शीकरवातपातपरुषव्यातोदशीतार्दिताः।
चक्रन्दुः किल हन्त जीवितहरा नौकेयमेको भवा-
नालम्बो बत पालयस्व भगवन्नित्येव बद्धारवाः॥४६॥

तत्तादृशे च पुनरतररहितमये समये,
झटित्यदूरादुदकप्रपञ्चा-
दुदञ्चितः कोऽपि जलप्रवाहः।
तदन्तराले ददृशे च कश्चि-
न्महामहीध्रप्रतिमः पदार्थः॥४७॥

हा हन्त हन्त तरणिप्रणिमज्जनार्थ-
मन्योऽयमापतति कश्चिदुपद्रवो नः।
इत्याकुले मुनिकुले स तु पूर्वदृष्ट्या
सत्यव्रतो मुनिरबोधि तमादिमीनम्॥४८॥

मूर्त्तिं कामपि लक्षयोजनमितां बिभ्राणमुद्भ्राजित-
ज्योतिर्मण्डलखण्डितान्धतमसं तुङ्गैकशृङ्गाश्रितम्।

विश्वप्लावनविश्रुतोदयमहाकल्पान्तकालोचितं
यादोभेदममुं विलासशफरं प्रैक्षन्त साक्षादमी॥४९॥

अद्भुतं किमु वदामि यः पुरा
लक्षितः करजले तिलोपमः।
लक्षयोजनमितः स एव तै-
र्लक्ष्यते जलचरो जलोदरात्॥५०॥

मुहुर्नमन्तं जयशब्दमुच्चै-
र्वदन्तमन्तःपरितोषवन्तम्।
मुनिव्रजं तं शरणं व्रजन्तं
जगाद तोषादनिमेषराजः॥५१॥

भो भोः सत्यव्रताद्याः! भयबलमखिलं मुच्यतामच्युतोऽहं
यातो वस्त्रातुकामो मम शिखरमुखें नावमायोजयध्वम्।
स्वैरं कल्पान्तकालं पुनरितरदुरालेकमालोकयध्वं
नौकामाकृष्य सोऽहं पयसि गुरुमरुच्चञ्चले सञ्चरेयम्॥५२॥

इत्येवमुक्तवति मुक्तशुचो मुनीन्द्राः
सद्यः समागतमहाभुजगेन नावम्।
तस्यैव शृङ्गविटपे घटयांबभूवुः
पृथ्वीधरस्थिरविरुढतरूपमाने॥५३॥

झषाश्रितां वशायातां प्रत्याहारावलीमिव।
नावमारुह्य ते चेरुः शब्दतन्त्र इवाम्बुधौ॥५४॥

एवं नावं शफरवपुषः शार्ङ्गिणः शृङ्गदेशे
कृत्वा भक्त्या विहितनुतयो भावयन्तो विभुं तम्।
तत्कारुण्यादुपचितमुदस्तत्र तत्र प्रचेरु-
र्यस्मिन् यस्मिन् भुवनवलये गन्तुमन्तस्समीहा॥५५॥

चिरमथ विरिचितनुतये
मुनये सत्यव्रताय देवोऽयम्।

अम्बुविहारी निखिलं
ब्रह्म सतत्त्वं विभावयाञ्चक्रे॥५६॥

स्पष्टं नश्वरतामशेषजगतां दृष्ट्वैव निश्चिन्वतो
विश्वव्याततरूपितामपि विभोर्निस्संशयं पश्यतः।
अद्वैतागमतत्त्वमस्य सुगमं सत्यव्रतस्याभवत्
प्रत्यक्षानुगृहीतमागमवचः श्रद्धेयमद्धा भवेत्॥५७॥

तदनु कपटशफरशरीरमुरारिमुखारन्दिनिरीयमाणनिगमवचन-परमार्थमयमधुरतरसुधाधाराल्पावितात्मनामुदकपरिप्लावितमिव तं भगवन्तमनुकुर्वतामतिभागधेयिनां तपोधनानामतिमहति काले विमोह इव विगलिते परमार्थतत्व इव भुवनविभागेऽपि विभाव्यमाने विपुलतरसलिलप्रकम्पेऽपि हृदयकम्प इव परिहीयमाणे, पुनरमीषामिव प्रजापतेरपि प्रबोधोदये प्रतायमाने, स खलु भगवान् अतिविचित्रचरित्रशुद्धतरहृदयमिमं चित्रशिखण्डिमण्डलमखण्डैश्वर्यशालिनि निजपदे समादिश्य, सत्यव्रतायापि नित्यप्रमोदमयमनुपदमेव मनुपदमनुगृह्णानो भक्तजनचित्तप्रमोदनतृप्तान्तरङ्गः परमप्रस्तुताय हयग्रीवविनिग्रहाय समुद्यतात्मा दान्ततरमुनिजननिषेवणोचितं शान्तभावमपास्य समुच्छ्वसन्निव स्वपुच्छाञ्चलताडनवियत्पथसमुत्पतितवीचिवलयः, समुद्धततरमुद्धाव्य मध्येजलधि निर्धावनजवेन बद्धप्रवाहमिव सलिलपथमुपदर्शयन्, उदग्रानुभावस्य हयग्रीवस्य सकाशदेशमासाद्य स्वयमतिद्रुतमभिद्रवणस्थेम्ना समुद्रावितसमुद्राम्बुपूरो धृतक्षोभमेवमवादीत्॥

रे रे मदीयदंष्ट्रान्तरहतग्रीव हयग्रीव!
अनिमिषकुलनाथं विद्धि मामब्धिवासं
कमलवसतिनाहं प्रेषितो रोषितेन।
निगमकुलममुष्णास्तन्मुखादुन्मदस्त्वं
तदिह वितर नो चेत् त्वद्गलो निष्क्रयो नः॥५८॥

इत्युच्चैरुन्नदन्तं झटिति कपटपाठीनमाढौकमानं
दृष्ट्वा दुष्टाशयोऽयं निगमहरणनिर्वाहगर्वायमाणः।

विश्वाधीशाभिमानी शफरपरिभवे दुस्सहे निस्सहात्मा
साटोपं पीठदेशादचलदभिसृजन्निष्ठुरानट्टहासान्॥५९॥

कस्य ब्रूमः किमेतत् कथमिव कुत एवागतः कुत्सितात्मा
मत्स्योऽयं भर्त्सयन्मामभिसरति पुरो निस्सपत्नं त्रिलोक्याम्।
कालेऽस्मिञ्च्छैलनाथं परिभवतु रजो मक्षिका पक्षिनाथं
रुन्धामन्धुश्च सिन्धुं तिरयतु तरणिं रुन्धतामन्धकाराः॥६०॥

सोऽहं बाहाग्रपिष्टस्थविरशफरनिष्ठ्यूतरक्ताम्बुधारा-
पातस्फीतं करिष्ये जलनिधिमथवा कोऽयमस्मिन् प्रयासः।
कैवर्तानाह्वयध्वं घटयत बलिशं जालजालं क्षिपध्वं
मत्स्योऽयं मर्तुकामः किल परिवलतीत्यालपन्नापपात॥६१॥

उच्चैरुद्धुररोषणं गतममुं निष्पत्य पाथोनिधौ
वक्त्राग्रग्रहणप्रसारितकरं दृष्ट्वा स मत्स्येश्वरः।
कल्पाम्भोधिमहोर्मिधूततरणिव्याकर्षणव्याकृत-
स्थेमानं निजमेकशृङ्गकुलिशं चिक्षेप वक्षोभुवि॥६२॥

तच्छृङ्गविधये क्षणमेष वल्ग-
न्नुच्छृङ्खलोऽथ दशनैरथ ताड्यमानः।
पृथ्वीं नवामिव तदा जगदादिकाले
कर्तुं पपात मधुकैटभतुल्यधर्मा॥६३॥

पृथुग्रीवोदराभोगे हयग्रीवे निपातिते।
धृतक्षोभा मही मेने पुनर्भूतं जगत्क्षयम्॥६४॥

एवं देवस्त्रिवेदीहरमसुरवरं जीवनाशं विनाश्य
क्षामामादाय तस्मादथ निगममयीं भारतीं भूरितेजाः।
वाग्देवीवल्लभत्वं निजमवितथयन्नेतया प्रीतयासौ
सार्धं वार्धौ करिष्यन्निव विहृतिरसानात्तमोदं प्रपेदे॥६६॥

तत्काले च,

उद्युबुद्धेऽपि च सुप्तवत् किल जगन्निर्माणकर्माण्यपि
प्रारब्धुं विगतोद्यमे कमलजे वेदव्यपायाकुले।
तूष्णीके सति वैष्णवं खलु महस्तन्मत्स्यरूपं तदा
गत्वा तन्मुखपङ्कजभ्रमरिकां वेदत्रयीमातनोत्॥६६॥

इत्थं बुधाशयशयोऽपि जलाशयान्तः
स्वैरं विहृत्य स विहाय विसाररूपम्।
अम्भोधिचङ्क्रमणवासनयेव भूयो-
ऽप्यम्भोधिमेव स पयोमयमाजगाहे॥६७॥

इति मत्स्यावतारप्रबन्धः समाप्तः॥

## वामनावतारप्रबन्धः

आदित्यः किन्नु साक्षादभिपतति महस्तोमसन्दीपिताशः
किं वा वैश्वानरोसौ किमु सनकमुखेष्वेष कश्चिन्मुनीन्द्रः।
इत्थं संजातशङ्काः प्रतिहतमहसस्तस्य भासां प्ररोहैः
सद्यः प्रोत्तस्थुरुद्यद्बहुमतिकुतुकव्यस्तचित्तास्समस्ताः॥१॥

अथ बलिरुपवेश्य स्वासने वामनं तं
सपदि कृतसपर्यः सादरं मोदशाली।
अपि तनुतरमूर्तिं तेजसोच्चैर्ज्वलन्तं
सरसमिति बभाषे विस्मयास्मेरचेताः॥२॥

स्वागतं तव वटो पदैरिदं पावितं प्रतनुभिः पदं मम।
क्षालितानि दुरितानि चाधुना त्वत्कटाक्षविगलत्सुधारसैः॥३॥

निखिललोकविलोचननन्दनं
प्रतनुदीप्तिभरेण समुन्नतम्।
अतिथिरत्नमवाप्तमनुत्तमं
विधृतसूत्रमिदं सुकृतैर्मम॥४॥

अन्नं कन्यां कनकमथवा मेदिनीं राज्यलक्ष्मीं
यद्वा साक्षाद् रविशशिकुचाभोगभाजं त्रिलोकीम्।
यद्यच्चिन्ते वहसि भवते भद्र भूदेवसूनो
तत्तद्दातुं कुतुकतरलस्सत्वरो मत्करोऽयम्॥५॥

इति बलिवचनं निशम्य मोदप्रसरमहोदधिमध्यमग्नचेताः।
मृदुहसितमनोहराननेन्दुः कपटवटुः स्फुटमित्थमाबभाषे॥६॥

यत्प्रह्लादकुलोद्भवस्य सदृशं युक्तं यदूर्जस्वल-
स्फूर्ज़द्बाहुतपोबलार्जितयशस्तोमस्य च स्वात्मनः।
एतेषां च महात्मनां भृगुभुवां शिष्यस्य यत् साम्प्रतं
तत्ते वाक्यमिदं तनोति हृदये केषान्न तोषोदयम्॥७॥

एतस्मिन्नन्ववाये भृगुनिवहमहामन्त्रसंस्कारपूते
जातानां हेतिधाराविदलितविबुधव्यूहमानाङ्कुराणाम्।
निस्सत्वो नैव कश्चिन्न च नयविमुखो नापि कश्चित् कदर्यो
नो वा भिन्नप्रतिज्ञो न च नियतमना पूरिताभ्यर्थिकामः॥८॥

आकृष्य वेदममरैरनिवार्यवीर्य-
मन्तर्जले कृतनिकेतनमश्वकण्ठम्।
आलम्ब्य मत्स्यवपुरेव जघान कृच्छ्रा-
दादौ हरिः कपटनाटकसूत्रधारः॥९॥

हिरण्याक्षस्साक्षाच्छ्रितिजवरभूः काश्यपसुतः
सपत्नैरादित्यैस्समुदित विरोधो विगतभीः।
धराहर्ता भर्ता सकलदितिजानां गुणनिधिः
जगद्वीरो जघ्ने कपटकिटिवेषेण हरिणा॥१०॥

प्रह्लादस्य पिता पितामहवरप्रोद्रिक्तबाहाबलो
विख्यातो भुवने हिरण्यकशिपुस्तस्याग्रजन्मा कृती।
देवौघैरनुनाथितेन हरिणा तिर्यङ्मनुष्यात्मना
मर्यादामपहाय मानमहता व्यापादितो मायिना॥११॥

स्मरति ननु समस्तं तत् भवानेव चित्ते
जलधिमथनकाले दर्शितं व्याजजातम्।
अमरहितविधानव्यग्रचित्तस्य विष्णो
शिव शिव किमकार्यं दूरमास्तां कथेयम्॥१२॥

अधिकोज्ज्वलकीर्तिमातिथेयं
विधिवत् संभृतवाजिमेधदीक्षम्।

अवकर्ण्य जनादुपागतस्त्वा-
महमारादवलम्बितार्थिभावः॥१३॥

पदैर्मम मितामेभिस्त्रिभिः प्रदिश मेदिनीम्।
महान्तो नातिनिन्दन्ति यावदर्थं प्रतिग्रहम्॥१४॥

तपस्तेजोहतिद्वारा घनव्याधिमहौषधम्।
प्रतिग्रहं प्रशंसन्ति सन्तस्सुलभनिग्रहम्॥१५॥

हस्तः पुरस्ताद् धनिनां जनाना-
मुत्तानिते हन्ति गुणानशेषान्।
भर्तव्यवृन्दस्य कृते तथापि
कर्तव्यतामापतितं ममैतत्॥१६

इति तदीयामतिमधुरचतुरगम्भीरामबालानुरूपां भारतीमाकर्णयन्न-मितकुतूहलोल्लासदलितशङ्काङ्कुरो महामना महाबलिरित्थमाबभाषे॥१७॥

शिशुरसि वपुषैव केवलं त्वम्
परिणतिमान् वचनेन विप्रसूनो।
वरयसि किमुपेत्य मानवं मां
त्रिपदमितां वसुधां त्रिलोकनाथम्॥१८

अत्यल्पया वसुधया तव मुग्धबुद्धे
कृत्यंकियत् त्रिपदसम्मितया कृतं स्यात्।
मत्तो वृणीष्व तदपास्य शिशुस्वभावं
वृत्तिक्षमां वसुमतीमयि विप्रसूनो॥१९

आपूरणाय गुणवान् वसुधा ममाल-
मेतावती दितिजपुंगवकांक्षितानाम्।
नातोधिकामुपगतोहमवाप्तुकामो
यावत् प्रयोजनमुशन्ति धनं महान्तः॥२०॥

मितं वित्तं वाञ्छन् न पुनरमितं क्वापि निपुणो
मतिं सद्यस्सिध्यत्यमितमतियत्नेन लभते।
अतस्सिद्धे खेदो भवति च मिते नैवममिते
प्रमोदो लोकानां पुनरुभयसिद्धावपि समः॥२१॥

इति बहुविधचटुवचनपटवे वटवे तदाकांक्षित मात्रीं धात्रीं स्पर्शयितुमुद्युञ्जाने दनुजनायके नयपयो निधिपारदृश्वा विश्वविश्रुततपोविभूतिविशदतरमतिमुकुरस्फुरितशकलोदन्तस्वान्तेवासिदिनैकरतः पुरोहितो भगवान् भार्गवः स्फुटतरमित्थमकथयत्॥२२॥

प्रतिश्रुतं यद् भवता ददाती-
त्यतर्कयित्वा द्विजसूनवेऽस्मै।
तदेतदालोच्य विपन्निदानं
विदूयते सम्प्रति मानसं मे॥२३॥

मायावी माधवोऽयं विधृतवटुवपुर्वासवाय त्रिलोकीं
त्वत्तो हृत्वा प्रदातुं त्रिपदपरिमितां याचते मेदिनीं त्वाम्।
तन्नैवास्मै प्रदेयं किमपि यदि ददास्यद्य वाक्यं मदीयं
प्राज्ञम्मन्योवधीर्य ध्रुवमनतिचिराद्दीनता भाविनी ते॥२४॥

अर्थी काचिदुपेत्य साधुविहिते सम्प्रत्यमुष्मिन् कृतौ
सम्प्रार्थ्य त्रिपदप्रमां वसुमतीं यातो वृथा चेदसौ।
स्वायुर्दुत्तवतो द्विजातिवपुषां मायाजुषां विद्विषां
विख्यातस्य विरोचनस्य तनयं धिङ्मामधर्मोत्तमम्॥२५॥

अतिथिरयममुं मामेत्य यातो वृथा चे-
दयशसि मुहुरस्मिन् घुष्यमाणे जनौघैः।
सदसि सुकृतभाजामग्रगण्यः कथं वा
वहतु मुखमनम्रं सोऽपि तातः पितुर्मे॥२६॥

दृढमहमभियाचितः प्रदद्यां
वटुरयमस्तु स एव चक्रपाणिः।

त्रिपदपरिमितेति वञ्चयित्वा
हरतु च काममसौ हरिस्त्रिलोकीम्॥२७॥

यदि वटुवपुः सम्प्राप्तोऽर्थी मखे मम साम्प्रतं
दितिजपरिषद्वेषी देवः सं एव चतुर्भुजः।
जगदखिलमप्यस्मै दास्ये मदीयभुजार्जितं
किमपि मम न छिन्नं मन्ये महानयमुत्सवः॥२८॥

इति सदसि वदन्तमन्तरुद्यद्
प्रतिघभरारुणितेक्षणः क्षणेन।
सपदिहृतधनो भवेति रोषा-
दशपदनाश्रवमेनमास्फुजेता॥२९॥

दनुजपताविति शप्ते निजकार्यं करगतं हरिर्मेने।
अपि महतां व्यापारः पररन्ध्रेष्वेव जायते फलवान्॥३०॥

इति निजगुरोश्शापं श्रृण्वन्नपि व्यवसायतो
विचलनमसौ नैवाकार्षीन्मनागपि दानवः।
प्रथितयशसां प्रज्ञा नीता प्रसादजुषां सतां
प्रकृतिरनघा लोके सेयं सतो व्यवसायताम्॥ ३१॥

अथ वामनमासने निवेश्य
प्रमदाभोगविकस्वराननेन्दुः।
त्रिपदप्रमितां ददौ धरित्रीं
विधिवत् सोदकमादरार्द्रचेताः॥ ३२॥

क्षेत्रं पुण्यतमं क्रतुस्सुमहितः तत्रापि सुत्यं दिनं
दत्तं वस्तु समस्तमेव भुवनं पात्रं स नारायणः।
यस्यैतानि युतानि पुण्यविभवैर्दातृप्रकाण्डस्य तं
हित्वा दैत्यपतिं महाबलिमहो कस्मै नमस्कुर्वते॥ ३३॥

भेरीरवः समुदयन् प्रमदाकुलाना-
मासीत्तदा पटुतरो दिवि यः सुराणाम्।
लोकेषु सप्तसु स एव गुणोत्तरस्य
दैत्येश्वरस्य विशदां ( महनीय ) कीर्तिम्॥ ३४॥

जय जय जगदीश चक्रपाणे
दनुजपदे तव कर्म साधु साधु।
स्फुटमिव नभसो बभूव वाणी
स्तुतिपिशुना सममेतयोस्तदानीम्॥ ३५॥

सुमनः पुरीतरुपरम्परोद्भवा
सुमनस्ततिस्सुलभसौरभाञ्चिता।
अमनागपप्तदमलान्नभस्तलात्
सुमकायमानसुमनोजनार्पिता॥ ३६॥

उत्थितस्तदनुलब्धकांक्षितो वामनो मनसि मानयन् बली।
पश्यतां सचकितं सभासदां विश्वरूपवपुरानशे क्षणात्॥ ३७॥

आदौ खर्वोऽतिमात्रं तदनु समवपुस्तत्क्षणाद्दीर्घकायो
भूयः स्थूलंभविष्णुः क्षणमथ च महासालमात्रश्चकाशे।
स्पर्धालुश्शैलसंघैः क्षणमभवदथ व्योमकूलंकषोऽभूत्
किं वा वाचां प्रपञ्चैः शिव शिव सहसा तेन पूर्णा त्रिलोकी॥ ३८॥

अब्धिद्धीपाभिपूर्णा धरणिरनुययौ पादपीठस्य लक्ष्मी-
मभ्राणां पंक्तिरालम्बत जघनतटे पीतकौशेयशोभम्।
शुभ्रा नक्षत्रपाली श्रियमभजदुरस्युज्ज्वलां हारयष्टे-
र्विक्रान्ते विश्वचक्रक्रमणपटुतरे वामने तुङ्गमङ्गम्॥ ३९॥

आदौ तावत् किरीटस्फुटघटितमहारत्नतेजोहृतौजाः
पश्चान्निश्चूषितश्रीरधिकविसृमरैः कौस्तुभोत्थैर्मयूखैः।
भूयः केलीकलापद्युतिपरिहसितो विह्वलात्मा विवस्वान्
पश्चात्त्राणाय नूनं चरणपरिसरं ( विश्वयोनेः प्रपेदे )॥ ४०॥

पारावाराः प्रपेदुस्तृणमुखतुहिनस्यन्दितुल्यामवस्थां
गुञ्जासञ्जातसख्यः समजनि विकटो हाटकक्ष्माधरेन्द्रः।
तस्मिन्नुज्जृम्भमाणे भगवति भुवनं मातुमातुङ्गमूर्तौ
विस्तीर्णं व्योमचक्रं किमपरमभजन्मक्षिकाकुक्षिमैत्रीम्॥ ४१॥

पातालं भूमिर्लोकं दिवममुरसुरान् मानवान् भोगिवर्यान्
अम्भोधीनद्रिसंघान् अवनिरुहगणांस्तारकावारिवाहान्।
किं वा वाचां प्रपञ्चैरधिभुवनतलं वस्तुसत्तापदं यत्
तत्तत्सर्वं तदस्मिन् ददृशुरपघने विश्वरूपस्य विष्णोः॥ ४२

कल्पान्तोद्भ्रान्तवातव्यतिकरविचलत् कालरुद्राग्निघोर-
ज्वालामालावलेपक्षतिचतुरमहःपूरसंपूरिताशाः।
चक्राद्या मूर्तिमन्तो नभसि विभुमसेवन्त दुर्दान्तदैत्य-
व्रातस्फीतप्रमाध्वीरसभरविसरत् कौतुकं हेतिसंघाः॥ ४३॥

नेत्राभ्यां वर्तुलाभ्यामनलकणगणानुद्गिरन्नुद्गताभ्यां
गात्राभोगेन कार्तस्वरसदृशरुचा तर्जयन् निर्जराद्रिम्।
पत्राभ्यां पूरयन् द्रागखिलमपि नभोमण्डलं चण्डचञ्चुः
पत्युः पादोपकण्ठे तदनु जनतया लक्षितः पक्षिराजः॥ ४४॥

बिभ्राणा वैजयन्तीमुरसि करलसच्चक्रचापासिशंखाः
कुर्वाणा चारुगात्रद्युतिपरिमिलनं श्यामलां व्योमवीथीम्।
वासः पीतं वसानाः प्रबलबलसुनन्दादयो भक्तिमन्तः
तत्रादृश्यन्त देवप्रतिभटपटलीजिष्णवो विष्णुदासाः॥४५॥

क्रान्तं भूचक्रवालं निखिलमपि पदेनैककेनैव भूम्नः
खं गात्रेणाभिपूर्णं सुरपदमपरेणापि विक्रान्तमासीत्।
तार्त्तीयीकं पदं तु त्रिजगति विमिते क्वाप्यलब्धावकाशं
सद्यः प्रौढिप्रमीलत्त्रिभुवनवपुषः सत्यलोकं प्रपेदे॥४६

तदनु दनुजारातिसततानुध्यानविशदतरहृदयपङ्कजासनः सनकसनातनसनन्दसनत्कुमारमनुमरीचिमुखमुनिपरिषदनुगम्यमानो निजासन-

सरोरहसमुद् भेददीर्घिकायमाननाभीकुहरस्य सरहस्यवेदत्रयीततविवेक-विनिश्चितसच्चिन्मयविग्रहस्य जननसमनन्तरोदीयमाननैसर्गिकसर्गवासनोन्मनायमानेन स्वाधिकरणनलिनरन्ध्राध्वनीनभावमवलम्बमानेन स्वेनैव मुहुर्मुहुरध्यक्षीकृतोदराभ्यन्तरोदन्तस्य विक्रमाक्रान्तसकलभुवनचक्रस्य चक्रायुधस्य सनाथीकर्तुमिव सत्यलोकमभ्युद्गच्छतः स्पर्शतरमहस्संघातलङ्घितशंखधवलेन नखमयूखनिवहेन प्रमुदितनीलारुणोल्ललोद्बणावलेपाभ्यां च तुलितकदलीदलोल्लासेन तुलाकोटिघटितवलारातिनीलनिभाजालेन च रचितरजनीहारसाप्तपदीनेन अप्रपदीनचीनांशुकसञ्चयेन च पञ्चवर्णसमुदञ्चितशोभं विरिञ्चभवनमापादयते भक्तिनम्रसत्रभागितादिषृनित्यदानबद्धदीक्षाय उग्रबलदनुजवर्गनिर्दलननिसर्गरुक्षाय भवनजनचित्तनिहितवस्तुजातवितरणपारिजाताय ध्वमतमसस्थितजाताय सततविमलाय चरणकमलाय गलितावद्याधिकमर्हणमाजहार।।४७।।

**भृङ्गाराम्बु विधातुरंध्रिक्रमलात्त्रैविक्रमादम्बरे**
**तुङ्गादापतितं धृतं भगवता चूडापदे शंभुना।**
**श्रृङ्गे हैमवते ततो निपतितं यातं ततो भूतलं**
**मङ्गल्यावहमङ्गसङ्गमजुषां गङ्गेति संज्ञामगात्।। ४८।।**

**उत्खातामरशोकशङ्कुशकलैरुद्गीर्णदैत्यज्वरैः**
**निर्घातध्वनिघर्घरैस्त्रिभुवनं भेरीरवैःपूरयन्।**
**अक्षुद्रोऽपि चचार दिक्षु विजयं त्रैविक्रमं घोषय-**
**न्नक्षामप्रमदप्रोहवरवानृक्षेश्वरो जाम्बवान्।।४९।।**

ततश्च-

**प्रतिसंहृतविश्वरूपमूर्तिं भगवन्तं प्रकृतिं निजां भजन्तम्।**
**प्रथमानमुदस्सुरासुरेन्द्रप्रमुखाः प्राप्तमनोरथाः प्रणेमुः।।५०।।**

तदनु विलोकितवामनवृत्तान्, प्रतिमुहुरुदयत् प्रतिभयविसरप्रतिघावेशवशंवदचित्तान्, उद्धृतपट्टसयष्टिपरश्वधखड्गशरासनमुद्गरमुसलाद्युद्धतशस्त्रसमुद्धुरहस्तान्, निटिलतटस्फुटघटितविशखलंविकट-

भ्रकुटिभयङ्करवक्त्रान्, अधिकविकस्वरनयनविसृत्वरदहनकणोत्कर-दीपितदिक्तान्, मन्थकुलाचलसन्ततविचलितसिन्धुसमुत्थित घुमुघुमितध्व-निलंघनजांधिकसंगरसूचकसिंहध्वनिभरपूरितभुवनान्, अस्मत्स्वामिनमधि-कवदान्यं कुटिलशिखामणिरसुरद्वेषी स्वयमयमेत्य त्रिपदव्याजादधुना हरते प्रहरत तरसा हरिममुमहितं हरत दरारिगदादिकमखिलं पार्षदवादी शीर्षच्छेद्यः पत्रिकुलाधममुद्धतमेनं निस्त्रिंशक्षतपत्रं कुरुत भ्रष्टास्त्रिपदान्नष्टाः कुहचित् कषृं कषृं सम्प्रति सर्वे स्वल्पबलस्य सुराधिपतेर्द्रुतमुत्पाटयत विलोचननिवहं, दण्डप्रहरणदलितशिरस्कं दण्डिनमेनं रचयत सहसा, चरणच्छेदं वरुणो लभतां, वैश्रवणस्य श्रवणच्छेदं, विद्रावयत च शूद्रानेतान्, अनलं हत्वाप्यनलंभावो राक्षसराजममाक्षिपतैनं मारुतमग्रे चारयताराततूर्णमुपेत्य विमर्द्य कराभ्यां चूर्णीकुरूत दिवाकरचन्द्रौ वसवः सर्वे व्यसवः कार्याः पितरो नितरां विधुरास्त्याज्याः निरशेषयत च विश्वान् देवान् निध्वंसयत च सिद्धानेतान् नितरां बहुविधदुर्वचनध्वनिनिर्विवरीकृत निखिलदिगन्तान् ईदृशसम्भ्रम-लेशविहीनैरभिनवहसितप्रमुदितवदनैराकलितारिगदासिशरासैरंबुजलोचन-भासैस्साकं तत्क्षणसंभृतकलहारम्भान् निस्तुषतमनिजचिन्त-परिस्फुरदुत्तमबोधध्वान्ततमस्काः विधिबलविहितं निखिलमवार्यं वीर्यवतामपि पुरुषाणामिति निश्चितचेताः कालगतिं हृदि बहुमन्यमानोप्यपगतमन्युमहासत्त्वो महाबली सर्वानेव निवर्तयामास।।५१।।

पादद्वयेनैव मितं जगत्त्रयं
प्रतिश्रुतं पूरय दैत्यनायक।
धृतप्रमोदं वदतीति वामने
कृतप्रणामं बलिरेवमूचिवान्।।५२।।

यदि विनिदं भुवनपते
त्रिभुवनमखिलं पदद्वयेनैव।
किमपरमधुना करवै
शिरसि तृतीयं निधेहि मे चरणम्।।५३।।

**इति वचनमविक्लवं वदन्तं**
**दनुजपतिं तरसैव पत्रिराजः।**
**अभिमतमवगम्य चक्रपाणे-**
**रुरगमयैर्निबिडं बबन्ध पाशैः॥५४॥**

**यस्मै पत्रफलदिनिस्पृह.......**
**विध्वस्ताखिलकर्मवंशनिचयो मुक्तो जनो जायते।**
**तस्मै दत्तजगत्रयस्त्रिजगतामिष्टार्थदायार्थिने**
**सद्योबन्धमवाप दानवपतिः चित्रा गतिः कर्मणः॥ ५५॥**

ततश्च नैसर्गिकचक्रपाणिचरणारविन्दभक्तिभारपरिपूरितहृदयेन समाधिसमालोकितत्तादृशवृत्तान्तेन तत्क्षणोपयातभक्तिभरविनत वदनारविन्देन नुतिवचनजनितनीरसिंहरूपचित्ताह्लादेन प्रह्लादेनानुवीक्ष्यमाणः सकलजगच्चक्रसम्प्रदानीकृतस्वात्मानं अपरिमेयमहिमानं महाबलिं गलितशापबन्धं कलितप्रणयबन्धं विधाय अमृतसारवर्षकैरतिबहलमान-सौहार्दसूचकैरपांगाञ्चलैः अभिषिञ्चन्नागामविरिञ्चदिनपुरन्दरपदानुभूति भाजनतामनुगृह्णन् अधिरसातलमात्मकल्पिते त्रिविषृपाद्विशिषृतमे पदे प्रतिष्ठाप्य प्रस्थाप्य च प्रथमानसम्मदं प्रह्लादं विविधतरं नुतिवचनबधिरितसकलहरिन्मुखैश्शतमखबहिर्मुखैरनुगम्यमानस्ममासाद्य देवतपुरं यथापुरं पुरन्दरादिकममरवृन्दं निजनिजेषु पदेषु प्रतिष्ठाप्य प्रमुदितमानसमदितिमपि विधाय भगवानकुण्ठधामा विकुण्ठलोकमात्मना प्रसाधयतिस्म।

**इति वामनावतारप्रबन्धः समाप्तः॥**

# नृगमोक्षप्रबन्धः

तत्रैकदा मनुजवृत्तिमुपाचरिष्णु-
विंष्णुः स्वयं पुरवरे मणिमन्दिरान्ते।
सेवासमामिलदनेकयदुप्रवीर-
स्वैरानुलापसरसो निषसाद मोदात्॥१॥

तदानीञ्च किमिदमिति सकलमिति सकलयदुलोकैर्मृदुलहसितलसितेन च भगवता दूरादेव विलोक्यमानास्सम्भ्रमविस्मयसूचकचटुलचरणन्यासाः किमपि समुन्मिषितघर्मकणाङ्कितवदनपङ्कजा रौक्मिणेयसात्यभामेयजाम्बवतेयप्रमुखाः सकलयदुकुमाराः सत्वरमुपगम्य भगवन्तमकाण्डकरुणावताराङ्कुरितबाष्पकणाङ्कितनयनकोणं प्राणंसिषुः॥

किन्तु भवतामद्भुतमुद्भूतमिति पृष्टवन्तमेनं प्रत्यवादिषुः॥

वयं खलु ताताद्य प्रातराशिनः प्रीतचेतसो नातिदूरविपिनान्तरेषु स्फीततरसम्पत्प्रथिमवशात् प्रमदवनप्रतिमानेषु प्रागदृष्टचरानपि प्रदेशान् प्रदरीदर्शितुकामाः प्रचुरकौतुकात् प्रचरन्तः प्रतिकलकलितविहरणरसपरिश्रमवशात् प्रभूतां पिपासामुपासीदन्तः प्रतिदिशं ग्राहितलोचनाः प्रहिमिव कञ्चिददूरादलोकिष्महि॥

ततश्च त्वरमाणा वयं परिहीणसत्त्वसञ्चारस्य तस्य कूपस्य प्रमुषितप्रायोपनाहं पीनाहदेशमासाद्य विलोकयमानाः-

तोयं नास्मिन् निरैक्षिष्महि हहह पुनः कूपगर्भे कथञ्चि-
न्मान्तं ध्वान्ते महान्तं गिरिमिव च कमप्यन्तरद्राक्ष्म जन्तुम्।

सूक्ष्मेक्षायां त्वजानीमहि कुटिलवलत्पुच्छमन्धान्धुदेशे
गाढव्याढौकिनं तं जरठसरटकप्रौढमूढानुकम्पाः॥२॥

एवंविधव्यसनभागपि पीतरक्त-
पालाशपेशलवपुर्ज्वलितोऽयमास्ते॥
प्राग्जन्मकर्मपटलीगणनाङ्कशङ्क्य-
रेखासहस्त्रपरिभूषिततुङ्गगात्रः॥३॥

अवशन्यस्तमुखोऽपि स्वभावतो लासयन् कृकं सोऽयम्।
एवं कृत एवं स्यादिति दर्शयतीव निजकृतं किञ्चित्॥४॥

एतादृशतदीयनिपीडानिरीक्षणक्षणक्षुभितकरुणासमुन्नाहप्रणुन्नतया समुन्नमदुदन्यानिपीडामपि निजां विस्मरन्तो वयमतिलघुस-मानीतचार्मणतान्तवमृदुलतरगुणगणैः कथमपि पृथुतरावयवप्रदेशेषु निबद्धैस्समुद्धर्तुमतिचिरं प्रयस्यन्तोऽप्यमुष्य तनुगरिमवैपुल्यवशाद्वा मादृशामाबाल्यवशाद्वा प्रचलमिममचलकल्पं प्रचलयितुमपि न किञ्चिदप्यशकाम इति॥

श्रुत्वैतत् करुणाकुलः स भगवानुत्थाय सद्यो मिलद्
भृत्यालीयदुवीरपौरपटलीपर्यावृता निर्ययौ।
चित्रालोकनसक्त्यनुद्रुतजनो गत्वा च कूपान्तिकं
प्रत्यैक्षिष्ट तमश्रुविस्त्रुतिजुषा पश्यन्तमुच्चैर्दृशा॥५॥

वामेनैव च दक्षिणेन च हरिर्हस्तेन चित्तेन च
प्रोद्गृह्णन् गुणजालमस्य सपदि प्रादैरयल्लीलया।
पूर्वस्मात् पृथुरेष भाति विभुना गोवर्धनाविष्कृता
सर्वा शक्तिरिहाश्रिता ध्रुवमिति व्यालोकि लोकैरयम्॥६॥

तावदेव देवदेवकरसरसीरुहाञ्चलकथञ्चनसंस्पर्शनमात्रपात्रीभूतस्य खलु सुकृताम्बुराशिः कृकलासरूपमखिलासु जातिषु निहीनतमं विहाय महीगतमहाजनपरिषत्सु विहायसिं दिविषत्सु च निमिषत्सु सद्य एव विद्योतमानप्रद्योतनद्युतिखद्योतीकरणचरणकिरणपरिणतिभिररुणीक्रियमाण-

हरिदन्तरं सुधटितकटकमकुटकिरीटकेयूरहारसारसनादिचारुतराकल्प-कल्पितानल्पशोभं अव्ययायमहिमनव्यतरदिव्यरूपमास्थायास्थातिरेक-नम्रीकृतशिरा यदुशिरोमणेश्चरणतरुणाम्बुजयोः प्रणनाम। उत्थापितश्च भक्तार्तिहन्त्रा बद्धाञ्जलिरसाववतस्थे॥

निश्शेषदृश्वापि स विश्वनाथः
कोऽसीति हासार्द्रमुखस्तमूचे।
कर्माणि धर्माद्युपदेशजाल-
मिश्राणि शिश्रावयिषुः स्वकीयान्॥७॥

पश्यस्येव हि विश्वमीश्वर पुनर्मच्छ्रावितां मत्कथा-
मिच्छन्नेव हि पृच्छसीति विदितं तद्वर्ण्यते कर्ण्यताम्।
इक्ष्वाकुप्रमुखास्सुता दश मनोर्वैवस्वतस्याभवन्
सोऽहं विश्वनृगामिविक्रमयशास्तेषां तृतीयो नृगः॥८॥

स चाहं क्रमोपगतां राज्यपदवीमतिगरिष्ठामधिष्ठाय चतुरुदधिपरित्रौकितं धरित्रीवलयममित्रादिपरित्रासशून्यं परित्रायमाणः युगवारम्भकालगुणवशा-दतिप्रयत्नविरचितदक्षिणरक्षणपरिशिक्षणगुणवशादपि अभिलषितादधिक-फलदात्रीभूतभूतधात्रीदिक्चक्रवालादनल्पतरं समुत्पतापद्यमानमतुलमपि धनसञ्चंय सञ्चाय्य तञ्च चञ्चलमेव सर्वथा सञ्चिन्तयन्ननन्तफलाय विनियोक्तुमना मुनिवरोपदेशात् भवत्पदाम्बुजसमर्पण-सहितनिर्मलतरनिर्मितधर्मपथविनियाजनायैव प्रावर्तिषि॥

एकाहाहीनसत्रैर्बहुभिरहमुपायक्षि सद्दक्षिणाढ्यैः
कूपारामोरुवापीर्दिशि दिशि समुपाचीखनं श्लाघनीयाः।
स्थाने स्थाने च नानाजनसरणिकृतामेकपानीयशाले
स्वादीयस्तोयदानैर्मतिमपरमलं तृष्णजामुष्णकाले॥९॥

चण्डालश्वखरावधि द्विजवरप्रारम्भमुर्वीतले
यो यः क्षुध्यति तस्य तस्य मधुरं प्रत्येकमिच्छानुगम्।
तत्तद्देशनिबद्धभुक्तिभवनव्रातेषु जातादरं
स्फीतं नन्वहमन्नमन्वहमदामन्वीक्ष्य चारेक्षणैः॥१०॥

रत्नौघान् यत्नलब्धानपि नवरविपिङ्गांश्च गाङ्गेयभारान्
भूयः कालीस्तिलालीर्गजरथतुरगान् कन्यका धन्यरूपाः।
भौगस्फीतान्निकेतानविरलकलमश्यामलान् भूविभागान्
पात्रेभ्यश्श्रोत्रियेभ्यः किमिव न बहुशोऽयच्छमिच्छानुरूपम्॥११॥

अपि च सुजनसम्मतैरपि किं ममान्यैर्महादानभेदैरनुवर्णितैः, धेनुदानचरितं तु किमपि करुणार्णवेन कर्णे करणीयम्॥

अहं खलु गुणवतीनां दशविधकपिलगवीनां वरीयस्सु भूसुरेषु दानं गरीयस्तरमित्युपश्रुत्य दवीयस्तरादपि देशात् पयसीयसीर्वय-सान्यूनास्सौम्यतमशीलाः काम्यतमरूपाः विपुलकपिलगात्रविल-म्बितसन्ध्याम्बुदप्रकाशा धेनूरुपसर्याश्च विक्रेतुरभिलषितसमधिकदत्ताय वित्ताय परिक्रीताः सुचतुरमदीयपशुपालक समधिकपरिलालन-परिलुप्तपरिचितदेशविश्लेषादिविषादसमेधितप्रसादा अयुतशो नियुतशः समानीय विशालमुखशालिगोशालेषु पुण्याम्बुतृण्यादिविन्यासैः सन्निवेश्य ब्राह्मणानपि ब्रह्मतत्त्वविदो विष्णुभक्तिभरशान्तस्वान्ताम् सुदुःसाधनतपस्याव्रतशतसमुत्सादितकल्मषान् अध्ययनादिषट्कर्मजागरूकान् यायजूकान् वेदार्थमीमांसामांसा[illegible]न्वितान् चतुर्वैद्यांस्त्रैविद्यान् द्विवेदानेकवेदान् सुवृत्ततानिवृत्तपापप्रसङ्गान् दरिद्रतोद्रेकपरिद्रूढान् गाढादरमुपाहूय तेभ्यश्च सम्पगाहितसम्मानेभ्यो निर्मलामूल्यदुकूलमाल्यहेममणिमयभूषितपरिभूषितेभ्यो नैचिकीरपि रोचमानमणिगाङ्गेयसङ्गतश्रृङ्गीः खुरखचितकनकद्युति-पिशङ्गीर्गलमिलितलुलितकाञ्चनमालामौक्तिकहारव्यारचितभङ्गीः काशमानकौशेयप्रवरनीशारिताङ्गीः तत्समानविभूषितवत्ससमेताः परिपा-लनक्षमपशुपालकुलैस्सुखतरगोष्ठप्रतिष्ठापनादिक्षमधनव्यूहेन दोहन-भाजनादिना च सहैव श्रीविष्णुस्सम्प्रीयतामिति बुद्ध्या सम्प्रदाय सम्प्रेषितवानस्मि दिने दिने सहस्रं सहस्रं, पुण्यतरतीर्थपात्रकालविशेषप्राप्तौ पतदुत्तरसङ्ख्यम्॥

एवञ्च मयि देदीयमाने द्विजकुले च तोतुष्यमाणे मदीयधने च पोपुष्यमाणे पुष्टिविसृष्टिमत्सरश्लाघनीयो द्राघीयानंरहीदनेहा॥

क्रमेण च-

श्रीमत्तयेह सुकृतेषु च दिव्यलोक-
कामित्वतः समुपजातरजोविकारात्।
मादृग्विधः क इव निर्मलकर्मकारी-
त्याविर्बभूव हृदि कोऽपि मदाङ्कुरो मे॥१२॥

तञ्च मदेकगम्यं मदाङ्कुरं कष्टतरोऽयमनर्थावह इति बहुतरविचारैर्निवारयन्नपि रजोतिभरादपारयन्नहमवास्थिषि॥

तदनु कुहचिदहनि बहुतरसचिवनृपकुलास्तृतामास्थानीमास्थायुके मयि विलोकितचराविव कौचन वाडवानलतेजसौ बाडवप्रवरौ सवत्सकधेनुपूरस्सरौ दत्तापहारिन्नपहृतप्रदायिन् लुब्धतम स्तब्धतमेत्यादि बहुतरसमुपीषणपरौ बहिस्सभातलं विनिस्सरद्रोषसुदुर्दशौवदर्शिषाताम्॥

ततश्च किमेतदिति समाकुलेषु सकलेषु अहं पुनरनाकुल इव समुपगम्य नन्नम्यमानो दुस्सहतरभर्त्सनरवानुद्वमदेतद्द्विजवरद्वितयमतिरुषितदीप्राक्षं किमिदमिति समप्राक्षम्। तयोरन्यतरश्च संन्यगादीत्:-

मह्यं द्रोणदुघा त्वया पशुरियं दत्ता न दृष्टा चिरात्
तामन्विष्य च कृच्छ्रतोऽस्य भवने दृष्ट्वा निनीषौ मयि।
चोरङ्कारमुपाह्वयन् नृपतिना दत्तेयमित्यालपन्
विप्रोऽयं समरुन्ध मां क इव भोश्चोरोऽत्र धात्रीपते॥१३॥

दानैः क्षीणं धनञ्चेद्विरम विरम भोश्चौरिकां नारभेथाः
घोरो दत्तापहारान्नरक इति बुधम्मन्य नो मन्यसे किम्।
धर्मैर्निर्मीयमाणैर्मनसि विमलतासम्भवेऽलम्भि किं भोः
कौम्भील्यं दाम्भिकस्त्वं सकलमतनुथा निश्चितं दुश्चरित्रात्॥१४॥

तदिदमाकर्ण्य विदीर्णकर्णहृदयोऽहं तूर्णमेव गोसङ्ख्यावेक्षणगोसङ्ख्यपरिशिक्षणादिषु विशेषनियुक्तं सचिवमाहूय परिपृष्टवानस्मि॥

स्वयमागतैव माहा हाहा मोहान्न चिन्तिता नु मया।
स्वप्नेऽपि नापि गौपैर्मयापि मुषितेति सोऽपतत्पदयोः॥१५॥

ततश्च सप्रमादममुं क्षिप्रमेवाधिकाराद्विप्रवास्य विप्रवर्यौ सप्रणामं पुनरप्यसान्त्वयम्॥

'गौरेषा स्वयमागतैव, भगवन्', 'स्वामी न किं मार्गितः'
'मौर्ख्यान्मन्त्रिजनस्य', 'मन्त्रिचरितं सर्व नृपस्यैव भोः'।
'मौर्ख्यं मेऽस्तु तथापि नैव मुषितं', 'कश्चोरतां स्वां वदेत्'।
'चोरोऽप्यस्मि तथापि साध्यमुभयोर्ब्रूतं' 'न जानासि किम्'॥१६॥

'प्राग्दत्ता हि ममैव गौरहममूं नेष्ये', 'पुनर्दानतः
प्राग्दानं व्यवबाधितं', 'मम धनं नान्येन दत्तं भवेत्'।
'दत्तं नन्वमुनैव', 'नन्वपनयाद्दत्तं हि साधूभवेद्',
राज्ञ्येवापनयो न मेऽस्ति', 'न तु गां मोक्ष्याम्यहं', 'नाप्यहम्'॥१७॥

'लक्षं गाः प्रददानि मुञ्चतमिमां, 'लक्षं कुतोऽमुष्य ते'
'शान्तं शान्तमघं, परीक्ष्य सुतरां दास्यामि लक्षाधिकम्'।

'दत्तं रक्ष किमूर्ध्वदानकथया,' 'तत्राभ्युपायः कथम्'
'पृच्छैतत्सचिवान्' 'अभीष्टमखिलं कुर्वे' 'दिशेष्टामिमाम्'॥१८॥

इत्थमशान्तरोषाक्रान्तिदुस्सान्त्वतमौ महान्तौ तौ तपोधनौ निरीक्ष्य भग्नाविग्नहृदयोऽहमखिलेश्वरश्शरणं नमः क्षमासुरेभ्य इति प्रवणमूर्धा बद्धाञ्जलिर्जोषमतिष्ठम्॥

तावच्च–

पूर्व मुमोषिथ पुनर्न हृतो विवादो
धत्से च युक्तिविकलः कृकलासभावम्।
तद्भूप पाप कृकलासवपुर्भवेति
शप्त्वा गतौ च लघु तौ कुपितौ द्विजेन्द्रौ॥१९॥

तदा च सभानिषण्णेषु विषण्णमनस्सु समनस्सु सत्रासपरतन्त्रेषु च मन्त्रीश्वरेषु तरङ्गितशोकसिन्धुषु बन्धुषु सोऽहमपि शोकवेगान्मूर्च्छामिव

भजन्नाच्छादितविकृतिर्भवनाभ्यन्तरमासाद्य ससन्तापां दुरन्तां विचिन्तामविन्दन्तमाम्।।

धिग्धिङ्मां किमिदं कुतो नु समभूद्धर्मैकनिष्ठोऽप्यहम्
पापिष्ठां बत योनिमेमि कियतः कालस्य घोरव्यथाम्।
सच्छिद्रं मम किन्नु धर्ममखिलं तन्नैव सम्भाव्यते
सर्वं विष्णुसमर्पितं खलु कृते जाने न कोऽयं विधिः।।२०।।

दाने विप्रगवां विषादहृदये किं किं कृतं नो मया
किञ्चिद्रक्षणशिक्षणादि च भुवो नोपेक्षितं लक्ष्यते।
यज्ञेष्वप्युरुदक्षिणेषु न परं वैकल्यमाकल्यते
यत्प्रीत्यै सकलं कृते स भगवान् जानातु नारायणः।।२१।।

पापिष्ठो न मया समोऽस्ति भुवने भूयिष्ठधर्मार्जनाद्
द्राघिष्ठं सुरलोकमीप्सुरगमं ही ही दशामीदृशीम्।
प्राज्यं राज्यमपास्य दास्यमुदयास्वं चेदशास्यं हरेः
सान्द्रानन्दमयं विमोक्षमचिरादैष्यं न दूष्यं भवम्।।२२।।

धिग्धार्मिकत्वमिह धिङ्नृपतिश्रियं मे
धिक् क्षोणिरक्षणविचक्षणतां निरर्थाम्।
यद्विप्रशापमपि हन्त दुरन्तमन्ते
कष्टा जुगुप्सितमलप्सि च जन्तुभावम्।।२३।।

इत्थमुद्दामचिन्ताभिरुद्दीपितेन दग्धाशेषमदाङ्कुरे विस्तारिवित्तादि-वैराग्यगुणविभूतिना तत्तादृशशोकमयेन सप्तार्चिषा तप्ताशये लुप्तनिद्रे मयि सप्ताष्टान्यहानि वर्तमाने प्रत्युत्पन्नकरुणस्य भक्तार्तिहृतो भगवत एवानुग्रहाद् बद्धानुतापाविव वक्त्रोल्लसद्यथापुरभावौ प्रत्यागतौ तावेव पृथ्वीसुरवरप्रवरौ।।

दृष्ट्वा च तौ सम्भृतसम्भ्रमोऽहं
बद्धाश्रुरद्धा पदयोरपप्तम्।
बर्धस्व पृथ्वीश गताखिलार्ति-
रित्याशिषञ्चोचतुराकुलौ तौ।।२४।।

आश्वेवाश्वासभाजं मां शेश्वीयितकृपाभरौ।
भूसुरौ व्यासरद्बाष्पभासुरौ पुनरूचतुः॥२५॥

हे सत्यवद्यनिरवद्य वदान्यमौले
ब्रह्मण्य गुण्यतम पुण्यनिधे नरेन्द्र।
हन्तावयोरनुपजातचरीमवार्यां
दैवप्रणुन्नकुमतिं क्षमतां मुकुन्दः॥२६॥

आवां खल्वविज्ञातोत्पतिते स्वल्पेऽपि तवापराधे बहु कुप्यन्तौ शप्यन्तौ पुरान्निरेत्य सद्यस्समुद्यदनुतापभराक्रान्तौ निजनिजनिशान्तमासाद्य ततोऽपि प्रतिक्षणपरिक्षुभितदुस्सहानुतापनिस्सहीकृतौ स्वस्वखेदं सम्मिलितौ भूत्वा सम्मन्त्र्य भाविकालचरितञ्च दिव्यदृशा ददृशिवांसौ तव क्षुद्रजन्मनोऽपि भद्रावहतारूपं शापमोक्षं प्रदातुमायातौ॥

आनर्तेषु कुशस्थलीति विदिते स्थाने गतोपद्रवे
कूपे त्वं कृकलास एधि गलितक्षुत्तृड्भयादिव्यथः।
नित्योदित्वरविष्णुचिन्तनसदातृप्तश्च कालात्पुन-
स्तत्र द्वारवतीं करिष्यति पुरीं कृष्णावतारो हरिः॥२७॥

स त्वामुत्तारयेद्देवो विश्वकामदुघो विभुः।
इत्युक्तोहं कृतार्थात्मा शापमप्यस्मरं वरम्॥२८॥

पूर्वप्रतिगृहीत्रे च प्राचिकीं नैचिकीं दिशन्।
द्वौ चातिमानसम्प्रीतौ सम्प्रेष्य मुदितोऽभवम्॥२९॥

पूर्वस्मादपि शान्तप्रसन्नचेता वसंश्च तदवसरे।
दिष्टान्तमागतोऽहं वपुरिह कृकलासमुद्रमद्राक्षम्॥३०॥

अत्राप्यहं भवदनुस्मृतिविस्मृतोरु-
कालक्रमो विगलितव्यसनं शयानः।
अन्वग्रहीषि भवताद्य च सर्वमेत-
न्मन्ये तवैव करुणालसितं परात्मन्॥३१॥

नारायणस्त्वमसि पूर्ण इहावतीर्णो
नृणां भवार्तिहरणाय स मे प्रसीद।
स्वर्गेऽपि ते पदरजांस्यतिदुःस्मराणि
नो विस्मराणि सकलाशुभघस्मराणि॥३२॥

स्मर्तासि नित्यमयि मां दिवि भुङ्क्ष्व भोगान्
सर्तासि भोगविरतौ च पदं मदीयम्।
संशिप्यते फलपरस्य बिलम्बमात्रं
भ्रंशिष्यते न तु मदर्पितसर्वकर्मा॥३३॥

प्रीतः प्रणम्य च हरिं स चिरं प्रतीक्ष्य
व्योम्नि स्थितं रविसमानमहो विमानम्।
आरुह्य विस्मयनिविष्टजनौघदृष्टः
स्पष्टं त्रिविष्टपमदृष्टजितं प्रविष्टः॥३४॥

चित्रीयमाणमथ सम्मिलितं जनौघं
तत्रोपहूय जगतां पतिरित्थमूचे।
अत्यादृताः श्रृणुत सम्प्रति मामकीनाः
पृथ्वीभृतोऽस्य चरिते परमोपदेशान्॥३५॥

अस्मादृशां वितरणाद्यमिदं कियत् स्या-
द्विस्मापनेऽस्य सुकृते बत चिन्त्यमाने।
भूयो विदाङ्कुरुत हन्त मदाङ्कुरोऽपि
कुर्वीत दुर्विपदमेव हि सर्वपुंसाम्॥३६॥

नाकादिकामनकृतो बहवोऽपि धर्माः
शोकाय भोगविरतौ पतनानुबन्धात्।
मय्यर्पिता यदि त एव फलावसाने
मुक्त्यै भवन्ति तदपीह विबोधितव्यम्॥३७॥

सर्वं तिष्ठतु नाम दुर्वचमहापुण्याम्बुधेरप्यहो
दुर्वारा द्विजकोपतो विपदभूदर्वाग्जने किं पुनः।

अज्ञानापतितं धनं द्विजवरौ भूयोऽनुनीतौ भृशं
पुण्याब्धिर्नृपतिस्तथापि समभूद्दुर्जन्म लज्जाकरम्॥३८॥

एवं नाम भयानकाः क्षितिसुराः किञ्चास्य तत्तादृशं
दुर्जन्मापि तदीययैव कृपया भद्रावहञ्चाभवत्।
भद्राभद्रविधौ स्वतन्त्रगतयस्तद्वन्दनीया द्विजा
स्तृप्यन् विप्रजनोऽपि कल्पविटपी कुप्यन् स कल्पानलः॥३९॥

अज्ञातापहृतेऽपि भूसुरधने दोषोऽयमेतादृशो
धीपूर्वाहरणे तु तस्य न समाधानं कथञ्चित् क्वचित्।
ही ही हेहयराडपि द्विजगवीं प्रागाहरन्नक्षिणोत्
स्वं स्वीयञ्च कुलं नृपकुलं त्रिस्सप्तकृत्वोऽखिलम्॥४०॥

शर्वो हालहलं निपीय जरयाञ्चके व्यधीशैरपि
व्यक्तं दुर्जरमेव वर्ज्यमधिकं ब्रह्मस्वहालाहलम्।
अत्तारं हि विषं हिनस्ति दहनो मूलावशेषं दहेद्
ब्रह्मस्वारणिपावकस्तु सकलं दग्ध्वा समूलं कुलम्॥४१॥

आत्तं चेद् दुरनुज्ञया द्विजधनं त्रीन् पूरुषान् पातयेत्
भुक्तं तत्तु बलेन चेद्दश परान् पूर्वांश्च ही ही जनान्।
दत्तां स्वेन परेण वा खलमतिर्यो विप्रवृत्तिं हरेत्
सत्यं वर्षशतायुतं स हि भवेद्दुश्चारचारः कृमिः॥४२॥

मा हरत मा हरत मोहरतचित्ता
ब्रह्मधनमुन्मथनमुन्नतगतीनाम्।
विप्रजनविप्रकृतिरप्रतिमदोषा
क्षिप्रमिह कल्पयति विप्रियसमूहान्॥४३॥

विप्राणां हि कुटुम्बिनां प्ररुदतां वित्तापहारादिना
यावद्रेणुसिचश्शुचाश्रुकणिकास्तावत्सहस्रं समाः।
क्षुल्लाः कुल्यजनैस्समं नृपतयो दुर्लङ्घ्यमिङ्गन्त्यहो
कुम्भीपाकमपारघोरनरकं बम्भ्रम्यमाणाश्चिरम्॥४४॥

विप्रापराधविधिसम्यगपार्जनेन
खल्पायुषो नृपतयोऽल्पधना रुजार्ताः।
राज्यच्युता रिपुजिताश्च भवन्ति भूमौ
दृष्ट्वापि हन्त न विदन्ति वसुन्धरेशाः॥४५॥

मत्का हृत्कुहरेऽपि बाडवजनं द्रोढुं न सङ्कल्प्यता-
मागस्यप्यतुले नमस्यत बहु घ्नन्तं शपन्तञ्च वा।
किञ्चेदं कथयामि किञ्चन यदा विप्राप्रियं मत्प्रजाः
कुर्युस्तत्क्षणमेव विक्षतमिति ज्ञेयं यदूनां कुलम्॥४६॥

गिरामयमगोचरो ननु नृगो नृपौ येन हि
द्विजावपदरोषणावधिकशान्तितस्सान्वितौ।
तथैव सकलो जनोऽप्यनुसरीसरीतु द्विजा-
नपि प्रचुररोषणान् गलितदूषणान्वेषणः॥४७॥

नम्या देवगणा नृणां विधिहरौ तेषां तयोरप्यहं
सोऽहं विप्रकुलं नमामि सततं सर्वैस्तथा नम्यताम्।
नो चेत्कोऽपि नमेत् क्वचित्सतु मया दण्ड्येत खण्ड्येत वा
विप्रेष्वप्रियकारि दोरपि निजं सद्यो मया च्छिद्यते॥४८॥

विश्रावयन्निति जनान्मृदुहासमिश्रै-
र्विश्राणयन्नखिलमोदमपाङ्गपातैः।
ब्रह्मण्यमौलिरगमन्नृगधर्ममेव
सम्मानयद्भिरखिलैस्सह राजधानीम्॥४९॥

(इति पुराणसारानुसारेण कथा।)

अथ 'दिष्टान्तमागतोऽहं वपुरिह कृकलासमुद्रमद्राक्षम्' (श्लो० ३०) इत्यस्य स्थाने श्रीभागवतानुसारेण विशेषः-)

दिष्टान्तमागतोऽहं याम्यभटानभ्यचक्षि सौम्यतमान्।
तैश्च सानुनयविनयैर्माननीयेन यानेन संयमिनीमुपनीतं मां कृतान्तः

स्वयं धृतान्तर्मोदस्सबहुमानं, मानयित्वैवमवादीत्।।

न त्वं मद्दर्शनार्हस्तदपि सुकृतिनं द्रष्टुमेवानयं त्वां
किं सिद्धार्थाय दास्ये किमु सरटतनुं पूर्वमेवर्च्छसि त्वम्।
प्राप्ते कृष्णाप्तिकाले किमपि सरटभावोऽस्तु पूर्वन्तु भोगान्
मद्दत्तान् मोक्ष्यते वा कथय तदधुना गमि ते कामितं चेत्।।५०।।

पुरो हरिविलोकनादनुभवानि भोग्यानि चेत्
प्रभूतरजसो भवेन्मम न तादृशी तत्कृपा।
हरिस्मरणशोभना सरटतैव मे जायतां
विभेमि न पुनश्च्युतेरिति तमभ्यधामप्यहम्।।५१।।

अयि साधु साधु भणितं धीरोऽसि तथैव भवतु भद्रं ते।
इति तेन कथितमात्रं वपुरिह कृकलासमुद्रमद्राक्षम्।।५२।।

इति नृगमोक्षप्रबन्धः समाप्तः।।

# गजेन्द्रमोक्षप्रबन्धः

पृथ्वीपालाननम्रानतुलितमहिमा वैरभाजो विजित्य
श्रीमान् सामाद्युपायैर्जलनिधिवसनामात्मसात्कृत्य पृथ्वीम्।
भुक्त्वा भोगानशेषांश्चिरमभिलषितान् मुक्तसङ्गश्च पाण्ड्ये-
ष्विन्द्रद्युम्नाभिधानो नरपतिरभवन्मग्नचेता मुकुन्दे॥१॥

नयविनयनिधानं सत्त्ववन्तं तनूजं
विगतविषयरागः सोऽभ्यषिञ्चत् स्वराज्ये।
हरिचरणनिषेवातत्परा नाद्रियन्ते
सरसिजवसतेरप्यास्पदं किन्नु राज्यम्॥२॥

सोऽयं त्यक्तविषोपमानविषयो मालेयमालाकुलं
शैलं भासुरमावसन् हि मलयं भूपो वितेने तपः।
गम्भीरेण च कुम्भयोनिमुनिना शप्तः स्वसम्भावना-
वैमुख्यादवशस्तदैव गमितः सम्भ्रान्तधीः कुम्भिताम्॥३॥

मुनीन्द्रशापेन गजेन्द्रतामसा-
वावाप्य भूयोऽपि भृशं विमोहितः।
सहैव तस्मिन् विचरन् महागिरौ
निनाय कालं सुचिरं करेणुभिः॥४॥

अथ कदाचिदतिबहलमदजलप्रक्षाल्यमानपृथुलगण्डस्थलाभ्यर्णपरिभ्रमद्भ्रमरनिकरझङ्कारमुखरितसकलदिङ्मण्डलो नितान्तनिशितदन्तकुन्तोच्चण्ड विदलितगण्डशैलपिण्डप्रस्फुरद्विष्फुलिङ्गनिकरविद्योतितविकटकटकप्रदेशः अतिदुःसहमदगन्धमात्रोपलम्भभीतपलायित-

प्रतिगजहरिशरभशार्दूलादिवर्जितात्मसमीपः मदनशरविसरदविरलमदनदहनसदनायमानमानसो मदभरघूर्णमानलोचनमरीचिनिचयपरिहसितमधुवर्णार्णोरुहकेसर सवर्णपूर्णपुरु- विन्दुकर्णकटकरः परिमाणमिवौन्नत्यस्य, परिणाम इवाञ्जनशैलस्य, प्रत्यक्षस्वरूपमिव मदावलेपस्य, अनुपमकटोऽप्यत्यन्तविकटः, अनेकवशानुयातोऽपि स्ववशः, अनुत्तमप्रतिमानोऽपि अप्रतिमानः, कासार इव उल्लसत्पद्मकविभूषणः, वदान्य इव अनवरतप्रवृत्तदानो, रावणराक्षसगण इव प्रहस्तकुम्भकर्णमहापार्श्वातिकायभयङ्करो, वामन इव करकलितदानसलिलो, विश्वविहितविक्रमो धनञ्जय इव कर्णताडनरतः, सदारकोऽपि तरूणां विदारकः, सदावनरतोऽपि गणानाम् अवनरतः, क्वचिच्च लकुचत्वङ्निचयसल्लकीपल्लवतल्लजादिखाद्यपदार्थैर्वल्लभाभिः समं सञ्जग्धिमहामहमनुबोभुवन्, क्वचिच्च निशिततरनिजदन्तकुन्तसन्ताडितहिन्तालतालनागपूगपुन्नागप्रमुखसुस्थिरतरस्थिरारुहनिवहप्रस्तरगण्डशैलषण्डखण्डनरवानुयायिबृंहितकान्दिशीकसैरिभशरभेतरेभहरिमृगकुलावलोकसभीतनिजकलभकरेणुगणपर्यवनसमासतक्तचित्ततया गणसमीप एव सञ्चरन् स करिवरः शशिकरविशदकलशजलधिकल्लोलसततसमास्फालनसञ्जायमानफेनजालपरिवेष्टितकटकप्रदेशतया अमृतमथनसमुद्यतसुरासुरनिकरमन्थपरिकल्पितमहोरगपाशपरिणद्धमन्दरमहाचलतुलावलम्बे यक्षगन्धर्वविद्याधरकिन्नरचारणाप्सरोगणाधिष्ठितविविधकन्दरोज्जृम्भमाणगम्भीरसङ्गीतनिनदश्रवणकुपितकण्ठीरवकण्ठारवमुखरितकटप्रदेशे रुरुपृषतचमरचमूरुगोमायुवृकसालावृकादिनानारण्यमृगसङ्कुलानतद्रोण्यालङ्कृते सालरसालतालहिन्तालतमालप्रियालकृतमालवञ्जुलादिविविधतरुनिकरपरिवृतामरारामसरः सरित्कासारमनोहरे अयुतयोजनोन्नते तावद्योजनपरिणाहे विविधमणिमयबहुशिखरभास्वराशामुखे पितृसुरसुन्दरीजनविहरणसमुचितैरिव त्रिभिः सौधैरेकत्र सङ्गतैरिव महामेरुकैलासाञ्जनगिरिभिः समागम्य भुवनविहितं चिन्तयद्भिरिव त्रिमूर्तिभिः, सकलसुरसेव्यमानैः कनकरजतकालायसमयैरभ्रंलिहाग्रैः त्रिभिः शिखरैः त्रिकूट इति यथार्थनामधेये गिरौ करिकलभकरेणुगणपरिवृतः चरणनिपातचलाचलाचलं सञ्चरन्

धोरतरनिदाघातपसन्तप्तः • तत्रैव कुत्रचिद् भगवतो वरुणस्य उद्यानमृतुमदभिधानमभिजगाम।

यस्मिन् सर्वर्तुयोगात् सकलविटपिनः सर्वदा सर्वपुष्पै-
नम्राः कम्रैः फलौघैर्ललितकिसलयैः सन्ति सन्तापशान्त्यै।
तस्मिन्नप्युन्नतोऽसावनपिहिततनुःछायया पादपाना-
मार्च्छन्मूर्च्छां निदाघातपगरिमकृतम्लानिरम्लानदानः॥५॥

उद्याने तत्र हेमाम्बुरुहपरिमलं सान्द्रमादाय वान्तं
वातं जिघ्रन् विदूरान्मदभरकलुषाघूर्णिताक्षः क्षणेन।
उद्यत्तृष्णैः सतृष्णैः सह करिकलभैर्धेनुकाभिश्च दैवे-
नाकृष्टो दक्षिणेन स्वयमिव तरसः प्राद्रवद्यूथनाथः॥६॥

यद् रेजे पारिजाताद्यमरतरुगणैस्तीरजैर्नालिकेर-
द्राक्षेक्षुप्लक्षरम्भाक्रमुककुरवकैः सल्लकीभिस्तथान्यैः।
नित्यर्तुत्वादवाप्ताखिलनिजविभवः स्वर्णसौगन्धिकाब्जा-
द्यामोदावासितं यद् विलुलितसलिलं यादसां विभ्रमेण॥७॥

वेगादेव विगाह्य तत्र करिणीवृन्दैः सहापीय च
स्वच्छं वारि यथेच्छमाप्लुततनुर्यूथं तथाप्लाव्य च।
शुण्डादण्डगृहीतनीरनिकरैर्जिघ्रन् गजीपोतकां-
स्तस्थौ हन्त गतव्यथो गजपतिर्दीर्घं निशश्वास च॥८॥

तत्काले जगृहे हठाद् दृढतरं ग्राहेण घोरेण स
श्येनस्फीतशिताग्रदन्तनिकरक्षुण्णाग्रपादं बली।
आकृष्योत्तरितुं तमाशु यतते स्मोत्पन्नतीव्रव्यथः
फीत्कारध्वनिपूरिताण्डकुहरं गन्तुं न चालं ततः॥९॥

नक्रोऽप्युग्रपराक्रमो ह्यतिबलं व्याकृष्य नागाधिपं
तोयाभ्यन्तरमानिनीषुरमुचन्नास्याग्रपादं बली।
विक्रन्दन्तमलं गजेन्द्रमुदके वीक्ष्याकुलं व्याकुला
भीतास्तत्रसुरात्तवत्सकलभा दीनाः करिण्यश्चिरम्॥१०॥

अपरे बलिनो महगजास्तमथोत्तारयितुं कृतोद्यमाः।
अपि न प्रबभूवुरीश्वरे विपरीते विफलाः सुहृच्छ्रमाः॥११॥

तोयस्यान्तर्बहिरथ तयोः कर्षतीर्नेतुमेवं
भूयोभूयः पृथुलबलयोर्नक्रमातङ्गपत्योः।
दिव्याब्दानां परिणतमभूद् दैवगत्या सहस्त्रं
दृष्ट्वा देवा विधिविलसितं मेनिरे तद् विचित्रम्॥१२॥

अहीयत गजेन्द्रस्य बलं काननचारिणः।
जले जलौकसस्तस्य व्यवर्धत दिने दिने॥१३॥

ततः प्रतिक्षणं प्रक्षीणमनोबलौजसस्तु मातङ्गपतेरात्मविमोक्षोपाय-विषयबहुविधचिन्तासन्तानेन वा पूर्वजन्माभ्यासेन वा भक्तजनोद्धार-णनिपुणचरणारविन्दस्य करुणाकरस्य श्रीनारायणस्यानुग्रहेण वा हृदयोदयगिरौ ज्ञानदिवाकरे समुदिते विनष्टः सपदि मोहान्धकारः बह्मरुद्रादिविबुधज्योतींषि अविपृथक्त्वेन सम्यङ्ङ् न प्रचकाशिरे व्यरंसीत् संसृतिरात्रिव्यरोचत मोक्षदिवसावतारः विकसितं च मानससरोरुहम्। ततश्चराचरात्मकमिदं जगद् भगवत्स्वरूपमेवेत्यवधारयतः संसारस्यासारातां निश्चिन्वानस्य जिजीविषारहितस्य मुमुक्षोः पूर्वजन्मा (भ्य) स्तमेव जप्यं जपतो ब्रह्मादिस्तम्बान्तं जगदखिलमपि परब्रह्मतया निर्विशेषमुप (कल्प) यतस्तुवतस्तस्य तथा विधार्तिमुपलभ्यार्ताभ्युपपत्तिदीक्षितो हरिः सत्वरं पुरत आविरासीत्।

मत्स्यरूप कमठाकृते वरवराहदेह नरसिंह हे
शस्यवामनतनो भृगूद्वह रघुप्रवीर बल कंसहन्।
दस्युभूतजननिग्रहाय धृतकल्किवेष भगवन् मृते-
रस्य सर्वमपि संकटं त्वमिह पद्मनाभ विरलीकुरु॥१४॥
आक्रन्दं नक्रभीतद्विरदवरमुखोद्गीर्णमाकर्ण्य तूर्णं
सौपर्णे स्वर्णवर्णे गरुति कृतपदः पूर्णकारुण्यराशिः।
कल्पान्तार्काभचक्राद्यभिलसितभुजश्चारुभूषात्तशोभो
भास्वत्पीताम्बरोऽथाम्बुदसदृशरुचिः प्रादुरासीत् स देवः॥१५॥

दृष्ट्वा तस्य तथाविधं स भगवान् दुःखं दयावारिधि-
स्ताक्ष्याँत् क्षिप्रमथावतीर्य सरसः सग्राहमुद्धृत्य तम्।
पश्यत्यम्बरसीम्नि दिव्यनिवहे चक्रेण नक्राननं
भित्त्वा मोचयदीडितः सुमनसो वर्षद्भिरिन्द्रादिभिः॥१६॥

विष्णोश्चक्रविपाठितः स झटिति त्यक्त्वात्मनो नक्रतां
क्रूरां देवलशापजामथ निजां सम्प्रा (प्य?प) दिव्यां तनुम्।
हूहूः पूर्ववदिन्द्रपार्श्वमगमत् गायन् हरेर्विक्रमं
हीहीत्यम्बरचारिभिः सकुतुकं दृष्टः स गन्धर्वराट्॥१७॥

इति स भगवानुग्रान्नक्राद् गजेन्द्रमकल्मषं
सपदि विरहय्यास्मै दत्त्वा तदात्मसरूपताम्।
गरुडमधिरुह्यानेनामा विमानगतेन च
स्वभवनमगाद् वैकुण्ठाख्यं विभुः परमाद्भुतम्॥१८॥

द्विपेन्द्रमोक्षनामाख्यं द्विजेन्द्रेण विनिर्मितम्।
प्रबन्धमवधिं प्राप सुबन्धुररसोल्लसत्॥१९॥

इति गजेन्द्रमोक्षप्रबन्धः समाप्तः।

## II VERSION

### गजेन्द्रमोक्षप्रबन्धः ( द्वितीयः )

उत्तुङ्गमस्तकविराजितराजबालं
मत्तद्विपेन्द्रवरपूरुषशीर्षमूर्तिं।
प्रत्यूहसंहतिविहन्तृकमत्युदारं
चित्ते चकास्तु मम किञ्चन वस्तु नित्यम्॥१॥

चतुर्भुजं शङ्खचक्रगदाराजीवशुम्भितम्।
नीलमेघरुचं बालं मुकुन्दं शरणं भजे॥२॥

अस्ति श्रीमान् गिरीन्द्रस्त्रिदशविहृतिभूमिस्त्रिकूटाभिधानः
स्वर्णायोरूप्यरूपैस्त्रिभिरुरुशिखरैरुच्चकैरुज्ज्वलाभः।
औन्नत्यं योजनानामयुतमनुव्रजन् क्षीरपाथोधिवेल्लत्
कल्लोलोल्लासिपार्श्वः सकलमृगकुलाकीर्णवन्योऽतिधन्यः॥३॥

योऽयं पादतलालसन्मरतकग्रावप्रसर्पद्रुचां
जालैः श्यामलमातनोति नितरां क्षीराम्बुराशेः पयः।
यस्मिन् दिव्यजनेन्दुसुन्दरमुखीसङ्गीतसंनादितां
गम्भीरं प्रतिगर्जति स्म निवहः पञ्चाननानां दरीम्॥४॥

अस्ति हि समस्तगुणालयस्य महीतलैकभूषणस्य महीधरस्यास्य कुत्रचन सानुसीमनि भगवतो वरुणस्य सर्वकालसञ्जायमानसरभसविकसदभिन-वसुमनोजालप्रभृमरबहलपरिमलकन्दलीसमाकृष्यमाणैः सरसतरमरन्द-गन्धसमाघ्राणसरीसृप्यमाणतत्पिपासावेगविवशीकृताशयैः मुहुर्मुहुरनुबोभू-यमः नमधुरिमाधरीकृतामृतमकरन्दसपीतिमेदुरसम्मदाकुलनिजकुटुम्बिनीज-

नाञ्चितसझङ्कारसञ्चारमाचरद्भिः चञ्चलोकसञ्चयैरति- वेलमलङ्कृतं, इतस्ततो वलमानपवमानजनितवेपनपल्लवाभिः आपादचूडनिरन्तराङ्कुरित-कोमलमुकुलजालकं निबिरीसरोमहर्षमिवा- बिभ्रतीभिः तुङ्गतरतरुविटपकोटिसन्ताडितसञ्चरदम्बुदकदम्बनिष्यन्दितशीकरनिकरैरुल्ल-सितघर्मजलबिन्दुभिरिव समलङ्कृताभिः स्मरशरशकलिताभिर्वनिताभिरिव लताभिरशिथिलमुपश्लिष्यमाणैः परिणतबहलफलविसरतया तद्रसास्वादनैकप्रलुब्धहृद्यैरशेषदिशामण्डलेभ्यः समागतैः सॅरस-कलकलरवमुखरितहरिदन्तरैः तित्तिरिशुकपिकप्रमुखैरसंख्यैवि-ष्किरनिकरैरुपशोभितशिखरदेशैः, मन्दारपारिजातपाटलाशोकचम्पकचूत-प्रियालपनसाभ्रातकपूगनालिकेरखर्जूरबीजपूरमधुकसालतालतमालासनार्जु-नारिष्टोदुम्बरप्लक्षवटशिंशपचन्दनपिचुमन्दकोविदारसरलदेवदारुद्राक्षेक्षुरम्भा-जम्बूबदर्यक्षाभयामलकविल्वकपित्थजम्बीरभल्लातक- प्रमुखैरनेकैरनोकहैः सर्वतः संबोभूयमानभूरिशोभं, कोर (न?) निकरतुण्डकोटिपरिखण्डित-परिणतडाडिमवल्लरीफलरसार्द्रीकृतान्तरभागं निरन्तरनिर्गल-दनल्पतरपुष्परेणुसुरभिलैः विरहिजनविरचितविविध-कुसुमपल्लवपर्यङ्कसङ्घपरिभासुरैः ताम्बूलवल्लरीसमा- रूढपूगसन्दोह-सन्देदीप्यमानपर्यन्तैः लक्ष्मीविहारमन्दिरैरिव मनोहरैर्लतामण्डपैर्बाभास्यमानं, प्रणयभाराकुलाभिः प्रणयिनीभिः सह संक्रीडमानैः सिद्धविद्याधरमुखैरशेषैरपि देवविशेषैराकीर्णसकलभागं, क्वचिदिन्द्रमन्दिरमिवाशोकसुमनोगणाञ्चितं कुत्रचित् पातालमिव विराजमाननागसङ्घम्, कुहचन दशकण्ठपुरमिव तरुणहरिणपरिभासुरं, कुंत्रचिद् दाशरथिकराम्बुजमिव बाणासनदर्शनीयं, क्वचित् समरभूतलमिव शिलीमुखसमावृतं, कुत्रचिद्धनञ्जयलावण्यमिव माधवीमनोहरं, कुहचन कामिनीवदनमिव तिलकोल्लासितं, कुत्रचन नारायणशरीरमिव तमालकन्दलीसुन्दरं, क्वचन कैलासशिखरतलमिव नीलकण्ठनिवासभूतं, निरतिशयानन्दसन्दायितया निखिलजनम-नोभिराममारामवरमृतुमन्नाम।

**उद्यानेऽस्मिन् मृदुगमजगत्प्राणवेल्लत्प्रफुल्ल-**
**स्वर्णाम्भोजप्रकरविसरद्भूरिसौरभ्यभारि।**

सम्भ्राम्यद्भिर्मधुरतरझङ्कारिभिश्चञ्चलीकै-
रञ्चच्छोभं विलसति सरः किञ्चनालं विशालम्॥५॥

कूजद्भिः कलनिस्वनं विमलतामास्वाद्य हृष्टः सदा
यस्मिन् सारसहंसमुख्यविहगद्वन्द्वैररं रम्यते।
कल्हारोत्पलपङ्कजादिरजसां जालैरलं भासुरं
यद्वार्यम्बुसदां विसारकमठादीनां गणैश्चञ्चलम्॥६॥

यद्भिन्तालतमालकृतमालाभ्रातकाम्रादिभि-
र्नित्योत्फुल्ललसत्प्रसूनफलजालोल्लासिभिस्तीरजैः।
शुभ्रां भातितरां वहन्नगगणैरामोदिनीं यत्तटी-
मेत्य स्वीयवधूभिरासत सुखं विद्याध्रसिद्धादयः॥७॥

तत्र च कदाचन तस्य शिलोच्चयस्य वनावनीर्निकेतनः कश्चन वनवारणवरो महामहीधरप्रतिमोदग्रविग्रहः समग्रानपि मृगग्रामान् निजावलोकनमात्रेण वित्रासयन् अनवरतनिष्यन्दमानदानवारिपङ्किलगण्डमण्डलीकण्डूतिकृतिसञ्चूर्णितसालमण्डलः स्वकीयगन्धसमाघ्राणजातभीतिवशाद् दूरविद्रुतपुण्डरीकषण्डः स्वयं निदाघतापप्रतप्तः सलिलाशयं गवेषयन् करेणुभिः परिवृतः कलभानुद्रुतः पदविन्यासगरिमभरेण तं गिरिवरं परितः प्रकम्पयन् मदगन्धलुब्धमधुरझङ्कारसञ्चारिभ्रमरपटलीप्रडीनोड्डीनविराजमानकटप्रदेशो मन्दमन्दमस्य सरोवरस्योपकण्ठमाढौकत।

तस्मिन् विगाह्य सरसे सरसि प्रमोदात्
तोयं सुधामधुरमागलमानिपीय।
आसि ( ञ्च्य? च्य ) गात्रमपि पुष्करसंभृताद्भिः
सन्तापशान्तिमयमाप महागजेन्द्रः॥८॥

कलभान् करिणीश्च पाययन् निजशुण्डापयसा च सेचयन्।
स्वयमप्यधिकं पयः पिबन् चिरमस्मिन् विजहार स द्विपः॥९॥

करिवरमिति तं विहारलोलं नियतिवशात् सरसीपयस्सु मत्तम्।
प्रतिपदमचिराद् गृहीतवान् कोऽप्यमितबलोग्रपराक्रमोऽथ नक्रः॥१०॥

ग्राहेण कृष्यमाणोऽसौ बलीयानपि वारणः।
न शशाक तटं गन्तुं तदा वैवश्यमाप्तवान्॥११॥

करेणवश्चुक्रुशुरित्थमुच्चैः
स्वयूथनाथं प्रसमीक्ष्य खिन्नम्।
पार्ष्णिग्रहास्तैः कलभैः. सहैता-
स्तीरं समारोपयितुं न शेकुः॥१२॥

अनन्तरमित्थमेव बद्धरोषं युध्यतोरन्योन्यं यथाबलं विकर्षतोः परमरोषपरुषान्तरङ्गयोर्नियुद्धविस्मापितसिद्धविद्याधरमुख्यदेवविशेषयोरनयोर्दन्तिनक्रयोर्वत्सरसाहस्रकेऽतिक्रान्ते कालबलात् प्रक्षीणसकलकरणबलस्य तस्य करिवरस्य पूर्वजन्मसमार्जितमहितपुण्य पूरपरिपाकात् कथमहमात्मप्रभावेनामुतो विधातृपाशरूपाद् ग्राहादात्मानं मोचयितुं पारयेयं, कथं वा इमाः करिण्यः कलभाश्च मां विमोचयितुं समर्था भवेयुः, यद्भयेन पङ्कजासनसङ्क्रन्दनप्रमुखाः समस्तदिगीशा अप्यन्ये च सर्वे यदाज्ञारूपां निजनिजधुरमुद्वहन्ति तमशेषलोकैकनाथमीश्वरमृतेऽन्यः कश्चन मदीयामिमां पीडामुन्मूलयितुं न प्रभुः, अतोऽहममुमेव भक्तवत्सलं भगवन्तं शरणं भजामी'' ति मतिरुत्पनीपद्यते स्म।

निश्चित्य बुद्ध्यैवमसौ महात्मा करी परं भक्तिभरावनम्रः।
त्रैलोक्यनाथस्य महत्त्वमन्तः समाकलय्येत्थममुं समस्तौत्॥१३॥

यद्रूपानवबोधतो जगदिदं विश्वं हि सञ्जायते
यज्ज्ञानाच्च विलीयते सकरणं रज्ज्वामिवाशीविषः।
यस्माज्जातमिदं यदेव सकलं चैतद् यदस्मात् परं
तस्मै सत्यसुखात्मकाय महसे कुर्वे नमस्यामहम्॥१४॥

यो व्याश्नुवानो वसुधादि सर्वं तिष्ठत्यतिक्रम्य दशोत्तरं पदम्।
सहस्रमूर्ध्ने पुरुषाय भूयसे तस्मै नमोऽनन्तदृगङ्घ्रिबाहवे॥१५॥

स्रष्टुं विश्वमशेषमेतदवितुं संहर्तुमात्मीयया
शक्त्या यश्च गुणत्रयीमयमुपादत्ते शरीरत्रयम्।
तस्मै निर्गुणरूपिणे त्रिजगतामीशाय निर्विक्रिय-
व्यापाराय निरीश्वराय करुणाधाम्ने नमस्कुमहे॥१६॥

अतिक्रान्ते काले लयमुपगते विश्वभुवनेऽ-
प्यविद्यां भूतेषु क्रमश उपयातेष्वथ निजे।
प्रलीनायामस्यामविलयि महो यच्च परमं
प्रपद्ये सत्यं तच्छरणमहमाद्यन्तरहितम्॥१७॥

नित्यानित्यविवेकिनः शमवता मुक्ता विमुक्तिं परा-
मिच्छन्तो मुनयः समेत्य विपिनं भीमं तपः कुर्वते।
यद्बोधाय यमादिपूतहृदयाः सोऽयं त्रयीदुर्गमो
देवः सम्प्रति सम्भवेन्मम गतिः सर्वैकहेतुः परः॥१८॥

ततश्चैवं केवलात्मन्यात्मनि परमपुरुषे भक्तिभाराद् बहुप्रकारमुदीरितैः स्तुतिरवैराक्रन्दति तस्मिन् महागजे करुणाकरनामा स भगवान् भक्तसन्तापसन्दर्शनदयालुहृदयः सहसैव तत्परित्राणमादधातुं भक्तिभारा-वनम्रकन्धरं धराधरप्रतिमाकृतिं प्रभानिन्दितकाञ्चनं महाहिभूषणं महानुभावं भगवदाज्ञैकप्रतीक्षं छन्दोमयं तं पक्षिराजं गरुडमधिरुह्य सिद्धविद्याधरकिन्नरादिदिव्यजनैरनवरतमनेकविधप्रस्तुतस्तुतिकोलाहलैरखिला अपि दिशा बधिरिताः कुर्वाणैः सनन्दादिभक्तवृन्दैरन्यैरपि धन्यैः शतमन्युप्रमु-खैरखिलदिशामीश्वरैरशेषैश्च पार्षदैः परीतः तत्सरः परिसरमुपसरन् मकुटकटककुण्डलवलयकौस्तुभवनमालादिनानाभूषणैरतितरां परिभासुर-शरीरमरीचिकन्दलः तस्य पतत्रिराजस्य कण्ठतलमतिसुन्दरमलङ्कुर्वाणः चरणाश्रितजनेषु निरन्तरनिरित्वरकरुणामयामृतझरीनिष्यन्दनिर्भर-समार्द्रितदृगन्तदेशः सकलसज्जनोपद्रवगर्वितदुर्जनविगर्वीकरणालंकर्मीणम् अविरतप्रसृमरमहःप्रसरदुर्दर्शं सुदर्शनाभिधानं निजायुधवरं करतलेनोद्वहन् मन्दहासकन्दलीविचनीकस्यमानवदनारविन्दोऽस्य पुरतः प्रादुरासीत्।

दृष्ट्वा देवं तदैवं गरुडगलगतं पुष्करे पुष्कराक्षं
मोदादुत्क्षिप्य सोऽयं सपदि करिवरः पुष्करं पुष्कराढ्यम्।
विष्णो विश्वैकबन्धो जय जय करुणावास तुभ्यं नमस्ते
दीनं त्वत्पादपाथोरुहशरणमिमं पाहि मामित्यवादीत्॥१९॥

एवं वीक्ष्य तदा तमुद्यदनुकम्पार्द्रेक्षणः स प्रभुः
पक्षीन्द्रादवतीर्य मङ्क्षु सरसः सग्राहमुत्तारयन्।
चक्रेणार्कसमप्रभेण दलयन् नक्रास्यमश्रान्ति (तः? दः)
कुम्भीन्द्रं तमूमुचद् व्यसनतः पश्यत्सु देवादिषु॥२०॥

तदा ब्रह्मेशाद्या ववृषुरमराः पुष्पविसरं
प्रशंसन्तश्चित्रं चरितमजितस्यैतदनिशम्।
निनादो वाद्यानामजनि दिवि देवेषु कतिचि-
ज्जगुः केचिन्मोदान्ननृतुरपरे तत्र नुनुवुः॥२१॥

मुक्तो नक्रः सपदि स तदा देवलाख्यस्य शापा-
द्धूहूसंज्ञः समजनि च गन्धर्वराडद्भुताङ्गः।
स्तुत्वा देवं तमथ नितरां भक्तिभारावनम्रो
नत्वा भूयस्तदनुमतिमन्वासदत् स्वीयलोकम्॥२२॥

इन्द्रद्युम्न इतीरितो नरपतिः पूर्वं पुनस्तादृशं
नागेन्द्रत्वमगस्त्यशापबलतः संप्राप्य यो जातवान्।
चित्रं चित्रमयं तदा त्रिजगतां नाथस्य कारुण्यत-
स्तत्सारूप्यमवाप पीतवसनश्रीवत्सकाद्यङ्कितः॥२३॥

संप्राप्तमाह भगवानिति पार्षदत्वं
मां त्वां चरित्रमिदमप्ययि मद्विभूतीः।
तस्याश्च यः स्मरति पूतमनाः प्रभाते
मुक्तो भविष्यति दृढं निखिलादमीवत्॥२४॥

लोकानुग्रहरूपिणीं गिरमिमामुच्चार्य तस्मिन् क्षणे
प्रध्माय स्वदरं गभीरममरानानन्दयन् स प्रभुः।

आरूढो गरुडस्य कण्ठममुना सारूप्यभाजा समं
प्रायात् स्वं पदमिन्द्रमुख्यदिविजैरुद्गीतसत्कर्मकः॥२५॥
इत्थं भक्तिवधूधूतमानसेन मया प्रभो।
प्रणीतं चरितं देव तावकं तत् प्रसीद मे॥२६॥

## III VERSION

### गजेन्द्रमोक्षप्रबन्धः

इन्द्रद्युम्न इति त्रिलोकविदितः पाण्ड्याधिराजः पुरा
पुत्रे राज्यभरं निधाय मलये तन्वंस्तपो दुश्चरम्।
आतिथ्याकरणादगस्त्यमुनिना शप्तः समाधिस्थितो
दुग्धाम्भोनिधिमध्यभाजि गजतामापत् त्रिकूटाचले॥१॥

तदनु चायम् अतनुमदमदनानुरोधवीतबाधचेताः वासनानुगत्या नित्यानुबद्धहरिध्यानशक्तिः अनुरक्तानेकहस्तिनीपरिवारितः दूरतोनिरस्त-समस्तसत्त्वजातः यूथमापालयन् देवालयदन्तिनामपि स्पृहणीयचरितः परितस्त्रिकूटाचलम् अतिपेशलदलबहलपरिमलतालतमालहिन्तालरसा-लनालिकेरपूगषण्डपुंड्रेक्षुरम्भाकलमफुल्लसल्लकीपनससरलैलादिविपिन-विहरण विनोदाविदितगलितबहुकालः कदाचित् ऊष्मलग्रीष्मतापासहिष्णून् गणान् प्राचेतसं सरोवरं प्रणीय पानीयपानविहरणमृणालाहरणाभ्यवहारादिभिः वीतखेदान् विधाय अतिचिरं स्वैरलोलामाकलय्य देवलोकगाथकेन हूहूनामकेन देवलमुनिशापग्राहितग्राहाकृतिना गृहीतचरणो विमोचनासमर्थेषु विहितभयबृंहितसंहिताकाण्डप्रलयघनघटास्तनितशङ्कातङ्किताशेषजन्तुजातेषु यूथेषु तूर्णोत्तीर्णेषु देशदशाविशेषवशात् विशालबलविक्रमोदग्रेण समं ग्राहपतिना संग्रामकेलिभिः कमपि समयं गमयन् भ्रमयन्नभिमतानुवर्तीनि निर्धूतकुहरपाथांसि इतरयादांसि, रमयन् अनामयपिशुनैरपि समाश्वासनजजनैसविलासनयन्वलनौ अवशं वशायूथं क्रमेण वत्सरसहस्रावसाने मत्सरिणां मदं शमयितुं दमयितुं च मनः विहिताध्यवसितेर्नियतेः प्रभावात् इभाधिराजः परा*।

---

* इतः परं न दृश्यते मातृकासु॥

# सन्तानगोपालप्रबन्धः

श्रीमानामोददायी निजचरणजुषां नृत्यदम्भोधिकन्या-
भास्वत्पादाम्बुजालङ्कृततरलतुलाकोटिवाचालितायाम्।
ख्यातायां द्वारकायामथ तनयसुहृज्ज्ञातिसङ्घैरसङ्ख्यैः
संयुक्तो वासुदेवश्चिरतरमवनीं पालयन् संन्यवात्सीत्॥१॥

अथ कदाचिदविरतमोदमानमानसैश्चातुर्वर्ण्यजनैः समावृते तस्मिन् पुरवरे कश्चन महीसुरो निजगृहिण्या अनुवत्सरं प्रसूतेषु अष्टसु कुमारेषु दिष्टवशान्मृतेषु च नवमसम्भूतडिम्भशवशरीरमादाय शोकभारविवशीकृतमानसोऽनेकयादवप्रवरसम्पूरितायां सभायामास्थितस्य भगवतो मधुसूदनस्य पुरतो निधाय सोरस्ताडं साधिक्षेपमिदमभ्यभाषत-

अये यदूनामधिप! त्वमेतां
मदीयवाणीं श्रृणु सावधानम्।
दुरात्मनि त्वय्यवनीश्वरेऽस्मिन्
ममेदृशं दुःखमभूदपूर्वम्॥२॥

श्रुत्वा चेत्थं तदीयां गिरमतिपरुषामर्जुनस्तावदेनं
प्रोचे वाचं महात्माप्यविदितभगवन्मानसो मानशाली।
भो भो भूदेव! शोकं त्यज पुनरधुना जायते ते सुतश्चे-
देतं दास्यामि नो चेदहमिह तरसा वीतिहोत्रे पतामि॥३॥

इत्थं निशम्य वचनं धरणीसुरोऽसो
मोदादवाप निजमन्दिरमाप्तचेताः।

पार्थोऽपि तत्र शरकूटमथो विधाय
तत्पुत्रजन्मसमयं प्रसमीक्ष्य तस्थौ॥४॥

तत्र च जातमात्रनिजतनयादर्शनसम्भूतकूलङ्कषदु:खभारातुरस्य भूसुरस्य वदनकन्दरादित्वरातिदु:सहतरवचनकाकोदरलेलिह्यमानो मुहूर्तमिवाधोमुखस्तिष्ठन् यथाशक्ति चेष्टया यश: करिष्यामीति मन्वान: करतलगृहीतशरासन: कार्तान्तीमाशामुपाविशन्ननवगतविप्रसूनुवृत्तान्तो विबुधालयमेत्य ततश्च महारथोऽप्यनुपलब्धमनोरथ: पुनरपि सकलदिगन्तरालेषु विचित्य विफलीभूतयत्नो यदुराजधानीमुपेत्य अननुभूतपूर्वावमानखिन्दानमानसो जिहासुरसून् महाजनिकचरितो धनञ्जयो धनञ्जयं विविक्षुर्निजप्रियसखजाल्मतया विलोपितधैर्येणानुपदसमुदीरिततदीयनामधेयेन भगवता वासुदेवेन विनिवारित इदमभ्यभाणि-

उरुतरमयि धीमन्! खेदमेतं त्यज त्वं
कुरुवर! कुरु मा मा साहसं सव्यसाचिन्!।
मुररिपुरिति जल्पन् वेगतोऽभ्येत्य जिष्णो:
करकमलमगृह्णाद् भक्तलोकार्तिहन्ता॥५॥

वासुदेवकुरुनन्दनौ सपदि भूसुरात्मजविलोकना-
यावरुह्य रथिनौ रथं तदनु पश्चिमां दिशमुपागतौ।
अन्धकारपरिमोचनाय समुपागतारिविदिताध्वना
दुग्धवारिधिमवापतुर्वसति यत्र सोऽपि जगदीशिता॥६॥

तदानीं च दूरत एवं समालोकितमणिमयाभ्रङ्कषतोरणगोपुरसौधसालजालौ आकर्णितानेकभक्तजननुतिवचनकोलाहलौ क्रमेण च व्यतीतसकलकक्ष्यान्तरौ अतिधवलजलधिजलपरिपतनशिशिरतरमृदुपवन- परिचलितनवकुसुममधुमुदितमधुपकुलझङ्कारमुखरितदिगन्तरालं चक्रासिशङ्खशरशार्ङ्गप्रमुखैर्महायुधैर्मूर्तिमद्भि: परिवारितं नारदाद्यै: सुरर्षिभिश्च पार्षदप्रवरेण सविनयेन वैनतेयेन निषेवितं छत्रायमाणभुजगराजफणमण्डलीविविधमणिमयूखविहितानेकशौनासीरशरासनसम्मावृतनभोविवरं कनकमयकिरीटशोभापरिहसितविभावसुं केयूरहारमणिकुण्डला-

दिभिरशेषनेपथ्यविशेषैर्विरोचमानम् अभिनववलाहकरुचिपश्यतोहरकायकान्तिभरकुवलयितदिशावकाशम् अतिरुचिरलोचनाभिरामया रमया चाभिनवतमालमधुरया धरया च परिकल्पितसर्पराजतल्पतल्लजे समासीनं कारुण्यमिवोररीकृतशरीरम् आनन्ददायिनमखिलजनानां परिणतजनपारिजातायमानम् परमपुरुषमवलोक्य सुन्दरतरमन्दहासमयूखशिशिरितसकलावयवौ वासुदेवधनञ्जयौ मुहुर्मुहुः प्रणम्य प्रमदवेगतरङ्गितमानसौ बभूवतुः।

कृष्णौ कृतनती दृष्ट्वा देवदेवो जनार्दनः।
मेघगम्भीरया वाचा स्मितपूर्वमथाब्रवीत्।।७।।

यदुवर! गुणसिन्धो! स्वागतं साम्प्रतं वां
किमु विजय महात्मन्! युष्मदालोकनेन।
मम मतिरतिमात्रं प्रीतिमाप्नोति किन्तु
भवति पुनरवाप्तेः कारणं श्रोतुकामा।।८।।

श्रुत्वेति वाचमजितोदितमूचतुस्तौ
त्वय्यद्य गामवति शोकलवः कुतो नः।
भूयोऽधुना धरणिदेवकुमारजातं
नीतं त्वया तदिह नेतुमुपागतौ स्वः।।९।।

निशम्य कृष्णार्जुनयोर्गिरं ता-
वुवाच देवो मधुकैटभारिः।
भवद्दिदृक्षाकुतुकादिहैतान्
मयोपनीतान् नयतं कुमारान्।।१०।।

आदाय द्विजवर्यपुत्रदशकं दत्तं जगत्स्वामिना
देवं तं वसुदेवसूनुविजयावामन्त्र्य यातौ पुनः।
वेगादात्मपुरीं प्रविश्य पृथिवीदेवाय दत्त्वा सुतान्
लब्ध्वा कीर्तिमनुत्तमामनुपमौ मोदेन तावूषतुः।।११।।

इति सन्तानगोपालप्रबन्धः समाप्तः।।

# कुचेलोपाख्यानप्रबन्धः

आसीदस्तरजस्तमोगुणकथः शान्तान्तरात्मा वशी
शिष्यः पुष्यदुदारकीर्तितपसः काश्यस्य सान्दीपनेः।
व्युत्पन्नोपनिषद्विचारसरणिः सब्रह्मचारी हरे-
र्विप्रः कोऽपि निवृत्तिमार्गकुशलो धीमान् कुचेलाभिधः॥१॥

भक्तो मुकुन्दचरणाम्बुजयोर्वितन्वन्
नित्यानि निर्मलमतिः फलनिर्व्यपेक्षम्।
यत्नं विना समुदितेन धनेन तुष्यन्
पत्न्या समं स्वनिलये स चिरं न्यवात्सीत्॥२॥

ऐश्वर्यसम्भवात् सोऽयमीश्वरस्मृतिरोधकात्।
दरिद्रतां वरं मेने हरिस्मृतिविधायिनीम्॥३॥

तं कदाचन तपोभृतां वरं गेहिनी पुनरवृत्तिखेदिनी।
विश्लथद्धृतिभरा वचोऽब्रवीदश्रुपूरकलुषीकृतेक्षणा॥४॥

अङ्गनास्म्यविदितागमा सती नाथ दुर्विधतया समाकुला।
गेहयापनविधौ समुत्सुका वच्मि यत्तदधुना निशम्यताम्॥५॥

साध्वीजनस्य पतिरेव परं हि दैवं
प्रार्थ्यो मम त्वदपरो न ततो दयाब्धे।
मामुद्धरोद्धर दुराधिकुलाभिभूतां
दारिद्र्यनाम्नि नरकाम्बुनिधौ निमग्नाम्॥६॥

अयि ब्रह्मन् ब्रह्मादिभिरभिनुतो दैवतगणैः
स्वयं लक्ष्मीजानिर्ननु तव वयस्यो यदुपतिः।
सकृद् गत्वा पश्य प्रणतजनवश्यं त्वमचिरा-
दवश्यं विश्वात्मा द्रविणमतुलं दास्यति स ते।।७।।

स च तपोनिधिरिति वदन्तीमन्तरमान्तीमार्तिमिवोद्वमन्तीमनून-धनायाक्रान्तहृदयाम्बुजामम्बुजाक्षदिदृक्षातिरंकगुणीभवद्द्रविणाग्रहां गृहिणीमित्थमकथयत्।

उक्तं त्वया यदधुना मनसा तदेत-
दुत्कण्ठितं सततमेव मयापि कान्ते!।
किन्तु प्रभोरपि मितामुपदामविन्दन्
मन्दोद्यमोऽस्मि मधुसूदनदर्शनाय।।८।।

इति वदते वल्लभाय सा याचितोपनतशालिकलितं पाटितमलिनचेलखण्डबद्धं पृथुकाञ्जलिं प्रपन्नार्तिहिंसे पुंसे प्राभृतीकर्तुं प्रादित।

ततो विप्रः पृथुकमुपसंव्यानशकले
निबद्धं निस्तन्द्रप्रमदभरमापृच्छ्य गृहिणीम्।
प्रतस्थे विश्वेशं मनसि परिपश्यन् मधुरिपुं
सतीर्थ्यं संरोहत्पुलकमुकुलालङ्कृततनुः।।९।।

गुरुनिलयनिवासे प्राङ् निवृत्तानिवृत्ता-
न्यसकृदभिनवानीवान्तरुद्वीक्षमाणः।
अयमविदिततादृङ्मार्गदैर्घ्यः प्रपेदे
सपदि सुकृतिगम्यां द्वारकाद्वारभूमिम्।।१०।।

विनिवेदितोऽथ पुरुषेण केनचित् पुनरागनेन सह तेन सादरम्।
मनुजोपलक्ष्यसुरशिल्पिकौशलं प्रविवेश केशवनिवेशनान्तरम्।।११।।

ततश्च प्रतिनवशातकुम्भस्तम्भसङ्घातसङ्घटितविमलमणिमरीचिवीचि-जालबालातपसन्ततोद्योतसुन्दरे मन्दिरे, निष्टापनिर्मलीभवदष्टापद-कलितपदचतुष्टये, ललितकलहंसकामिनीमृदुलतूलजालभरितोदरेण प्रच्छदपटनिस्सरदच्छतरच्छविविच्छुरितभवनान्तरेण स्वाधिकार-विच्छेदभिया भुवमनुगतेन भोगिराजेनेव महनीयेन शयनीयेन कमनीये, विमलवितानविलम्बमानविबुधतरुकुसुममाल्यसौरभलोभसमनुपतदलिकल-भगलविगलदतिबहलकलकलाक्रान्तपर्यन्ते पर्यङ्के समुपविशंन्तं निखिलदिगन्तराणि नीलिमाद्वैतमापादयन्तीं कामपि कान्तिकन्दलीमुद्वमयन्तं कौमारकपरिचयातिरेकसमुपचितकौतुकया सततममुक्तपार्श्वया सवितृकन्यकयेव सन्निषेव्यमाणं, निर्मलकनकनिर्मितकट-कमकुटकर्णालङ्कारकाञ्चीमुखनिखिलाकल्पजालाकल्पितशोभाविशेषं, तरलेतरतटित्खण्डषण्डमण्डितमिव वर्षासमयवारिवाहमत्यर्थविक-सिताभ्यामरुणारविन्दसंवर्तिकासुन्दराभ्यां करुणामृतरसतुन्दिलाभ्यां मृदुहसितचन्द्रिकास्यन्दसम्मिलनसविशेपशीतलाभ्यामक्षियुगलाभ्यामवनतजनम-नस्तापमपनयन्तं, विशङ्कटभुजान्तरालविश्रृङ्खलविवलमानमुक्ताहारतत्तादृश-महोनिष्यन्दमन्दाकिनीसलिलपूरपावनीक्रियमाणपुरोभागं, परिणद्धमुग्ध-पीताम्बरपिहितमहितीरुकाण्डं, मञ्जुलमञ्जीरघटितमणिकान्तिमञ्जरी-पुञ्जपिञ्जरीक्रियमाणपादपीठम्, उपपदपीठमुपविशता भक्तिमतामुत्तमेन उद्धवेन पयोजपेशलाभ्यां पाणितलाभ्यां परिमृदुसंवाह्यमानपादकमलम्, आभ्यन्तरैरक्रूरसात्यकिप्रमुखैः सात्वतचक्रैश्च सन्निषेव्यमाणं, समानसखीसहस्रपरिशोभितपार्श्वया प्रतिक्षणविसत्रंसमानघनकुटिलचिकुर-बन्धसम्पाद्यमानसान्द्रसन्तमसया बालशशिलोभनीयफालतलभासमान-स्वेदकणभिद्यमानसुभगतरधुसृगरसतिलकया विसृमरकामरसा-वेशपेशलनयनतामरसया विमलकपोलबिम्बितविमलमणिकुण्ड-लमहोमण्डलया किञ्चिदागलितकञ्चुलीबन्धबन्धुरतरकुचकुम्भया मृदुहसितसुहृदापातमेदुर तरकान्तिपूरचामरयुगलान्दोलनसमयसमुदयदुद्दाम-मुद्रामणिविद्योतोत्थापितविद्युदापातिविभ्रमया कनकसूत्रनिबध्यमानानी-

चीभवदभिनवनवीबन्धया तुलाकोटिपरिकलिततुलारहितपदसरोजया निजजीवितादपि गरीयस्यां प्रेयस्यां च पर्युपास्यमानं सन्नतजनमनोगताधिकसम्पत्सम्पादनसमर्थतया संप्रार्थितमात्रदानां सन्निहितानां संक्रन्दनतरुनिकराणां सन्ततसंदीयमानमन्देतरमन्दाक्षमरविन्दाक्षमद्राक्षीत्।

पश्यन् पुरः परिचितं गुरुगेहवासे
सच्चिन्मयं पुरुषमच्युतमच्छचेताः।
उद्भिद्यमानपुलको गलदश्रुधारो
विप्रो बभूव भृशभक्तिवशंवदात्मा॥१२॥

ततश्च,

त्वरया वरया विमुच्य शय्यां
परिपश्यन् पुरतो वयस्यमेनम्।
उरसा तरसा समेत्य गाढं
परिरेभे परमः पुमान् प्रसादी॥१३॥

मलिनं कृशगात्रमेनमेवं
परिरब्धं हरिणा विलोकयन्तः।
विसरत्कुतुका बभूवुरुच्चै-
रविदन्तस्तदुदन्तमन्धकौघाः॥१४॥

अभ्यर्चितं विधिवदप्रतिमानभाग्य-
मर्धासने समुपवेश्य पुरः समेषाम्।
अस्तोकमोदपरवानरविन्दनेत्रो
हस्तेन हस्तमवलम्ब्य हसन् बभाषे॥१५॥

सखे दिष्ट्या दृष्टः किमपरमयं मे सुदिवसो
भवादृग्भिः सद्भिर्न खलु सुलभं सङ्गमसुखम्।
पराधीना यूयं प्रतिदिनमनुष्ठाननियमै-
रमी तन्त्रावापैरपि च परतन्त्रा बत वयम्॥१६॥

अपि च,

कच्चित् सखे स्मरसि तां गुरुगेहवृत्तिं
शुश्रूषयैव नयतोर्दिवसानशेषान्।
यच्छक्तिरप्रतिहता स्वयमेव पुंसा-
मिच्छानुरूपमचिरेण फलं प्रसूते॥१७॥

शरणागतलोकपारिजातान् परिणामस्मरणीयवाग्विलासान्।
निरुपाधिकृपारसानुपासे गुरुपादानुरुतापवारिवाहान्॥१८॥

स्मरसि ननु हृदन्तरिन्धनार्थ गुरुगृहिणीवचसा गतेष्वरण्यम्।
असमयजनितामन्दवातव्यतिकरधूतघनामतीव वृष्टिम्॥१९॥

अस्तङ्गतेऽथ सवितर्यनिवार्यवीर्ये
विस्तारमेयुषि निरन्तरमन्धकारे।
तत्रैव तां ननु निशमतिवाह्य कृच्छ्रा-
दस्मान् विचिन्वति गुरौ पुनरागताः स्मः॥२०॥

विहितदक्षिणमक्षतचेतसा प्रवसता भवता गुरुमन्दिरात्।
अधिगता किमु सौम्य सखे वधूरभिमता गृहपोषणदक्षिणा॥२१॥

इति तत्तदुदीरयत्युपेन्द्रे स तु-
विप्रश्चरितार्थतां गतोऽपि।
उपदार्पणचिन्तनेन किञ्चित्
त्रपयाक्रान्तमनाः समाकुलोऽभूत्॥२२॥

तदनु दनुजहन्ता दन्तकान्तिप्ररोहै-
र्विजितविकचकुन्दैर्नन्दयन्नन्तरङ्गम्।
विनतवदनमेनं वीक्षमाणो वयस्यं
विदिततदभिलाषो विश्वसाक्षी बभाषे॥२३॥

किमिदं विनिबद्धमन्तरस्मिन् पटखण्डे निहितं तवाङ्कदेशे।
उपदा यदि दीयतामिदानीमपदे किं त्रपया समाकुलोऽसि॥२४॥

मितमप्यमितं मुदे मम स्यान्मयि भक्तेन भवादृशेन दत्तम्।
अमितं च सखे जगत्यभक्तैरुपनीतं न धिनोति मां कदाचित्॥२५॥

इत्थं वदन् मुदितधीरुदितत्रपस्य
तस्याङ्कदेशनिहितादथ चेलखण्डात्।
आदाय मुष्टिविमितं पृथुकं करेण
देवो दयानिधिरसौ कबलीचकार॥२६॥

अमृतादपि रुच्यमाहृतात् प्राङ् नवनीतादपि नन्दगेहलब्धात्।
पृथुकं प्रथमो दयाधनानां पृथुमोदं प्रजघास वासुदेवः॥२७॥

कमितरि पृथुकार्धमाददाने पुनरपि भक्षितुमक्षतानुकम्पे।
अलमलमिति संभ्रमाद् वदन्ती करकमलं कमलालया न्यरौत्सीत्॥२८॥

सवितर्यथ याति पश्चिमाद्रिं सवयस्यः सकलं विधाय कृत्यम्।
कथयन् विविधाः कथा निशां तां मधुहन्ता स्वनिशान्त एव निन्ये॥२९॥

सम्फुल्लमोदविकसद्वदनो जनौघैः
संभावितश्च निवसन् यदुराजधान्याम्।
अम्भोरुहेक्षणमनुक्षणमीक्षमाणो
जम्भारिवेश्मवसतिं स तृणाय मेने॥३०॥

निवसन्नपि तां निशां द्विजन्मा निजमर्थं न जगत्पतिं ययाचे।
वितताार न किञ्चिदप्यमुष्मै यदुनाथः स्वहृदा विदन्नशेषम्॥३१॥

याचन्ते कमपि न साधवः स्वमर्थं
वाचा तान् न च विभवः प्रसादयन्ति।
सम्पद्भिः सममुचिताभिराश्रिताना-
मासेवाफलमनुमेयमेव लोके॥३२॥

अपरेद्युरहर्मुखे द्विजन्मा निजमापृच्छ्य वयस्यमम्बुजाक्षम्।
अखिलैरपि मानितो जनौघैरनुयातः सुहृदा च संप्रतस्थे॥३३॥

गच्छन् पथि हृदा तत्तच्चिन्तयन् धरणीसुरः।
अन्तरस्थां दशां काञ्चिदन्वभून्मोदखेदयोः॥३४॥

आलोकितो यदधुना सुहृदम्बुजाक्ष-
स्तेन प्रसादपरतन्त्रमिदं मनो मे।
वक्ष्यामि किं नु गृहिणीं द्रविणैकलोला-
मित्याकलय्य स पुनः परिखिद्यते स्म॥३५॥

अनल्पैः पुण्यौघैरनुपतितमालोकनपथे
जगन्नाथं साक्षाज्जनिमरणरोगैकभिषजम्।
कथं याचे कामान् कलुषमतिसेव्यानतिचलान्
फलीकारानारादिव सुरपुरीमेत्य सुरभिम्॥३६॥

अधनो धनसङ्गमेन माद्यन् विधुनीयान्मम भक्तिमेधमानाम्।
इति नूनमसौ विचिन्त्य नादाद् द्रविणं मे भगवान् दयानिवासः॥३७॥

इन्धानप्रमदभरो विचिन्त्य कृष्णं
खिन्दानो निजगृहिणीं विचिन्त्य दीनाम्।
विप्रोऽसौ विवशमना विलम्ब्य गच्छ-
न्नभ्याशं निजनिलयस्य संप्रपेदे॥३८॥

प्रांशुप्रासादपालीशिखरपरिलसत्तुङ्गतूपीशिखाग्र-
प्रत्युप्तानर्घरत्नप्रसरदुरुघृणिश्रेणिशोणीकृताशम्।
आश्चर्याद्वैतमक्ष्णां किमपरमपरद्वारकाकारमारा-
दात्मागारं प्रपश्यन् किमिदमिति परामाप चिन्तां द्विजन्मा॥३९॥

आमीलिताक्षियुगलः क्षणमेष भक्त्या
ध्यायन् जगत्पतिमनुल्बणधीर्मुकुन्दम्।
लक्ष्मीपतेर्निजसखस्य दयापयोधे-
रेतन्निमित्तमवलोकनमित्यजानात्॥४०॥

मलिनं वसनं बभूव हृद्यं धृततारुण्यमभूच्च जीर्णमङ्गम्।
हृदयं तु परं पुरावदस्य स्थितमासीत् स्थिरभक्ति पद्मनाभे॥४१॥

नमस्कुर्वन् भक्त्या नतजनविधेयं त्रिजगती-
विनेतारं देवं तदनु निरवद्येन मनसा।
विवेशान्तः शान्तः परिजनसहस्रैः परिवृत-
स्तथाभूतं पश्यन् भवनमपि वीतस्मयलवः॥४२॥

प्रत्यग्रकान्तिलहरीमहनीयगात्री
दुग्धाम्बुराशितनयेव परिस्फुरन्ती।
प्रत्युद्ययौ प्रमुदिता पतिदेवता तं
सत्रा विनीतिभरनम्रमुखी सखीभिः॥४३॥

तदनु निजनिकेतं प्राप्य पत्नीसहायः
परिजनपरिक्लृप्तं मज्जनाद्यं विधाय।
अभजत हृदि पश्यन्नच्युतं विश्वनाथं
सुभगकुसुममालावासितं वासगेहम्॥४४॥

सह मुक्तामयैर्दारैर्गृहे मुक्तामये सुखम्।
वसतस्तस्य न चिरादासीन्मुक्तात्मता मुनेः॥४५॥

इत्थं वसन्नपि गृहे हरिपादभक्त्या
निर्धूतविश्वविषयाभिरतिः क्रमेण।
पृथ्वीसुरः किमपि धाम जनार्दनाख्यं
तत्त्वं परार्थपरमार्थमयं प्रपेदे॥४६॥

इति कुचेलोपाख्यानप्रबन्धः समाप्तः॥

# अजामिलमोक्षप्रबन्धः

नारायणेति चतुरक्षरमेव पुंसां
कैवल्यमाकलयते हि विधूय पापम्।
सङ्केतितं निजसुतेऽप्यवशो यदुक्त्वा
लेभे परां गतिमजामिलभूमिदेवः॥१॥

अमानुषतपोबलो हरिपदाम्बुजे भक्तिमान्
यमादिपरिशीलनादिह नितान्तशान्तान्तरः।
अजामिल इति श्रुतः सकलवेदशास्त्रार्थविद्
द्विजातिमकुटीमणिः समुदभूदभूतोपमः॥२॥

वेदेषु प्रथितान् विधाय विधिवद् धर्मान् गृहस्थाश्रमी
नीत्वा कञ्चन कालमञ्चितरसं शुश्रूषमाणो गुरून्।
एकस्मिन् दिवसे स्वतातवचसा कर्मोचितानादरा-
दानेतुं स समित्कुशान् वनमुदूढोत्साहमाढौकत॥३॥

स खलु तत्र विचित्रतरद्रुमलतानिकरनिरन्तरे मधुकरझङ्कारमुखरितदिगन्तरे वनाभ्यन्तरे स्वल्पमपि निमित्तमुद्दिश्य क्रमहितमनल्पं जल्पता विनिस्त्रस्तं वस्त्रमपि निस्त्रपमगणयता अनुचितबहुतरघोषमकारणमेव हसता प्रस्खलितस्वरमुद्गायता अन्तरान्तरा प्रियाहृदयावर्जनाय मन्थरतरमिवालपता लीलायामधिकलोलेन केनापि हालापिबेन हेलया दृढतरमालिङ्ग्यमानां परिशिथिलविलोलकुन्तलां मदविघूर्णितविलोचनमन्थरां मृदुकलितगानबन्धुरां विगलितनीवीबन्धनां गतिविलासविजितसिन्धुरामवलोकनविवशीकृतयुवलोकहृदन्तरां प्रियतम-

सपीतिसमुपजातसुधामाधुर्यमधुमदद्विगुणितमदनवेगसमुदञ्चितघर्मकणाङ्कित-रोमाञ्चकञ्चुकितसकलावयवाममुद्रानुरागसमुद्रमग्राम् अभद्रास्पदभूतां कामपि शूद्रां समद्राक्षीत्।।

सदाचारासक्तः सततमपि धर्मैकनिरतः
प्रकृत्या निर्दोषः प्रचुरतरधैर्योऽपि तरसा।
स तां दृष्ट्वेवारात् स्मरकृतपरीतापविषमा-
मवस्थामापेदे कमिह भुवि कामो न लघयेत्।।४।।

चित्तं तस्यां प्रसक्तं वशयितुमखिलैरेष यत्नैरशक्तः
स्मृत्वा तामेव भूयः समजनि विरतः स्वस्य धर्माद् द्विजन्मा।
पित्र्यैश्चान्यायलब्धैरपि धननिवहैस्तोषयित्वा निवासे
चक्रे तस्याः समीपे विहरणरसिकः सन्ततं मन्मथान्धः।।५।।

साध्वीं भार्यां स्वतातं प्रवयसमनुपेतावलम्बां तथाम्बां
त्यक्त्वा तत्प्रीतिहेतोरनुचितमपि चौर्यादिकं कर्म कृत्वा।
लब्धैरर्थैरजस्रं प्रणयविवशधीस्तत्कुटुम्बं प्रपुष्णन्
निर्लज्जोऽसावनैषीद् बहुसमयमहो! स्त्रीपिशाची मतिघ्नी।।६।।

तस्यामासन्नथ दश सुता भूसुरस्यास्य दैवा-
दन्यस्तेषामगमदभिधां हन्त नारायणेति।
पूर्वादृष्टैरिह किमु तदीयैर्मुकुन्दस्य यद्वा
नाम्नामेवं प्रथयितुमिदं दुष्कृतेर्निष्कृतित्वम्।।७।।

तदनु स दशमित्वं प्राप्य नारायणाख्ये
रतिमकुरुत तस्मिन् बालके केलिलोले।
अविरतमपि पश्यन्नस्य लीलाविशेषा-
नयमहह जडात्मा प्राप मोहं नितान्तम्।।८।।

अष्टाशीत्यब्दसङ्ख्यायुः कष्टं तत्पुत्रलालकः।
मुमुदे सोऽपि धिक् स्त्रैणो वेत्ति नासन्नमन्तकम्।।९।।

ततश्चान्त्यकाले सम्प्राप्ते सोऽतिदुस्सहामर्षातिभीषणात्यन्तरक्तोद्वृत्ताम्बरीषसदृक्षेक्षणोदित्वराशुशुक्षणिस्फुलिङ्गपिशङ्गितपुरोभागान् चण्डतरभुजदण्डुमण्डितमहत्तमदण्डोद्भ्रमणनिपुणान् अतिनिष्ठुराट्टहासाटोपस्फुटदृश्यमानारालविकटदंष्ट्राकरालान् अन्तरान्तरा समुदीर्यमाणात्मकृतदुष्कृतव्रातान् असितवर्णानतिभयङ्करान् अन्तककिङ्करानन्तिके समालोक्य निर्भरभयावेशविवशीभूताशयः पुरा किञ्चिदच्युतस्मृतिवासनाबलात् क्रीडालोलुपं बालकमुद्दिश्य निजगलार्पितपाशापकर्षणनिरुद्धश्वासं विच्छिन्नाक्षरं नारायणेत्यभाणीत्।।

**इत्थं व्यर्थीकृतप्रायकनिजजननो नेतुमात्मानमारा-**
**दायातान् वीक्ष्य लोकत्रितयभयकरान् प्रेतराजस्य दूतान्।**
**पूर्वस्या वासनाया बलत इह कृतानेकपापोऽपि भूय-**
**श्चोच्चैर्नारायणेति स्वसुतमथ भयादाजुहावाकुलात्मा।।१०।।**

तावदेव देवदेवनामकीर्तीनमेवंविधामवस्थां गतस्य तस्य मुखतः समुपाकर्ण्य परिकलितपालनीयताधियो महनीयतरसुषमाभररमणीयविलोकनाः करचतुष्कनिष्कलितगदाशङ्खचक्रपङ्कजाः महामेरव इव नितम्बसमुल्लसितचामीकरद्युतिपीताम्बराः सत्काव्यसन्दर्भा इव महितगुणालङ्कारपरिभासुरा, वारयोषाजना इव मनोहराङ्गरागाः, रविकरौघा इव दोषावसानदृश्यमानाः मा भौषीरिति जलदघोषगम्भीरया गिरा करुणातरङ्गितैरपाङ्गपातैरपि तमतीव परिहर्षयन्तः परमपुरुषपारिषेदास्त्वरिततरमभिपेतुः। अनन्तरमन्तककिङ्करानपि तमधिगलं सम्पाश्य सम्प्रबृद्धामर्षमाकर्षतः समुपेत्य 'मैवं कुरुध्वम् अविलम्बमेवासुं विमुञ्चते' ति वदन्तः सत्वरमशरणैकबन्धवस्ते निरुन्धते स्म।।

**अथ रुद्धा हरिदूतैर्यमभृत्याः कलितविस्मयास्तरसा।**
**विरलेतरबहुमति तानेवमवोचन् गभीरया वाचा।।११।।**

**के वा यूयं नु देवा यदि पुनरुपदेवाः किमन्ये महान्तो**
**वेषाकारप्रकारः कथयति भवतां भव्यतां दिव्यरूपाम्।**

प्राणानेतस्य नानाविधदुरितवतो यातनां नेतुकामा-
नस्मान् कस्मादिदानीमरुधत च विभोर्धर्मराजस्य भृत्यान्॥१२॥

वैवस्वतस्य भृत्यानामेवं वाचं निशम्य ते।
इत्थमूचुर्हरेर्दूता मुग्धस्मेरमुखाम्बुजाः॥१३॥

पृच्छामः साधु युष्मानिदमखिलविदो धर्मराजम्य दूतान्
कीदृग्धर्मस्वरूपं कथयत विषयः कोऽपि दण्डस्य लोके।
सर्वे किन्त्वत्र दण्ड्या जगति पुनरमी किन्नु धर्मैकनिष्ठा
यद्वा किं ते नु सम्यग् दुरितमहरहो ये वितन्वन्ति कर्म॥१४॥

अथ तेऽपि यमदूता यथाश्रुतं प्रत्यवदन्-
आम्नायैर्विहितो हि यः स भुवने धर्मो निषिद्धोऽपरो
वेदास्तेऽपि जगत्त्रयीमयतनुर्देवः स नारायणः।
तस्मिन् धर्मपथे चरन्नविषयो दण्डस्य पुण्यप्रदे
योऽन्यस्मिन्निरतः स एव तु बुधैर्दण्ड्योऽत्र निर्णीयते॥१५॥

अयं हि पितरौ त्यज स्वगृहिणीं च साध्वीं पुना
रमस्व कुलटायुतो विरम धर्मतः स्वीयतः।
प्रपोषय कुटुम्बकं परधनं मुषाणान्वहं
विनिन्द्यमिति नाकरोत् किमिव कर्म कामातुरः॥१६॥

इत्थममुं पापकृतं शुद्ध्या रहितं च निष्कृताकरणात्।
यमनिकटं नेष्यामः शुध्यति दण्डैरसौ तत्र॥२७॥

ऊचुस्ते हरिपार्षदा गिरमिमामाकर्ण्य वैवस्वत-
प्रेष्याणामहह स्पृशत्यपि सभां याम्यामधर्मः क्रमात्।
अङ्के यस्य शिरो निधाय निखिलो लोकोऽपि शेते सुखं
तस्मिन् धर्मविपर्ययो यदि भवेत् का वा गतिर्देहिनाम्॥१८॥

ज्ञातं किं न भवद्भिरेतदिह भोः श्राव्यं हि वेदोदितः
प्रायश्चित्तविधिः पुनाति दुरितं नो वासनां नाशयेत्।

सेवा तस्य हरेर्जगत्त्रयपतेः कृन्तत्यपीमां द्वयी-
मेतस्यामपि नामकीर्तनमिदं धन्यं विनिर्णीयते॥१९॥

अपि च,

श्रीनामोच्चरणं हरेर्विजयते लोकद्वये पूजितो
धर्मो जन्मलताप्रसूनकलिका कालाहिविद्रावणम्।
बीजं मोक्षमहातरोरिह रुजां सिद्धौषधिः पाप्मनां
पञ्चानामपि निष्कृतं परमिदं दुष्कर्मसर्वङ्कषम्॥२०॥

अबुद्ध्यापि हरेर्नाम कीर्तितं पापहृद् भवेत्।
अग्निरज्ञानतः स्पृष्टः किमङ्गं न दहत्यसौ॥२१॥

तत्तादृक् खलु नाम विश्वमहितं नारायणेति स्वयं
योऽसावीरयति स्म सम्यगधुना नाकर्णि भोः किन्विदम्।
प्रायश्चित्तविधिः कृतोऽद्य समभूत् तस्मादनेनाञ्जसा
पापानामिह विद्यते ननु कथं वा दण्डनं पण्डिताः ॥२२॥

किमिह कथितैः स्फीतैरेतैर्वृथा शतजन्मभि-
र्विहितदुरितौघानामेषा कृता ननु निष्कृतिः।
अकृत सपदि त्रासाद्योऽसौ हरेः परिकीर्तनं
सुचरितवतामग्रे गण्यः कथं स हि दण्ड्यते॥२३॥

जायते यदि सन्देहो विषयेऽस्मिन् भवादृशाम्।
प्रष्टव्यो भवतां स्वामी धर्मसाक्षी स्वयं यमः॥२४॥

बन्धनहेतुं पाशं शिथिलीकृत्याथ मोक्षयित्वा ते।
अमुमिह ससुखं चक्रुः स्वामिगुणो दृश्यते हि भृत्येषु॥२५॥

श्रुत्वा वाचं तेषामित्थं
दृष्ट्वापूर्वं चैतद् वृत्तम्।
गत्वा वेगादेते दूताः
कालायेदं सर्वं प्रोचुः॥२६॥

ततश्च तस्मिन् कृतान्तपाशबन्धननिराकरणेन कृतार्थतामापाद्य बहुमानतुन्दिलमारचय्य वन्दनां विस्मयेन किमपि वक्तुकामे पाश्चात्तापेन तुच्छेतरभक्तिभारमनुष्ठीयमानैरखिलजगदीश्वरस्य चरणोपासनैरदसीयस्यान्तः करणशुद्धिमापादयितुम् अन्तर्धानमुपागता मुरारिपार्षदाः।

अजामिलोऽपि तदीयमिथोवचनजनितनिजचरितस्मृतिः बहुविधदुष्कृतभाजनमकृतनिष्कृतमात्मानमधिकतरं विनिन्दन् मुहुरपि दुरन्तया चिन्तया सन्तपन् पुराकृतस्य हरिभजनलेशस्य फलमेवेदमिति विमलया धिया समाकलय्य पुनरपि निस्सारितदोषायै तत्सेवायै स्पृहयन्नखिलदुरितभङ्गकारिणि गङ्गातीरे प्रकृतिपावनं किमपि देवसदनमासाद्य मृदुपवनसमुपनीतवीचिजालविसृमरशीकरनिकरासेकशुचितरे क्वचिदपि प्रदेशे समुपविश्य यथाविधि सम्यगासनमाबध्य विषयेभ्य इन्द्रियाणि समाहृत्य मन आत्मनि संयोज्य आत्मानमपि गुणैर्वियोज्य अविरलविसरदानन्दसान्द्रेऽनुभवात्मनि परे ब्रह्मणि योजयामास।

**एवं गतेषु समयेष्वथ केषुचित् तं**
**विज्ञाय योगविधुताखिलकर्मबन्धम्।**
**निश्शेषलोकमहनीयनिजानुभावाः**
**प्रादुर्बभूवुरथ ते हरिपार्षदेन्द्राः॥२७॥**

**दृष्ट्वा तान् परिहृष्टधीः कृतनतिर्नानाविधानां निजं**
**पापानां करणं शरीरममरस्रोतस्विनीपाथसि।**
**त्यक्त्वा तत्क्षणमेव देवनिकरैः पुष्पौघमावर्षति**
**शलाघ्यं विश्वजनैर्हरेः पुनरसौ सारूप्यमभ्येयिवान्॥२८॥**

**जीमूतश्यामलाभं विलसदरिगदाशङ्खपङ्केरुहाभि-**
**र्बाहाभिः शोभमानं कटितटविलसत्पीतचेलाभिरामम्।**
**सारूप्यं तं दधानं भगवदनुचराः स्वामिनस्ते प्रमोदा-**
**दारोप्यैनं विमानं त्वरिततरमनैषुः सकाशं मुरारेः॥२९॥**

तदनु च,

धर्मात्मा धर्मराजः स खलु निजभटैः साधु विज्ञापितं तं
श्रुत्वा वृत्तान्तमस्य द्रुतमथ निखिलं वीक्ष्य भूयः स्वबुद्ध्या।
महात्म्यं विष्णुनाम्नामिदमनुकलयन् भक्तिपूर्णस्तदानीं
रुद्धामानन्दबाष्पैर्गिरमवददिमां श्रृण्वतां कर्णमाध्वीम्।।३०।।

हे भृत्याः संश्रृणुध्वं विधिहरपुरुहूतादयो वा न शक्ता
महात्म्यं यस्य बोद्धुं भवत इह यतो भुक्तिमुक्ती जनानाम्।
धर्मो येन प्रणीतः सकलशिवकरः शासिता शासकानां
योऽसौ विश्वैकसाक्षी जयति स जगतीमूलकन्दो मुकुन्दः।।३१।।

तस्यास्मिन्ननुचारिणस्त्रिभुवने सारूप्यमुद्राङ्किताः
संरक्षन्ति तदीयभक्तिमकरन्दासञ्जनात् सज्जनान्।
येभ्योऽहं च विशङ्कितोऽस्मि सततं तत्तादृशेष्वप्यसौ
दण्डस्तेषु विधीयते ह ह ह चेज्जायेत दण्ड्यो हि सः।।३२।।

एतत् पश्यत निष्कृतेषु महितं तन्नामसङ्कीर्तनं
प्राप्तो येन स पापवानपि पुनर्योगीन्द्रगम्यां गतिम्।
औचित्यात् करिणं विहाय स गवां भारो यथा हार्यते
प्रायश्चित्तविधिस्तथा निगदितश्चान्द्रायणादिः श्रुतौ।।३३।।

उक्तैरिह किं बहुभिः संक्षिप्य ग्राह्यमेव कथयामि।
स्वप्नेऽपि विष्णुभक्ता दण्डं नार्हन्त्यमी पुनर्वन्द्याः।।३४।।

ततश्च तत्समयविनिस्सृतमुरारिनामाक्षरनिराकृतनिखिलकल्मषस्यापि तस्य दण्ड्यतां परिकल्पयतां निजपरिजनानामघं प्रशिशमयिषुरन्तरा तमेव भगवन्तमिमां भारतीमीरयामास-

अमीभिर्मद्भृत्यैरहह जडताग्रस्तमतिभिः
जने तस्मिन्नेनः सपदि विहितं यद् विधिबलात्।
इदं निश्शेषं तत् खलु निखिलसाक्षी स सहतां
जगन्नाथस्तस्मै नम इह परस्मै भगवते।।३५।।

वचनमखिलमेतत् स्वामिनो माननीयं
निजहृदि कलयन्तो दर्शितैकान्तधर्मम्।
मुरहरचरणाम्भोजन्मसेवापरेषु
स्थिरतरबहुमाना याम्यभृत्या बभूवुः॥३६॥

कृत्वा शङ्कासमेतानिति स यमभटान् विष्णुभक्तेष्वजस्रं
महात्म्यं तस्य नाम्नामपि निजचरितैर्बोधयन् देहभाजाम्।
आनन्दानां निधानं मुनिजनसुलभं स्थानमावृत्तिहीनं
विप्रोऽसौ भूरिपुण्यस्त्रिजगति महितं प्राप्य देदीप्यते स्म॥३७॥

इति अजामिलमोक्षप्रबन्धः समाप्तः।

# स्यमन्तकप्रबन्धः

मध्ये पाथोनिधानं महितमणिमयूखावलीसङ्करोत्थै-
मर्हिन्द्रैश्चापचक्रैरलमखिलदिशां मण्डलं मण्डयन्ती।
लक्ष्मीकान्तेन साक्षाद्यदुकुलपतिना निर्मिता द्वारकेति
प्रख्याता विश्वचक्रे विलसति विपुला राजधानी यदूनाम्॥१॥

तस्मिन् पुराणपुरुषेण पुरे चिराय
नारायणेन विधिवत् परिपाल्यमाने।
कृष्णस्य पादसरसीरुहमत्तभृङ्गः
सत्राजिदित्युदलसत् किल यादवेन्द्रः॥२॥

स खलु विमलचेता देवदेवं स्वराश्वं
स्वरुपगमनमार्गं योगभाजां जनानाम्।
अखिलभुवनसर्गत्राणसंहारलीलां
दिनमनु विदधानं भानुमानर्च भक्त्या॥३॥

अथ तपोभिरमुष्य पृथग्विधै-
रतुलभक्तिपवित्रितचेतसः।
परमकारुणिको भगवान् रविः
प्रमुदितस्तदुपान्तमुपासदत्॥४॥

वत्स प्रसादसुमुखोहमयं मणिस्ते
भाराष्टकेन तुलितं तपनीयराशिम्।
आराधितः प्रतिदिनं वमतीत्यमुष्मै
दत्वा स्यमन्तकमथान्तरधत्त देवः॥५॥

आशास्यमन्तकपितुः प्रतिगृह्य भक्त्या
कान्तं स्यमन्तकमिति प्रथितं मणीन्द्रम्।
कान्त्या हृतान्धातमसं तमसौ स्वकण्ठे
बध्वा जगाम दिनरात्रभिदानभिज्ञः॥६॥

विलोक्य तं रत्नवरप्रदीप्तं
विनषृदृष्टिप्रसरा हि पौराः
विकर्तनोऽसविति मन्यमानां-
स्ससंभ्रमं प्रापुरुपेन्द्रगेहम्॥७

देवदेव देवकीनन्दन संक्रन्दनमुखसकलवृन्दारकवृन्दवन्दनीयचरणारविन्द भवन्तं विवन्दषुरयमभ्युपैति भुवनगर्भप्रसृत्वरदीपप्रभापोषः पूषा। एतदाकर्ण्य कर्णान्तलङ्घनजांघिकेन नयनाञ्चलेन किञ्चिदङ्कुरितमन्दहसितसुभगवदनचन्द्रः भगवानालोक्य नायं मित्रः सत्राजिदसौ ब्रध्नप्रसादलब्धमणिसमिद्धतेजोभारः पुरमायातीत्यमिदधानः कोमलकरारविन्दशोणिमसंपर्कपद्मरागीकृतस्फाटिकाक्षः पुनरपि चिक्रीड॥८॥

अथ नगरं प्रविश्य नरकमर्दनेन प्रार्थितमपि मणिं लोभगडुलमानसः अनाकलितभवत्तत्वोऽसौ सत्राजिन्नादात्॥९॥

भ्राता तस्य प्रसेनः प्रकटितमृगयाकौतुकोत्थः कदाचित्
साकं सैन्यैरदैन्यैस्त्रिभुवनमहितं रत्नमाबध्य कण्ठे।
आरूढस्सैन्धवाग्र्यं मणिवरसुषमापुञ्जकिञ्जल्कितााङ्गः
शाताग्रप्रासंभावितकरकमलः प्रविशत् काननान्तम्॥१०॥

कुर्वन् कान्तारदेशं वलयिनमखिलं वागुरामण्डलीभिः
दृप्यत्सेनाभटोद्गत्वरघननिनदैः क्षोभयन् सत्वजातम्।
बुक्कत्कौलेयकालीबहलकलकलाकर्णनात् धावमानं
मार्गं मार्गन् महात्मा समचरत वने घोटकेन प्रसेनः॥११॥

नदनु भृगयाकलकलाकर्णननिर्धूतनिद्राजृम्भितभीषणनयनो गिरिकुञ्जादुत्थाय चण्डतरैश्चपेटाघातैर्विदलितवनकरियूथो

रुधिरबिन्दुरूषितधवलसटाकुलसञ्छन्नेन वपुषा बिडम्बयन्निव सन्ध्यारागरूषितं शरदम्बुदं, अतिबहलकोपावेशविवशीकृतेन कठिनतरदम्भोलिखण्डघटितैरिव करालैर्दन्तपङ्क्तैरधिकभयङ्करेण मुहुर्मुहुरम्यन्तरविद-लितरसनाकन्दलितकान्तिरञ्जितपुरोभागतया परिवीतमिव निखिलवनकरिरुधिरपूरमुद्वमता भीषणेन मुखचक्रेणजिघित्सुरिव निखिलमपि वनतलं, ऊर्ध्ववक्रीकृतेन सकलमृगकुलोत्पातकेतुकल्पेन लांगूलेन करालितपश्चाद्भागः निर्दिलितहस्तिकुलमस्तकलग्नस्थूलमुक्ताफल-प्रकरदन्तुरितनखपञ्जरः पञ्चाननः स्यमन्तकप्रभापुञ्जसंच्छन्नमेनं महामिषमित्याशङ्क्य त्वरिततरमाढोक्य गाढतरैः करप्रहारैस्सतुरगमेनं निर्जघान॥१२॥

पञ्चास्यः साश्वमेनं विपिनभुवि गतं पञ्चतां प्रापयित्वा
हत्वा रत्नं च यातः कमलजनिसुतस्तत्सुतायै ददौ च।
सत्राजिन्निस्त्रपोऽसौ व्यसनजलनिधौ भग्नमूर्तिर्मुरारा-
वन्तश्शङ्काङ्कुरोऽभून्मणिरयममुना प्रर्थितो मे पुरैव॥१३॥

सत्राजित्तः प्राप्य शङ्काङ्कुरं तं
सस्त्रीबालास्तत्र पौराः क्रमेण।
कर्णे कर्णे वर्णयामासुरित्थं
निर्णीतर्फाः स्वस्वधीवृत्तितुल्यम्॥१४॥

ब्रह्मन् क्व गन्तासि समूढभारः
सान्दीपनिर्यत्र मुनिर्गुरुर्मे
सन्त्यत्र चोराः किमु नेह कृष्णः
ही ही वृतिः खादति सस्यजातम्॥१५॥

वाक्ये त्रैलोक्यनाथो दिशिदिशि सकलैरीरिते श्रोत्रयाते
विस्रंभं दुस्सहार्थे त्रिजगति सहसा संविधातुं स्वकीयैः।
सैन्यैराजन्यमान्यैरुदचलदधिकैर्जन्यदक्षैरदैन्यै-
र्मार्गं मार्गन् महात्मा शिव शिव मतिमान् येन यातः प्रसेनः॥१६॥

हर्यक्षेणास्तमेनं विपिनभुवि तमप्यृक्षराजेन कृष्णो
दृष्ट्वा तत्पादचिह्नं बिलमविशदवस्थाप्य साह्ये जनौघम्।
रत्नश्रेष्ठे च दृष्टे शिशुकरलसिते प्राप नादैस्समीपं
धात्री चुक्रोश धात्रीं गगनमपि तदा पूरयन्ती पतन्ती॥१७॥

कुप्यन् नक्तञ्चराधीश्वरभुजनिवहोत्मृपृनानाविधास्त्र-
श्रेणीघोरप्रहारव्रणकिणकठिनीभूतविस्तीर्णवक्षाः।
अद्रीन्द्रोदग्रवर्ष्मा मुखकुहरपरिस्पष्टदंष्ट्राकरालः
प्रापत् पन्थानमक्ष्णोरसुरविजयिनः तत्क्षणादृक्षराजः॥१८॥

मुष्टिप्रहारैश्च तलप्रहारै-
ररत्निघातैश्च नखाग्रघातैः।
तौ चक्रतुर्युद्धमसह्यरूपं
महाबलौ यादववानरेन्द्रौ॥१९॥

भगवन्मुष्टिपातेन निष्पिष्टापघनः क्षणात्।
पपात सहसा भूमौ जाम्बवान् क्षीणजीवितः॥२०॥

आकर्णितोऽसि विष्णुः
वृष्णिकुले भूमिभारहरणार्थम्।
अवतीर्णो यदुवंशे
देवक्यां कृष्णनामधेयस्त्वम्॥२१॥

अथ जाम्बवांस्तु निजापराधशमनाय
निजात्मजां जाम्बवतीं मणिना सह प्रादात्॥२२॥

स च बिलान्निर्गत्य पुरीं समाप्य सत्राजितं
सदसि समाहूय मणिं प्रादात्॥२३॥

सत्राजित्तनयां तन्वीं कृष्णाय कृतकिल्बिषे।
स्यमन्तकेन मणिना स्वयमुद्यम्य दत्तवान्॥२४॥

इत्थं मिथ्याभिशङ्कामयमयशःपङ्कमुत्साहतोयै-
र्देवः संक्षाल्य विश्वत्रयदुरितहरोदारमङ्गत्यकीर्तिः।
अन्यूनप्रेमलज्जामदनमधुरिमोल्लासिर्भिर्मानिनीनां
नेत्रैरापीयमानः सुचिरमरमत द्वारवत्यां मुकुन्दः॥२५॥

इति स्यमन्तकप्रबन्धः समाप्तः।

# शूर्पणखाप्रलापप्रबन्धः

( निरनुनासिकप्रबन्धः )

आक्रन्दकम्पितसभं पतिता प्रसर्प-
द्रक्तानतिस्फुटविकृत्तकरालगात्री।
सम्भ्रान्तयातुगणमध्यगमग्रजं सा
नासाक्षयान्निरनुनासिकमेवमूचे॥१॥

हा हा! राक्षसराज! दुष्परिभवग्रस्तस्य धिक् ते भुजा
विद्युज्जिह्वविपत्तिरेव सुकरा क्षुद्रप्रताप! त्वया।
ध्वस्तापत्रप! पश्य पश्य सकलैश्चक्षुर्भिरितादृशी
जाता कस्यचिदेव तापसशिशोः शस्त्रात् तवैव स्वसा॥२॥

अस्यास्तिष्ठतु वा विपादितपतेर्दुर्भ्रातृकाया विपत्
सोदर्यास्तव ये खरप्रभृतयो ये चापि रक्षोभटाः।
सर्वे तच्छरलीलया बत! कृता वैवस्वतोपासकाः
स्वस्थस्तिष्ठ तवापि भो जल! गले प्रायोऽस्य हेतिः पतेत्॥३॥

श्रोतव्यौ तत्त्वतस्तौ यदि तव कथये सा तयोर्गात्रशोभा
दृष्टा चेत् पुष्पचापादपसरति रतिः पुष्कराक्षादपि श्रीः।
भूयश्चावेहि ही ही! करजदलितदैत्येशवक्षाः स शौरि-
र्विश्वप्लोषी स रुद्रोऽप्यतिसुसह इव प्रस्तुते तत्प्रतापे॥४॥

द्वौ गोत्रे सप्तसप्तेरपि च दशरथात् ख्यातवृत्रारिसख्या-
ज्जातौ स्फीतप्रभावादथ कुशिकसुतादाप्तदिव्यास्त्रजालौ।

**अप्यादौ ताटकासृक्कबलरसवशाद्राक्षासास्वादलुब्धै-**
**रस्त्रैरेवादधाते क्रतुविहतिभिदस्तौ हि बाल्येऽपि लीलाः॥५॥**

**भूयश्चैतौ विदेहक्षितिपतिपुरवर्याभिगुप्ते पुरारे-**
**श्चापे दुर्वारतेजस्यपि च भृगुवरे स्पष्टदृष्टप्रभावौ।**
**यातौ राज्यादृषिभ्यः किल कृतशपथौ कापि घोरेऽद्य कार्ये**
**गोदावर्याश्च तीरक्षितिषु विहरतस्तापसौ चापभाजौ॥६॥**

अपि च-अपरा कापि परादभुतोद्भूतिरुपश्रोतव्या भवता। तत्र खलु तत्तादृगेतयोर्गात्रश्रीः प्रकाश्येत चेदखिला खल्वबलाजातिः शफरध्वजशरैः शकलीभवेदिति कृपाकुलितचेतसा वेधसा विरचिताटवीगूढवास-योस्तयोरग्रजस्य उदग्रवीर्यदुरासदस्य परिग्रहीभूता, दुर्विषहविषधरपरिगृहीतेव बालपटीरवल्लरी, जगदादितः प्रभृति प्रारब्धाया वधूवर्गसर्गकौशलशिक्षायाः फलभूतेव सरोजभुवः आकल्पभाविबहुतरतरलाक्षी सर्गार्थोपचितचारुत्वसार-सर्वस्वयोग इवोपपादिता, दरोद्गतशिरीषप्रसवकेसराग्रदेशस्यापि कठोरताप्रदायिभिः तदटवीपुष्पप्रवालजालकपेलवत्वसारैरिवैकत्रोपचितैः सर्वतोविसारिप्रभापूरपरिपोषकृतपरिवेषतया सुजातजातरूपद्रवरूप-तोयाधारदूरावगाढैरिवोपलक्ष्यैः अवयवैरेकैकैरेव व्यकृष्टसकललोकदृष्टिः, स्वारसिकदिव्यसौरभयोगादविरतधारितपारिजातप्रसवैरिव विश्लथीभावे चाशेषतिरोहितशरीरपश्चाद्भागैर्गात्रयष्टावपि जलधरैकदेशदृष्टतटिल्लता-प्रतीतिकारिभिः कुटिलवितताय‌ताकारतया तरलैवीचिभागलुलित-सूर्यसुतावारिपूरप्रतीकाशैः केशपाशैर्दिवापि दर्शितक्षपावतारा, शशिशेखरस्पर्धावता चित्तभुवा स्वाकल्पाय कल्पिते बालसितकर इवोल्लसिते फालदेशे विकस्वरकार्तस्वरकेतकीदले लुलितषट्पदावल्येव तरलकुरलावल्या प्रोल्लसिता, असितदृष्टिप्रभाप्रवाहप-रिसरपरिलोलद्वालकल्लोललेखालीलयोरीषद्वक्रितशक्रोपलशलाकातुलायोग्य-योश्चिल्लीलतयोः प्रकाशितरसभावैर्विलासलास्यैराह्लादितरसिकलोका, श्रोत्रोपशल्यवेल्लिततया श्रवः पूरकुवलयकलिकाप्रक्षेपस्य प्रसृतासितच्छायतया च कज्जलपरिष्कारस्य अवलोकविवशीकृत-

युवलोकहृदयतया प्रसवशरशरप्रहारप्रयासस्यापि गतार्थताकारिभिः स्वच्छतरकपोलच्छायासलिलोच्चलितशफरीविलासशीफरैः सहजव्रीला-रागव्यतिकरपारिप्लवैरक्षिप्रचारैः सविधविहारिवातायुपोतकेभ्यो वीक्षाचातुरी-रिवोपदिशती, श्रुतिभूपालुलितदिव्योपलपर्यस्तगभस्तिरेखावपातादालिखि-च्त्रिपत्रलेखाविवोपलक्ष्यौ अरूपीभवद्रतिपतिव्युपेक्षितादर्शवरविरचिताविव कपोलदेशौ प्रतिवेलप्रसृतकेलिहसितविलासैरुत्फुल्लदुल्लासावादधती, पीयूषसारसोदरस्य चाधरस्य परिपाटलरुचिप्रचयपरिचयात् कदाचिदप्यविरत-रागग्रहैरिव हृदयरागरूषितोदयदालापपीयूषपृषितराजिचारुभी रदकोरकैः केसरितास्यसरसीरुहा, अतिपृथुलोच्छ्रितकुचव्यपदेशोदयशैलशिखरदेशा-दीषदुत्पत्यावतस्थुषस्तुषारकरादिवाविगतरागोल्लासाद्वक्त्रदेशादतिबहलतया विगलता ललितगलपदव्याभिपत्य परस्पराभिहतावस्थितकुचयुगस्थल-प्रतिरोधाद् द्वेधा भवता पौष्पेषवरससुधास्रोतसेव विशदकररुहरुचिधारापूरविलसदाकलितकरतलच्छलरक्तसरोजश्रीभाजा भुजयुगलश्रिया प्रत्यग्रप्रत्युत्थितहाटकविटपायाः कल्पलतायाः अप्यल्पतादात्री, त्रपावशप्रतिपदप्रह्वीभवदास्यसरसिजगलिते विफलीकृतधवलस्रिचय- हारपटीरालेपसितहसितद्युतिपूरे बिसवलयधियेवोपयातौ अधरद्युतिजालबालातपयोगादविरतघटितौ चक्रवाकाविव चारुतरवक्त्रवारिरुहस्वैरावलोककौतुकादिव भृशतरोद्गतिभाजौ सुवृत्तावप्यौद्धत्यातिभारपीडितकृशतरोदरदेशाकरोजकल-शावतिकृच्छ्रादेवाविभ्रती, स्वतो दुर्बलतया बलिभिरुपरुद्धतया चातिदयाविषयोदरदेशा, पादापदेश पाथोजग्रहप्रसारि-तकरिवरकराकररस्यातिस्थवीयसोऽप्यूरुयुगलस्य दुरुद्वहगौरतया परिहि-तवल्कलपरिपाटलद्युतियोगादशेषयुवलोकचित्तरागोपश्लिष्टयेव रक्तोत्पल-पलाशपूरस्थगितविशालसैकतदेशदेशीयया असदृशता- दृशवासोव्यासक्तयापि सर्वप्रकारहृद्यतयाकारस्य परार्ध्यकौशेयपरिवीतयेव विराजितया कटितटवीथ्या सर्गावसरे सरोजवसतेरपि दतचित्तविक्षोभा, दुश्चरदेशचारकलेशप्रयोक्त्रे विधात्रे रुष्टयेवातिरक्तया तत्रत्यतरुवर- प्रत्यग्रपतितबालकिसलयेभ्यो दुरवबोधविशेषया अटवीदेशदुर्लभेऽपि लाक्षारसे स्वरुचिभिरेव

विरचिततदालेपकृत्यया पादपयोजयुगल्या कृतोटजाजिरप्रचारसाहसा, चर्तुदशस्वपि विष्टपेष्ववदृष्टश्रुतत- त्तादृशरूपातिशया, सुरभिकाल इव विकसद्रसालसाक्षी, तापविभूतिरिव पाटलाभाधरा, प्रावृडिव सरसपयोधरोद्गतिः, शरदिव दर्शितसप्तच्छदगतिः, प्रालेयवेलेव स्वच्छतुषारद्युतिप्रभास्या, शिशिरश्रीरिव तपस्याहितस्थितिः वाग्देवतयेव कलधौतगौराभा वल्लकीकलस्वरसरसा च, श्रीरिव करविधूतसरोरुहा असितद्युतिकेशवासिता च, गिरिसुतेव गृहीतसतीचरिता गिरीशलालितकुचा च, पदकलिततुलाकोटिरपि तुलारहितगात्री, उदरदर्शितासद्भावापि प्रकाशितसद्वृत्ता, भुजगवलयभूंषितापि क्रूरसत्वभीरुतरा, गलद्युतिविलसितापि विगलत्प्रभापूरा, अधरोल्लसितापि धरातलैकविभूषा, ललितबालाभिख्यापि उपारूढयुवतिभावा, चक्षुःफलपङ्क्तिरिव विश्वस्व, विश्वविक्षोभसिद्धविद्येव पुष्पसायकस्य, अधिदेवतेवाद्यरसस्य, दृष्टिगोचरगतेव तृतीयपुरुषार्थसारकला, प्राज्यतरप्राच्यसुकृतपरिपाकसुलभा सीतेति कापि कातराक्षी वीक्षिता।।

अनुनासिकरहितानि
व्यतनोदेतानि पद्यगद्यानि।
नारायणाभिधानो
द्विजपोतो रविनटेश्वरादेशात्।।७।।

इति शूर्पणखाप्रलापप्रबन्धः समाप्तः।

# राक्षसोत्पत्तिप्रबन्धः

जगत्सिसृक्षोर्जलजासनस्य
पार्श्वद्वयात् पर्वतसन्निकाशौ।
प्रहेतिहेतिव्यपदेशभाजौ
बभूवतुर्द्वौ रजनीचरेन्द्रौ॥१॥

तत्र प्रहेतिः किल शान्तचेता-
स्समस्तभोगेषु विमुक्तसङ्गः।
अपेतरागो मुनिभिर्निषेव्यं
तपोवनं वीतभयं विवेश॥२॥

हेतिः कालसहोदरीमुदवहत् प्रासूत सा पुत्रकं
विद्युत्केशमसावपि प्रियतमायुक्तोन्वहं सञ्चरन्।
पुत्रं सालकटङ्कटाविषयिनीं त्यक्त्वा सुकेशं वने
भर्त्रा साकमगादसौ शिववरात् प्राप्तः परं यौवनम्॥३॥

तदा महेशस्य वरप्रसादतस्सद्यः सुकेशोऽभवदात्तयौवनः।
स चोपयेमे तनुजां प्रजापतेर्दक्षस्य तां देववतीं मनोहराम्॥४॥

तस्मान्मालिसुमालिमाल्यवदुदाराख्यास्त्रयो राक्षसा
जातास्ते सुरलोकशिल्पिामभिगम्याभ्यर्थयन्ति स्म तम्।
हे त्वष्टः सुरलोककर्मनिपुणश्चेति प्रसिद्धो भवान्
लोके रम्यतरं करोतु भवनं चास्मादृशां रक्षसाम्॥५॥

त्वष्टा त्वष्टापदक्ष्माधरपृथुवरणां निर्ममे निर्मलाम्बु-
भ्राजद्वापीशतालंकृतविविधगृहारामरम्योपकण्ठाम्।

नाम्ना लङ्कामलं कामपि मणिभवनश्रेणिशोणीकृताशां
तान्तारीणाममीषामधिजलधि सुबेलाचले राजधानीम्॥६॥

ते वीरा राक्षसेन्द्रास्त्रिदशपुरवधूमण्डलोच्छुमराजत्
केशान्ताकृष्टलीलारसकुशलकराग्रोल्लसन्मण्डलाग्राः।
विश्वं वित्रासयन्तो निशिचरनिवहैः सेव्यमानास्समानाः
लङ्कां शङ्काविहीनास्ससुखमधिवसन्ति स्म दर्पाभिपूर्णाः॥७॥

तत् पुत्रभृत्यनिवहैश्शतकोटिसंख्यैः
क्रीडाविधूतशतकोटिधरानुभावैः।
वित्रासितं विगतधर्ममपेतशर्म
विश्वान्तरालमखिलं विवशं बभूव॥८॥

अथ दिविषदां वर्गः स्वर्गाच्चिरायनिराकृतः
सरसिजभुवा सार्धं शर्वानुवादपुरस्सरः।
विबुधविमतक्षेणीदर्पव्यपोहनपण्डितं
शरणमगमद्देवं क्षीरांबुधिक्षयमक्षयम्॥९॥

अथ भगवता भक्त्युद्रेकप्रसादितचेतसा
निजवधविधिं श्रुत्वा साक्षात् समाश्रुतमुद्धताः।
निशिचरवराः सद्यः कोपावलेपकषायिताः
सबलनिवहाः संग्रामाय त्रिविष्टपमभ्ययुः॥१०॥

अन्योन्यशस्त्रपरिकृत्तसुरासुरौघ-
गात्रक्षरद्रुधिररूषितविश्वचक्रः।
आसीदधित्रिदशलोकमशेषलोक-
विस्मापकस्तदनु युद्धमहो महीयान्॥११॥

चामीकराचलसमुज्वलचारुगात्र-
मास्थाय पक्षिवरमक्षतशक्तिभूमा।
संग्रामरङ्गभुवि सर्वसुरारिगर्व-
सर्वङ्कषः सरभसं हरिराविरासीत्॥१२॥

नीलाम्भोवाहमालानिरुपमसुषमाचोरमुद्दामराजद्
भूषारत्नांशुजालव्यतिकरशबलीभूतविश्वावकाशम्।
मौकन्दं लोककन्दं करसरसिरुहाग्रोल्लसत् शंखचक्रं
दृष्ट्वा दिव्यं वपुस्तद्रिपुकुलमखिलं नष्टसंज्ञं बभूव॥१३॥

अथ माल्यवदादयोऽचलस्थिरसारा युधि कूटयोधिनः
कुलिशाङ्कितपाणिमभ्ययुः सहसा वैरिबलार्दनं हरिम्॥१४॥

श्रोशार्ङ्गोन्मुक्तबाणैश्शकलितवपुषः कोपि निस्त्रिंशकृत्ताः
कौमोदक्या विशीर्णाः कबलितधृतयः शङ्खशब्दैस्तथान्ये।
केचिच्चक्रप्रहारक्षणहृतशिरसः केपि निस्त्रिंशकृत्ताः
किं वाग्भिर्यातुधाना बहुविधविपदं प्रापिता माधवेन॥१५॥

सक्रोधसंप्रेषितदृष्टिपातैर्विक्रोशयन्तं विबुधेन्द्रचक्रम्।
चक्रायुधश्चक्रनिकृत्तकण्ठं चक्रे तदा मालिनमाजिमध्ये॥१६॥

तदनु निहतशेषास्सत्वरं सत्वहीना
भयविगलितनानाशस्त्रतूणीशिरस्त्राः।
मधुरिपुशरजालैः पृष्ठतस्ताड्यमानाः
कथमपि रणरङ्गाद्दुद्रुवुर्यातुधानाः॥१७॥

भगवद्भयभारभग्नमानास्सहसा माल्यवदादियातुधानाः।
अपहाय निजां पुरी च लङ्कामविशन्नाशु रसातलं सशङ्काः॥१८॥

विद्राव्य संख्ये विबुधारिवीरान्मुद्रादरिद्राणबलानुभावाः।
भद्रावहो भद्रजुषां जनानां सद्रागयासीत् स्वकमेव धाम॥१९॥

मालिनं निहतं दृष्ट्वा माल्यवानतिदुःखितः।
पुत्रीदारसमायुक्तः पातालमगमत्तदा॥२०॥

अथ तामररारिभिर्विहीनां पितुरादाय निदेशमेकपिङ्गः।
प्रथमस्तनयः पुलस्त्यसूनोः प्रथितश्रीश्चिरमध्युवास लङ्काम्॥२१॥

अथ माल्यवांस्तु रसातलं प्रविश्य चिन्ताक्रान्तमानसश्चिरतरं परन्तपोऽपि स्वयन्तपः स्वनिकटे निजविषादविलुप्तचेतसमधोमुखीं स्थितां मनस्विनीं सन्नद्धयौवनां कन्यकां कैकसीं विलोक्य विनिर्गलद्बाष्पपूरपरिपूरितलोचनस्तामङ्के निधाय मूर्धन्युपाघ्राय सादरमित्थमवोचत्।।२२।।

वत्से वयं मुरविरोधिरथाङ्गधारा-
वित्रासिता बत रसातलमागता स्मः।
धिक् धिङ् निशाचरवरान्वयराजधानी
निश्शङ्कमैलिणिनापहृता च जाता।।२३।।

तद्गच्छ विश्वजनविश्वसनीयशीलं
क्षिप्रं प्रसादय च विश्रवसं मुनीन्द्रम्।
अश्रान्तविक्रमनयौजसमाप्नुहि त्वं
पुत्रं पुलस्त्यतनयाद्विनयाभिरामे।।२४।।

एतन्निशम्य मुदिता तमभिप्रणम्य
सा कैकसी तदनु विश्रवसं समेत्य।
आराधनेन समिदाहरणादिनासौ
तुष्टं चकार विकलङ्कमना मुनीन्द्रम्।।२५।।

त्वं मुदा मानवं कालं जेतारं जगतामिति।
पुत्रं देहि विभो मह्यं लङ्केशं दशदिङ्मुखम्।।२६।।

उदग्रकारुण्यगुणाम्बुराशेरनुग्रहादादिमुनीश्वरस्य।
परिग्रहीभूय दधार गर्भं समग्रसम्मोदरसा कुमारी।।२७।।

व्यथया सह नाकलोकभाजामभिमानेन समं निशाचराणाम्।
भुवनत्रयसाध्वसेन सार्धं स च गर्भः प्रतिजृम्भते स्म तस्याः।।२८।।

कल्पान्तोज्जृम्भमाणप्रतिभयजलदध्वानगम्भीरनादै-
र्वक्त्रैरत्युग्रदंष्ट्रारुचिधवलककुम्मण्डलैर्भीषणाङ्गः।
पुत्रोभूत्तत् प्रसादान्निशिचरदुहितुर्विश्वसंक्षोभभाजा-
मक्ष्णां दोष्णां च बिभ्रद्विपुलतरतनुर्विंशतिं विंशतिं च।।२९।।

क्षोणीचक्रं चकम्पे समजनि रजसा धूसरा व्योमवीथी
दिङ्मातङ्गा विनेदुर्निरवधिनिखिलास्तत्रस्वर्लोकपालाः।
इन्द्रः सिंहासनात् स्वात् सपदि विचलितो विश्वमासीद्विषण्णं
प्रापत् प्रीतिं महर्षिः किल कलहरुचिर्जायमाने दशास्ये॥३०॥

अन्योन्यालोकितौ तावसुरानुरगुरूमेषजूगोपयातौ
मेषे पूषा सपूषा विधुरपि ससुतस्तत्र मीनावसाने।
लग्ने भौमः कुलीरे शनिरपि मकरे तस्यवारेऽपि शून्यां
शून्यां कर्तु स्वजातिं समजनि जगतां रावणो धूमकेतुः॥३१॥

उच्चैर्नेंदुरकाण्ड एव मुराजिन्निर्वासिता राक्षसाः
शस्त्राशस्त्रविहारजन्यमुदियायान्योन्यमेषामपि।
आसीन्माल्यवतः सदा विमनसोप्याकस्मिकस्सम्मदो
वामाक्षिस्फुरणं च जातममरप्रद्वेषिवामभ्रुवाम्॥३२॥

तर्षार्तिव्यतिलेलिहानरसनारम्यैर्मुखैरष्टभिः
क्रन्दन्तीक्रमशः पपौ दशमुखी वीरस्य यस्यास्तनौ।
सेयं विश्रुतविश्ववीरजननीसीमन्तमुक्तामणि-
र्वांचां किं विषयी ब्रजन्निशिचरानन्दप्रदा कैकसी॥३३॥

अनुजोऽजनि कुम्भकर्ण नामा
भगिनी शूर्पणखेति तस्य कन्या।
अतिनिर्मलरम्यकीर्तितीर्थी-
कृतलोकत्रितयो विभीषणश्च॥३४॥

स्वकरसञ्चितमूलफलादिभि-
र्विदधतः प्रतिकारमथ क्षुधः
निशिचरा निरपायपराक्रमा
ववृधिरे वनसीमनि ते क्रमात्॥३५॥

अथैकदा पितुरवलोकनेच्छया
समागतं सकलसुरौघवन्दितम्।

महौजसं धनदमवेक्ष्य कैकसी
दशाननं तनयमसूययाभ्यधात्।।३६।।

एवं वत्स दशास्य पश्य भवतो वित्तेश्वरं भ्रातरं
सम्प्राप्तं सरसीरुहोद्भववरादौन्नत्यमत्यूर्जितम्।
एकोऽयं हि तवास्य च प्रसविता साक्षादृषिर्विश्रवाः
हा कष्टं मम भागधेयविरहात्त्वञ्चेदृशो वर्तसे।।३७।।

मातर्मा विधुरं विधेहि हृदयं नो चेद्दशास्याधुना
युक्तं भो भुजमण्डली ननु मया मुग्धं मुधा धार्यते।
अस्त्वस्माकमिमां तनुं तनुतरां प्लुष्ट्वा तपोवह्निना
लोकांस्त्रीनपि दैत्यमानवसुरान् ज्येष्यामि निस्संशयम्।।३८।।

तदनन्तरं दशकन्धरो मातुरन्तिकात् सन्धां विधाय संजातकोपस्फुरितारुणाधरसन्दष्टदंष्ट्राग्रज्वालाजाज्वल्यमानवदनजालो निजसोदराभ्यां कुम्भकर्णविभीषणाभ्यामुपेतस्तपसे धृतमानसः उत्तरगोकर्णाश्रमं प्रति प्रतिष्ठत।।३९।।

ततः पञ्चाग्निमध्यस्थो रावणः परवीरहा
तपश्चकार विपुलं प्रीतये स पिनाकिनः।।४०।।
अप्रसेदुषि तदा वृषध्वजे तत्र बह्निवलये भृशोज्ज्वले।
प्रस्तुवन् वदनपङ्कजाहुतिं चन्द्रहासमसिमादधे रुषा।।४१।।

अपि च किल सहस्रवत्सरान्ते
दशवदनो वदनेषु चैकमेकम्।
अपगतविचिकित्समब्दसंख्या
विविदिषयेव हुताशने जुहाव।।४२।।

निस्त्रिंशप्रतिबिम्बितोऽपि यदुरः कम्पो न वीरव्रत-
प्रौढिस्सेति न चन्द्रहासमधुनोत् कण्ठच्छिदाकर्मसु।
यो जुह्वन् स्वशिरांसिशङ्करपुरो हाकारवैरेण न-
स्वाहाकारमुदाजहार स दशग्रीवः कथं कथ्यते।।४३।।

वामैराकृष्य वेगात् प्रगुणितशिरसः पाणिभिः केशबन्धान्
सव्यैरव्याजशस्त्रप्रणयनपटुभिच्छिन्दता कण्ठपीठीः।
मन्वानस्यानुरूपामुपकरणविधिं प्रीतये चन्द्रमौले-
र्यस्यान्तस्तोषपोषं व्यदित दशमुखी विंशतिर्बाहवश्च॥४४॥

स्वेषूत्कृत्य हुतेषु मूर्धसु जवादन्तः स्फुटित्वा बहि-
र्व्याकीर्णेष्वलिकेषु दिव्यलिपिभिर्दृष्ट्वा च रामायणम्।
चित्तेनास्खलितेन यस्तदधिकं भूतेशमप्रीणय-
तस्मै कः प्रथमाय मानिषु महावीराय वैरायते॥४५॥

चित्रं चित्रमिदं हरो न पुरतः प्रत्यक्षतां याति भोः
कष्टा निर्जरसंहतेस्तु कुहना किं स्यादियं केवलम्।
अस्त्वस्माकमिमां तनुं तनुतरां प्लुष्टवा तपोवह्निा
लोकांस्त्रीनपि दैत्यदानवगणान्नेष्ये क्षणेन क्षयम्॥४६॥

अहं शिवः शिवः सर्व सोहं सर्वमहं शिवः।
शिवादन्यज्जगत्यस्मिन् न किञ्चित्प्रतिपद्यते॥४७॥

पंक्तिग्रीवे तदानीं निजदशमशिरच्छेदनायात्तशस्त्रे-
प्यन्तस्तापं भयं च प्रविविशुरशनैर्लोकपालास्समस्ताः।
किञ्च प्रोद्दामतत्साहसप्मुदितसंभ्रान्तसन्तोषलोल-
स्वान्तोन्तर्धासहिष्णुस्समजनि भगवान् पार्वतीप्राणनाथः॥४८॥

पृथ्वीचक्रं चकम्पे बलिसदनमभूज्जातमोहाहिजालं
ज्योतिर्वृन्दान्यभूवन् झटिति हतगतीन्यभ्रमन् गोत्रशैलाः।
सान्तस्तापा निलिम्पा मुनिकुलमरुदल्लोकपाला विषीदु-
च्छिन्दाने दिङ्मतङ्गा दशममपि शिरोप्यभ्यधावन् दशास्ये॥४९॥

अथ प्रथममेव तत्तपः प्रभावप्रमुदितान्तरात्मा अमर्त्यसार्थनिरोधेन अनक्षिगोचरं गतो भगवान् भूतनायकः पुनरपि तैरेवाभ्यर्थ्यमानस्त्रुटितकण्ठनालीनिरर्गलनिर्गलद् घुमुघुमायमानक्षतजक्षोदोक्षितपर्यन्तप्रदेशस्य उग्रतरतारकाप्रतिभयारुणनेत्रद्वितयनिर्यत् को-

पानलदन्दह्यमानरोदोविवरस्य कण्ठोपकण्ठविन्यस्ताकृपणकृपाणस्य प्राणानपि त्यक्तुमुद्यतस्य तस्य पुरस्तात् सत्वरं प्रादुर्बभूव।।५०।।

मामैवं साहसं कार्षीद्राक्षसाधिप दुष्करम्।
कण्ठादपनयाशु त्वं कृपाणं स्वकरादपि।।५१।।

हृतानि यानि शीर्षाणि पूर्वं तानि भवन्तु ते।
च्छन्दतः कुरु रूपं च मनसा यत्तवेप्सितम्।।५२।।

सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डल-
क्रीडाकृत्तपुनःप्ररूढशिरसोर्वीरस्य लिप्सोर्वरम्।
याच्ञादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
त्वं वृणिवत्थमितो मुखानि स दशग्रीवः कथं कथ्यते।।५३।।

मानाग्रेसरताममुष्य महतीं दृष्ट्वा पुराणां रिपौ
तुष्ट्या दत्तवति स्वयं त्रिजगतावध्यत्वमत्यादरात्।
मर्त्याद्वानरतो भयं न तु ममेत्याबद्धरोषोऽब्रवीत्
सोऽयं विष्टपविक्रमः सहि गिरां दूरे परं रावणः।।५४।।

निर्देवत्वमभीच्छन् वै निद्रावत्वमथाप्तवान्।
कुम्भकर्णस्तु दुष्टात्मा सरस्वत्यावशीकृतः।।५५।।
सर्वदा सर्वचेष्टा मे वाङ्मनःकायसम्भवाः
भवन्तु भगवन्नित्यं नारायणपरायणाः।।५६।।

लब्ध्वा मुग्धशशाङ्कचूडकृपया निःशेषविश्वोदय-
प्रध्वंसाय वरं करालकरवालोदग्रबाहाञ्चितः।
निद्राविष्णुनिषेवणात्मकवरोदारौ कनिष्ठौ मुहुः
धिक्कुर्वन् प्रथमानमानमहिमा लङ्कां ययौ रावणः।।५७।।

योद्धुं प्राप्ते निशिचरपतौ नाकवामालकानां
पातिव्रत्योन्मथनचतुरोच्चण्डदोर्दण्डषण्डे।
त्यक्त्वा लङ्कां स हि धनपतिः प्राप्य कैलासमस्मिन्
वासं चक्रे चकितहृदयः प्रीतियोगात् पुरारेः।।५८।।

तत्काले दशकन्धरोऽपि धनदत्यक्तां पुरीमुल्ललत्
सम्मोदार्णवमग्नकौणपगणैस्सार्धं विवेशोज्ज्वलाम्।
रोदो भाण्डविदारिवाद्यनिनदैरुद्धूतमोदामरा
भूयस्तस्य वराभिषेकमथ ते चक्रुर्मुदा राक्षसाः॥५९॥

अजातभङ्गस्य दशाननस्य भुजाटवीच्छायमुपाश्रयद्भिः।
संख्याविहीनैरथ यातुधानैर्लङ्कापुरी सा निबिडीबभूव॥६०॥

घोराकारपदातिमण्डितपुरोभागः क्वचिद्रावण-
स्सीमातीतविभूतिनिन्दितसुधर्मायाः पुरो निर्ययौ।
संजुह्वन् मृगयामखे मुखदरीकुण्डेषु चण्डान् मृगान्
गच्छन्नेव ददर्श पुण्यविभवान् प्राप्तं मयं कानने॥६१॥

दत्ताभूत् कालकेयाय रावणेनातिभीषणा।
स्वसा शूर्पणखा नाम विद्युज्जिह्वाय नामतः॥६२॥

विधिवत् परिणीय कन्यकां मयदत्तां दशकन्धरो मुदा।
अनया सह मन्मथोत्सवाननुभोक्तुं शनकैः प्रचक्रमे॥६३॥

पिबन् मधु मुखं चुम्बन्नालिङ्गन् गाढमालपन्।
मण्डोदर्या चिरं रेमे रावणः काममोहितः॥६४॥

विरोचनस्य दौहित्रीं सप्तज्वालेति विश्रुताम्।
तां कन्यां कुम्भकर्णाय ददौ हृष्टः स रावणः॥६५॥

गन्धर्वराजस्य सुतां शैलूषस्य महात्मनः।
सरमां नाम धर्मज्ञां लेभे भार्यां विभीषणः॥६६॥

लङ्कायां पुरि सुस्थितो दशमुखः पौलस्त्यदूतानन-
प्रोद्गच्छद्वधवाक्यचण्डपवनप्रोद्दिक्तरोषानलः।
कल्पान्तोद्धतवातधूतमुखरप्रोद्यत्तरङ्गाम्बुधि-
प्रख्यासंख्यनिशाचरौघसहितस्तद्वासभूमिं ययौ॥६७॥

तदनु चलितचित्तो वित्तनाथस्तदानीं
कलकलरवमाराद् राक्षसानां निशम्य।
रथतुरगकरीन्द्रभ्राजितैरात्मसैन्यै-
र्दशमुखमभिपेदे पुष्पकेणात्तचापः॥६८॥

ततो युद्धं समभवद्यक्षराक्षससैन्ययोः।
घोरं तुमुलनिर्ह्रादं नानाप्रहरणोद्यतम्॥६९॥

युद्धे तत्र भुजाग्रधूतविलसत् कौक्षेयकालोकन-
त्रासोद्भ्रान्तविधावमानपृतनासंघैर्विमुक्तान्तिकम्।
कृत्वा वित्तपतिं विमानमधिकं हृत्वा विमानं ततो
निश्शेषामरनिर्जयैककृतधीर्लङ्केश्वरो निर्ययौ॥७०॥

अथैनं निर्यान्तं प्रबलबलपादाहतिकला-
चलद्धूलीपालीकबलितहरिच्चक्रकुहरम्।
पुरारेरावासादुरुगरिमशालीकुलगिरि-
र्न्यरौत्सीत् कैलासो भुजबलपरीक्षोत्सुक इव॥७१॥

कैलासशैलकटकेषु महानिनादा
सा यातुधानपृतना नितरां विरेजे।
गंगाविभूषणजटान्तरचुम्बिगंगा-
संगाभिलाषचलदर्णवतुल्यधर्मा॥७२॥

सार्धं हरेण हरवल्लभया च देव्या
हेरम्बषणमुखवृषप्रथमप्रकीर्णम्।
दोर्दण्डमण्डलबलेन कुलाचलं तं
लङ्काभटः किल चलाचलमाततान॥७३॥

यस्मिन् कैलासशैलं तुलयति जगतीलंघनाजांधिकोद्य-
ज्ज्योतिस्थूलंभविष्णौ पवनबलचलन्नीलशैलप्रकाशे।
भीमत्यां हैमवत्यां चटुलतरतटिद्वल्लितौल्यं दधत्या-
मप्रीणान्मेरुधन्वा ह ह ह स हि गिरां दूरदूरे दशास्यः॥७४॥

बन्धोन्मुक्तघनालका सचकितव्यालोलनेत्रोत्पला
स्वेदाम्भःकणिकाभिरामवदना विस्रंसमानाम्बरा।
कम्पोदग्रपयोधरा च सुमनश्शल्यार्दिता तत्क्षणा-
दाश्लिष्यत् स्वयमेत्य मानविमुखी शैलात्मजा शङ्करम्।।७५।।

कोपप्रशमने भीतौ वियोगे पुनरागमे।
संभोगे च समाश्लेषो विशेषेण सुखावहः।।७६।।

समुत्क्षिपन् यः पृथिवीभृतां वरं वरप्रदानस्य चकार शूलिनः।
त्रसत्तुषाराद्रिसुतासंसंभ्रमस्वयंग्रहाश्लेषसुखेन निष्क्रयम्।।७७।।

अथ प्रसन्नो भगवान् महेश्वरो युगान्तविद्युत्तरलामितप्रभम्।
स चन्द्रहासाख्यमनल्पतेजसे कृपाणमस्मै वितितार रक्षसे।।७८।।

यस्माल्लोकत्रयास्त्वेते रावणेन विरावितः।
तस्मात्वं रावणो नाम नाम्ना लोके भविष्यसि।।७९।।

अथ दशवदनः प्रणम्य देवं त्रिजगति वैरिजनान् विजेतुकामः।
निरगमदथ तं जगाद देवी वरय वरं त्वमभीष्टसिद्धयेति।।८०।।

श्रुत्वा तद्वचनं रुषाकुलमना रक्षः पतिस्तत्क्षणात्
प्रोचे वीरगणाग्रणीः परमहं स्त्रीभ्यो वरं नो वृणे।
इत्थं तस्य वचो निशम्य सहसा लज्जानतास्यांबुजा
स्त्रीहेतोस्तव हानिरस्त्विति निगद्यान्तर्दधे चण्डिका।।८१।।

तस्मिन् काले स नन्दी धृतकपिवपुरस्याग्रतस्सन्निषण्णो
धीमन् मत्तो वरं त्वं वृणु दशवदनेत्याबभाषे मुधैव।
तच्छ्रुत्वा रुष्टचित्ते प्रहसति दशकण्ठेत्यकुण्ठाभिमाने
शप्त्वा शाखामृगात्ते भवतु विपदिति प्रद्रुतं विद्रुतोऽभूत्।।८२।।

गिरीशलब्धास्त्रवरः स रावणो
मदोद्धतः संयति चण्डविक्रमः।
जवेन गत्वोत्तरकोसलान् पुन-
र्जिगाय रोषादनरण्यभूमिपम्।।८३।।

तावद्युद्धाय बद्धोद्यतमतुलबलं राक्षसाधीशमुच्चै-
रुद्वीक्ष्योद्दामदंष्ट्रारुचिपरिलसितं सर्वगीर्वाणसंघाः।
सुत्रामश्रीदवैवस्वतवरुणमुखा भीतभीतं गतास्ते
त्यक्त्वात्मीयानशेषानपि शिखिसरटध्वांक्षहंसादिवेषाः॥८४॥

भीते याते सुरौघे तदनु नरपतिः क्रोधसंरक्तनेत्रः
किं किं जातं सुरौघप्रतिभयमिति दत्तेक्षणो दिङ्मुखेषु।
दृष्ट्वा तावद्दशास्यं करकलितशरासो रथप्र्याधिरूढो
वेगादागान्निहन्तुं यजनभयकरं वीरलोकावतंसः॥८५॥

दृप्यत्कल्पान्तरुद्रप्रतिभयवपुषं वीक्ष्य राजानमेनं
पौलस्त्यो नीतिशाली प्रमुदितहृदयः प्राह राजन् किमेतत्।
त्वां जेतुं कः समर्थस्त्रिजगति बलिनां धन्विनामग्रगण्यं
त्वत्सख्याकांक्षयाहं सविधमुपगतो नो पुनर्योद्धुकामः॥८६॥

ततो मरुत्तं तममेयवीर्यं
जित्वा बलौघैस्सहितो दशास्यः।
श्रुत्वा महर्षेः कलहप्रियस्य
वाचं निवासं प्रपयौ यमस्य॥८७॥

ततस्तदानीमखिलभुवनतलविख्यातवीर्यसञ्चयश्चण्डतरभुजदण्डमण्डितमण्डलाग्रखण्डितनिजकण्ठो दशकण्ठो विपक्षकुलविक्षोभणदक्षनिर्घोषबधिरितककुन्मुखैः प्रहर्सानकुम्भकुम्भकर्णेन्द्रजित् प्रमुखैर्यतुधानैर्विशेषवर्धितप्रभावो निरन्तरताड्यमान भैरवभेरीमद्दलकाहलादिवाद्यनिरतवाद्यघोषबधिरितहरिदन्तरालः संयमिनीं गत्वा ब्रह्महत्यासुरापानस्वर्णस्तेयगुरुतल्पगमनतत्संगिसंगप्रभृतिभिर्महापातककोटिभिस्समेतान् तापत्रयाभिभूतानखिलान् जनौघान् रौरवमहारौरवकालसूत्रसूचीमुखासपत्रवनवज्रकण्टकशल्मलीवैतरणीप्रभृतिषु अतीव घोरेषु यथार्हेषु नरकेषु निपतितानपरानपि जन्मजन्मान्तरनिजसुकृतसञ्चयैरमर्त्यावासजुषो विलोक्य निजभटानित्थमकथयत्॥८८॥

यथायथा सकलजगत्प्राणहर्तुः प्रेतभर्तुर्नियोगात्तत्किङ्करा एवं कुर्वन्ति तथा मद्वचनात् सर्वे यूयं सर्वान् व्यत्यास्यतेति। ततस्ते निशाचरास्तथाकुर्वन्।।८९।।

कार्तान्ताः परिचारका निशिचरश्रेणीशवृत्तं तदा
गत्वोचुस्समवर्तिने स तु निशम्योद्भूतरोषान्वितः।
वृत्तान्तं तमभूतपूर्वमपरं दोस्सक्तदण्डायुधः
प्रेतावासवतिर्निशाचरपतेरभ्याशमभ्याययौ।।९०।।

तत्काले दशकन्धरस्त्रिभुवनप्रख्यातवीर्योद्धतः
कालं दण्डधरं निरीक्ष्य सहसा क्रोधातिताम्रेक्षणः।
प्रायुक्तास्त्रवरं परेतपतये ब्राह्मं सदण्डं तथा
चास्मै तत्समराङ्कणे दिदिवतुस्तावस्त्रदण्डौ तयोः।।९१।।

अथ विज्ञाय भगवान् युद्धं तं नलिनासनः।
सूक्तिभिश्शमयामास द्वयोश्शमनरक्षसोः।।९२।।

स तं जित्वा दशग्रीवो यमं त्रिदशपुङ्गवम्।
ततो भोगवतीं प्राप्तः पुरीं वासुकिपालिताम्।।९३।।

अवगाह्य च भोगवतीमतुलगरलानलकीलजालकरालमुखान् कार्कोटकप्रमुखान् काकोदराधिनाथाननघैर्निजफणामणिनिकरैरेव करदाय-कानकरोत्; वशीचकार च निशातशरशकलितशरीरानधिसमरमभि-युञ्जानान्नानाजनपदाधिनाथान्नरलोकपालान्; जिगाय च जगज्जयपटहधोष-कोलाहलहल्लो हल तिरोहितमन्थाचलमथितमहोदधिगभीरिम्णा रणोत्सवनिसर्गोड्डामरेण शोणिताशनसैन्येन परिवृतस्सवेपितगणं समुदितरोषरूषितविंशतिनयनावलोकनचकितसहस्रनयनं सहस्रनयनम्।।९४।।

अशक्नुवन् सोढुमधीरलोचन-
स्सहस्ररश्मेरिव यस्य दर्शनम्।

प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यद् दिवसानि कौशिकः॥९५॥

मघोनस्तद्घोरं कुलिशमलसीकृत्य समरे
भुनक्ति स्वाराज्यं त्रिभुवनभटोयं दशमुखः।
श्रियो नानावासभ्रमणरमणीय चपलतां
मवच्छिद्य स्वस्मिन्नपि भुजवने पूरयति यः॥९६॥

इति राक्षसोत्पत्तिप्रबन्धः समाप्तः।

# दक्षयागप्रबन्धः

श्रीमत्कैलासशैले सकलगणचमूचक्रसम्पूर्णसानौ
सानन्दं पारिजातव्यतिकरसरसान् मानयन् मन्दवातान्।
प्रत्यग्रप्रेमहृद्यामनिशमनुसरन् दक्षजामिक्षुचाप-
क्रीडाभेदैरनैषीत् कमपि च समयं सोमलेखाकलापः॥१॥

पश्यन् वक्त्रं विनयमधुरोल्लासिमन्दाक्षकान्तं
मन्दं मृद्नन्नुरसिजयुगं पाणिना शोणभासा।
आकूतानां शतमपि वदन्निङ्गितैर्मङ्गलाङ्ग्यां
तस्यामासीत् कुतुकपरवानिन्दुचूडः प्रियायाम्॥२॥

चामुण्डाविहृतैरतीव विकृतैर्विध्वस्ततालक्रमै-
र्नृत्तैर्भृङ्गिरिटेश्च भूतसदसां तैस्तैश्च लीलान्तरैः।
निर्मन्दाक्षमवेक्षितुं कुतुकवानीषद्विभिन्नस्मितं
चक्रे काल्यविजृम्भमाणकमलच्छायं स कान्ताननम्॥३॥

क्रमेण चोदित्वरतुहिनभानुमृदिततमस्तोमयेव शरत्समयशर्वर्या निर्मथितशैवलासङ्गनिर्मलसलिलयेव सरोरुहिण्या सततसंशीलनविशदयेव विद्यया परिगलितलज्जया सततमरूक्षया सकलकर्मदक्षया दाक्षायण्या सह मधुरतराणि समासेवमानो वनिताजनानुवर्तनदक्षिणस्त्रीक्षणः क्षणसमाः क्षणदा निनाय।

द्यूतैः शीतमयूखमालिकलिकाहारादिकेलीपणै-
र्गीतैर्नाकनितम्बिनीपरिषदामञ्चद्विपञ्चीलयैः।

सत्काव्यामृतवारिराशिलहरीनिर्मायनिर्मज्जनै-
र्लास्यैर्हास्यकथाभिरप्यनयतामेतौ सुखं वासरान्॥४॥

तस्मिन्नथ समये समयमनु समभ्यस्यमानयमनियमादिवशयद्भिः विश्वसृग्भिरामन्त्रितसकलगीर्वाणगणमहामुनिनिवहसिद्धसाध्यचारणदिभिः सम्भृतसकलसम्भारजातः संवत्सरादिभूते पवित्रतमे पक्षावसितितिचित्रायोगे कोऽपि सत्रयागः समारभ्यते स्म।

तत्र च समागतेषु सकलदैवतेषु सदः प्रघाणप्रतिष्ठितविशिष्टविष्टरविनिविष्टे त्रैविष्टपकुलोत्कृष्टे शिपिविष्टे परिपिष्टविमृष्टोपदिष्टसषडङ्गवेदनिरतिशयपरिचयपोपुष्यमाणवैदुष्यः शिष्यगणवाह्यमानभसितभस्त्रिकातपत्रपुस्तकादिसमस्तपदार्थः काम्यकर्मसतताम्रेडनधूम्रमानसः विभवाभिजात्यविद्यादिभि रनवद्यैरप्यपात्रसंयोगादवद्यतामुपगतैरनुसमयसमिन्धानाहन्तासमाक्रान्तस्वान्तः दान्तावमन्ता दम्भ इव सम्भृताङ्गः रजोगुण इव द्विजातिरूपः प्रजापतिरजात्मजो दक्षः प्रकटितप्रौढिमा समाढौकत।

आयान्तमालोक्य तमासनेभ्यः सद्यः समुत्तस्थुरशेषसभ्याः।
चित्तेन पश्यन् परमात्मरूपं रुद्रस्तु नौवाचलदासनात् स्वात्॥५॥

अप्रत्युत्थानभाजं सदसि दिविषदामग्रतः सन्निषण्णं
पश्यन् मात्सर्यरोषव्यतिकरमलिनीभूतचेता निकामम्।
सत्या भर्तारमत्युत्तमचरितनिधिं नित्यमत्यादरार्हं
दक्षो रूक्षाक्षरौघैरकृत विनिकृतं त्र्यक्षमक्षुद्रसारम्॥६॥

सन्तः शृण्वन्तु सर्वे मम वचनमिदं सङ्गता ये सभाया-
मन्तेवासी ममायं शिव इति गदितः केवलं नामधेयात्।

पुत्रीं मे दैवयोगाद् यदयमुदवहत् तादृशे मय्युपेते
प्रत्युत्थानाद्यमास्तामकृत न वचसाप्यर्हणं गर्हणीयः॥७॥

दिग्वासास्त्यक्तलज्जो विचरति सहितः प्रेतवेतालसङ्घैः
सन्ध्यायामन्धचेता नटति पितृवने श्लाघ्यमानः पिशाचैः।
किं वा वाचां प्रपञ्चैः सरसिजवसतेरुक्तिभिस्त्यक्तशङ्क
दत्ता मे कन्यकाभूदुपनिषदमलेवान्त्यजायान्तिमा सा॥८॥

सरसिजभवसारसेक्षणाभ्यां सहपठनेन समानतामुपेतः।
मखसदसि महीयसां समाजे कथमधितिष्ठतु विष्टरं कपाली॥९॥

इति बहुविधैः परुषप्रलापकाण्डैः पुरुषप्रकाण्डमवखण्डयन् पुण्डरीकयोनिजन्मा पण्डितम्मन्यो माहेश्वरं महिमानमजानानः प्रजापतिरध्वरमयमर्धचन्द्रावतंसमुद्धुरकोपरुद्धविवेकः सत्वरपद-मित्थमशपत्।

सत्राशनैः सह परैरनवद्यवृत्तैः सुत्राममित्रवरुणाग्निसमीरणाद्यैः।
अद्य प्रभृत्यनुचितेऽध्वरशालिकायां लब्धुं न भागमयमर्हति
दुर्हृदीशः॥१०॥

तदनु वृन्दारकसभायां वृन्दारकवृन्दारकस्य निन्दामिन्दुमौलेरसहमानः सहमानो नन्दी प्रतिभयमन्युवेगप्रचलत्प्रतीकः प्रतिशशाप।

ये निन्दन्ति भवं भवच्छिदममुं ये पक्षमेषां श्रिता-
स्ते सर्वेऽपि भवन्तु मूढमतयः क्रीडामृगा योषिताम्।

वृत्त्यै यज्ञकृतः प्रतिग्रहपराः स्वर्गोपभोगाग्रहा
मग्ना मोहमये महाजलनिधौ नित्यं निरालम्बनाः॥११॥

भृगमन्युविभिन्नात्मा भृगुः प्रत्यशपत् ततः।
भवन्तु पतिताः सर्वे शैवाः कापालिका इति॥१२॥

ततश्च दक्षपक्षपातिभिस्त्र्यक्षपक्षपातिभिश्च परस्परप्रयुज्यमा-नदुर्वचोविसरनिर्विवरीकृतायां सभायां सभूतसङ्घः किञ्चिदिव विमनायमानः पञ्चशरवैरी स्वनिलयं कैलासमाससाद दक्षोऽपि स्वक्षयम्।

तेऽपि विश्वसृजः सत्रं समाप्यावभृथाप्लुताः।
रजसा रहितात्मानो निजधामानि भेजिरे॥१३॥
वैरायमाणयोरेवमुभयोस्त्र्यक्षदक्षयोः।
अनेकैः प्रमितः प्रायादनेहा परिवत्सरैः॥१४॥

ततश्च सुष्ठुतरानुष्ठितवाजपेयतया परमेष्ठिना प्रजापतिगणपरमकाष्ठायां प्रतिष्ठापितः ब्रह्मवर्चसातिरेकेण पृष्ठतःकृतसकलब्रह्मिष्ठः अपमन्तुमवमन्तुमन्तकान्तकं न्यक्कृतसतीपरमेश्वरः सत्कृतपरदुहितृजामातृवर्गो भृग्वादिमुनिगणवितन्यमानर्त्विज्यो महत्तरं बृहस्पतिसवनामानमरुद्रभागमध्वरमनुष्ठातुमक्षतधामा दक्षो दीक्षाशालामविक्षत्।

वर्तमाने महति सत्रे तदवलोकनकुतूहलिनीनामम्बरचरनितम्बिनीनामाननादाकर्णितजनकगेहमहोत्सवा समुदीयमानतत्सम्भावनौत्सुक्यातिरेकविकसदमलवदनारविन्दा दक्षनन्दना चिन्तितवितरणचिन्तामणिमिन्दुचूडमित्यवादीत्।

अयि दयित महीयान् माननीयो जनानां
मम किल पितृगेहे वर्तते सप्ततन्तुः।
इति निगदितमाभिः सिद्धसीमन्तिनीनां
विततिभिरनुयाने बद्धकौतूहलाभिः॥१५॥

पश्यैताः परिवीतनव्यतनवः पादान्तिकालम्बिभि-
र्वासोभिर्वनिता विकस्वरमुखैर्यान्ति स्वकान्तैः समम्।
एतासां मणिकुण्डलोदितमहावृन्दैरमन्दोदयै-
र्मन्दीभूतनिजद्युतिर्दिवि दिवादीपायते भानुमान्॥१६॥

कापि याति दिवि पश्य कामिनी सौभगं स्फुटतरं विवृण्वती।
स्वीयकान्तकरपल्लवोल्लसत्तालवृन्तविनिवारितातपा॥१७॥

स्फीतं क्रतुं मुनिजनेन वितन्यमानं
जातादरौ च पितरौ सहजाः सकान्ताः।

आलोकितुं जगदधीश्वरजन्मभूमिं
यातुं त्वया सह कुतूहलिनी भवामि॥१८॥

सम्भूतिमन्दिरगतिः सकलाङ्गनानां
शम्भो विचिन्तय वरैर्ननु पूरणीया।
पद्मालयाहृदयकौतुकपूरणाय
पद्मेक्षणोवसति किं न पयःपयोधौ॥१९॥

स्वप्रियामिति मृदु प्रवादिनीमल्पहासलसदाननां सतीम्।
स प्रभुस्त्रिभुवनाधिवासिनामप्रसन्नवदनो वचोऽब्रवीत्॥२०॥

सत्रे विश्वसृजां समस्तदिविषन्मध्यस्थितं मामसौ
निर्दोषं यददंशयत् तव पिता दुर्वाक्यदर्वीकरैः।
कान्ते त्वामनुचिन्त्य शान्तिमयता स्वान्तेन सर्वं मया
क्षान्तं तत् स तु हन्त हन्त हतधीर्दम्भोद्धतो जृम्भते॥२१॥

आहूता न च साकमन्यदुहितृस्तोमेन सोमादिभि-
र्जामातृप्रवरैर्युतेन यजनेऽप्येतादृशे प्रस्तुते।
नीतिज्ञे निपुणं निरूपय मतं नैतन्ममेति स्थितं
तातस्याधिकवत्सलापि भवती कुत्स्यैव मत्संश्रयात्॥२२॥

सरोजपत्राक्षि गृहेऽपि पित्रोर्न रोचते मे गमनं भवत्याः।
निरादरेण स्वजनेन योगो निरूप्यमाणो मरणाद् गरीयान्॥२३॥

उद्यमं त्यज तदेनमुत्थितं मुग्धभाषिणि विचिन्तय स्वयम्।
उक्तमेतदतिलङ्घ्य यासि चेत् स्वस्ति ते न च भविष्यति ध्रुवम्॥२४॥

वाणीं प्राणसमाननात् समुदितां तां प्रागकर्णिता-
मेणाङ्कादिव कालकूटलहरीमभ्युद्गतां शृण्वती।

चेतोबिम्बिततातमन्दिरमखप्रारम्भकोलाहला
चासीत् सा सहसा विभिन्नहृदया द्वेधा हरप्रेयसी॥२५॥

प्रस्थानप्रतिषेधरोषकलुषैरास्राम्बुगर्भान्तरै-
विंध्यन्ती परिपाटलैः पशुपतिं नेत्रान्तवेत्राञ्चलैः।
मुक्त्वा तं तरुणेन्दुचूडमधिकप्रेमाणमात्मप्रियं
कृष्टा सा विधिना हतेन सुदृढं पर्याकुला निर्ययौ॥२६॥

एकाकिनीं प्ररुषितामथ तां प्रयान्तीं लोकैकनाथदयितामवलोकयन्तः।
जातत्वरं द्रुतगतामनुजग्मुरेनां भूतेशभृङ्गिरिटिभृङ्गिमुखा गणौघाः॥२७॥

आलीजनोऽप्यनुचचाल करान्तशुम्भत्-
केलीमयूरसरसीरुहशारिकाद्यः।
कालीमुखप्रमथयूथनितम्बिनीनां
पाली च पूरितदशाविवरा विरावैः॥२८॥

आरोप्यारूढशोभं वृषभपरिवृढं भूषितां भूषणौघै-
र्निन्युस्तां मन्युशालां त्रिपुरहरपरीवारसङ्घा विशङ्काः।
हस्तप्रान्तावसज्जड्डमरुडुमुडुमुध्वाननित्यानुषक्त-
स्पर्धानिस्तन्द्रनिर्यद्घनतरवदनध्वानरुद्धाखिलाशाः॥२९॥

ऋषभादवतीर्य दैवतौघैर्ऋषिसङ्घैरपि पूरितामुदारैः।
वृषभस्य समस्तदेवतानां वृषकेतोर्महिषी सभां प्रपेदे॥३०॥

दुहितरमभियान्तीं वीक्ष्य दक्षः सभायां
महितचरितराशेः प्रेयसीं चन्द्रमौलेः।
निजदुरितविपाकात् तामनिन्द्यां विनिन्दा-
समुदयपिशुनाभ्यामैक्षत स्वेक्षणाभ्याम्॥३१॥

न स्वागतोक्तिमकरोन्न ददौ च पाद्यं
नो विष्टरं च वितताार विभोः प्रियायै।
न्यक्काररोषपरुषैः परमक्षिपातै-
र्दक्षस्ततक्ष तनयामनयैकधामा॥३२॥

ततश्च सकलसतीकुलतिलकायमाना सती महादेवद्रोहमहापात-कमषीमलीमसमानसेन स्वजनकेन मात्राधिकप्रणयया मात्रा सादराभिरपिसोदरीभिरपरैरपि सुहृज्जनैः सबहुमानैरपि यजमानं भजमानैरनभिनन्द्यमाना माहेश्वरांशरहितं महाध्वरं च निर्वर्णयन्ती स्वान्तरुज्ज्वलन्तं स्वजनस्नेहसलिलसेकेन मन्युवह्निं यज्ञवाटमासेदुषी प्रज्ञादोषादज्ञातवन्तमपि रक्षापरा दाक्षायणी दीक्षितं दक्षमाचचक्षे।

श्रीमन्नञ्जलिरेष मूर्ध्नि घटिता तात त्वयालोक्यतां
मा मा रोषपरिप्लुतो भव जगत्क्षेमङ्करे शङ्करे।
मामालोक्य तपस्विनीमसुखिनीमन्योन्यवैराद् द्वयो-
र्जामातुः श्वशुरस्य च प्रतिदिनं प्रीतिः समुज्जृम्भताम्॥३३॥

सर्वेषां जगतां पतिं पशुपतिं न त्वं विजानासि चेत्
तत्त्वं तस्य मयोच्यते क्रतुगणः सर्वोऽपि शर्वात्मकः।
मुक्त्वा तं विधिवत् कृतोऽपि न फलं सूते क्रतुः प्रत्युत
प्रध्वंसं वितनोति पूर्वतपसां पापं च पाकोन्मुखम्॥३४॥

अध्वरं तदनुतिष्ठ साम्प्रतं
रुद्रभागसहितं यथापुरम्।
मद्वचः शृणु विमुञ्च मत्सरं
पुत्रिकासु ननु वत्सलास्मि ते॥३५॥

सतीमिति वदन्तीं तामतीव कुपितस्तदा।
निजां दुहितरं प्राह प्रजापतिरदान्तधीः॥३६॥

श्रौताचारबहिष्कृतस्तव पतिः स्तब्धाकृतिस्तामसो
नीचैरत्यशुचिः पिशाचनिचयैः साकं परिक्रीडते।
तत्सङ्गादवधीर्यसे दुहितरो धन्यास्त्वदन्या हि मे
सौम्यैर्याः समुपागताः समुचितैः सोमादिजामातृभिः॥३७॥

चेलं चर्मास्थिजालं स्रगशिवशवभस्माङ्गरागः श्मशानं
स्थानं यानं महोक्षः सहचरनिचयो भूतवेतालसङ्घः।

आकल्पा यस्य सर्पा विषमतिपरुषं जेमनं तामसोऽपि
व्यापारस्तस्य कापालिककुलतिलकस्याध्वरे कोऽधिकारः॥३८॥

उक्षा यज्ञपशुस्त्रिशूलमुचितो यूपः श्मशानस्थली
शीर्यत्केशकुशाचितानलवती शाला कपालाचिता।
अग्न्याधानकरोऽजिनाम्बरधरो मध्ये पिशाचर्त्विजां
नित्यापीडितसोम एष तव किं भर्ता न कर्ता क्रतोः॥३९॥

वारं वारं निकारं निजकमितुरथो शृण्वती कर्णरूक्षं
घोरामर्षातिरेकस्फुरदधरपुटा शोणशोणाक्षिकोणा।
दूरे निर्धूय ताते दृढपरिघटितं प्रेम तद्वाक्यवात-
व्यासङ्गाधूतरोषानिलभयदवपुर्वाचमूचे भवानी॥४०॥

लेभे यत्पदसेवयैव महितं चक्रं स चक्रायुधो
नित्यं यत्करजाद् बिभेति कमलावासोऽपि देवः स्वयम्।
अन्ये वह्निकृतान्तवासवमुखा यत्किङ्कराः शङ्करं
तं कोऽन्यः प्रतिकूलयेद् भवहरं देवं भवन्तं विना॥४१॥

विश्वव्यापि शिवस्वरूपमिति या निश्चित्य निःशेषतो
दृश्यं वस्तु नमस्करोति जगति प्रत्येकमत्यादरात्।
सा रुद्रोपनिषत् समस्तदुरितप्रध्वंससिद्धौषधि-
र्नाधीता किमधीतिनापि भवता निःशेषवेदागमे॥४२॥

यन्नाम द्व्यक्षरं तत् सकृदपि च गिरा सन्धितं चिन्तितं वा
पञ्चानां पातकानां सपदि वितनुते वञ्चनं सञ्चितानाम्।
तं देवं सर्वदेवैर्नतमुपनिषदावेद्यमाद्यं पुमांसं
किं त्वं निन्दावचोभिः स्पृशसि हतमते धिग् धिगन्धं भवन्तम्॥४३॥

धर्माधर्मविवेकमूढहृदयैर्धर्मध्वजैस्त्वादृशै-
रारब्धे शिवनिन्दनेऽपि सृणिभिर्विध्वस्तविद्याफलैः।
हस्ताभ्यामपिधाय कर्णयुगलीं धावेदशक्तस्ततः
शक्तश्चेत् तरसा निकृष्य रसनामामूलतः पाटयेत्॥४४॥

परमशिवविनिन्दापातकेनातिनिन्द्या-
ज्जनक तव शरीरादुद्गतं विग्रहं मे।
ज्वलति सपदि हुत्वा योगवह्नौ प्रपत्स्ये
पुनरपि भवपार्श्वं नूतना क्वापि जाता॥४५॥

इत्थमभिधाय बद्धनिश्चया निजतनुत्यागसाहसे सखीकराहृतकनकवालुकासलिलविहितचरणावनेजना मुनिव्रतमवलम्बमाना विनिमीलितनयनकमला परिमितेतरमहिमानं परमशिवनामानं परमात्मानमान्तरेण करणेनावलोकयन्ती स्वल्पीकृतकल्पलताविभ्रमाभ्यां पाणितलाभ्यामुरसि कलिताञ्जलिरध्वरशालिकायामुत्तराशाभिमुखी महीतल एवं महेश्वरी निषसाद।

ततश्च–

जितासना सा निजनाभिचक्रादुदानमुत्थाप्य पदक्रमेण।
शनैः शनैर्भ्रूयुगलान्तरालं प्रवेशयामास जगज्जनित्री॥४६॥
ततश्च वातानलधारणाबलात् प्रदीपिते योगमये हुताशने।
क्षणार्धमात्रेण जगाम भस्मतां तदीयमङ्गं जगदेकमङ्गलम्॥४७॥

शृङ्गाराद्वैतलक्ष्मीविहरणमणिरङ्गाङ्कणं पङ्कजश्री-
सङ्घातेनेव सङ्कल्पितममृतरसोसेचनेनेव सान्द्रम्।
अङ्के संस्थाप्य सम्भावितमखिलजगत्स्वामिना सोमचूडे-
नाङ्गं तद् योगवह्नौ ज्वलति सति सती नव्यहव्यं वितेने॥४८॥

केचिद् दक्षं निनिन्दुः कतिचिदुपरतां त्र्यक्षपत्नीं शशंसुः
केचिद् वाचंयमत्वं व्रतमुचितमिहेत्यालपन्तो विचेलुः।
अब्रह्मण्यं ब्रुवाणाः कतिचन कतिचिन्मुक्तहाहाविरावाः
केचिद् भीता बभूवुः परिषदि पुरुषा भाविनो भर्गरोषात्॥४९॥

अथ क्रुद्धाः सर्वे यजनयजमानौ विमथितुं
समुत्तस्थुः शम्भोरनुचरभटाः सम्भृतमदाः।

अकुण्ठैरारावैर्भरितहरिदन्ताः सरभसं
मुसृण्ठीचक्रादिप्रहरणगणोद्भासितभुजाः॥५०॥

पश्यन्नश्रान्तवेगां प्रमथकुलचमूमापतन्तीं समन्तात्
सत्रघ्नघ्नेन भीतो भृगुरथ यजुषा दक्षिणाग्नावहौषीत्।
उत्पेतुस्तत्प्रभावाद् यजनभयकृतां भीतिदाः कुण्डमध्या-
दुल्काहस्ताः सुघोराः सरभसमृभवो नाम सङ्घाः सुराणाम्॥

अर्द्यमानास्तु तैर्देवैरुद्धृतोल्मुकभीषणैः।
सत्रवाटाङ्कणात् सद्यो दुद्रुवू रुद्रपार्षदाः॥५२॥

कान्तामेव विचिन्तयन् प्ररुषितां यातां पितुर्मन्दिरं
तद्वार्ताश्रवणे चिरं कुतुकवान् कैलासशैले वसन्।
आयान्तं पुरतो ददर्श सहसा संफुल्लनेत्रत्रयो
देवः शारदनीरदाभसुषमं वीणाकरं नारदम्॥५३॥

परिपृष्टः प्रियावार्तां शिपिविष्टेन नारदः।
अपतुष्टिकरीमेनामतिकष्टामवर्णयत्॥५४॥

शृण्वन् कर्णाविषह्यां सुरमुनिवचसा तामशेषामवस्थां
रुद्रो रोषातिरेकप्रकटितविकटभ्रूकुटीभीषणास्यः।
उत्पीड्यैकां कपर्दाज्झटिति निजजटां प्राक्षिपद् भूतधात्र्यां
सद्यो विध्यण्डभाण्डस्फुटनपटुतराटोपघुष्ट्यट्टहासः॥५५॥

प्रक्षिप्तायाया जटायाः समजनि पुरुषः कोऽपि रोषातिरेकः
शम्भोः साक्षाद् वपुष्मानिव वदनगुहानिःसरत्सिंहनादः।
दृप्यत्कल्पान्तवह्निप्रतिभयसुमहाविग्रहः खड्गचक्रा-
द्युग्रानेकायुधौघस्फुरितभुजकुलापूरिताशावकाशः॥५६॥

पादान्ते पतितं तमन्तकरिपुः सप्रेममुत्थापय-
न्नित्थं वाचमुदाजहार शिरसि न्यस्य स्वहस्ताम्बुजम्।
दक्षं मारय साध्वरं मम गिरा त्वं वीरभद्राख्यया
विख्यातस्त्रिषु विष्टपेष्वपि बलिष्ठो मद्गणग्रामणीः॥५७॥

यास्यन्त्यमी च भवतः परिवारभूता
भूता भुजोद्धृतपरश्वधशक्तिशूलाः।
संक्षोभयाध्वरमपेतमदीयभागं
मङ्क्षु प्रयाहि जहि दक्षपशुं सपक्षम्॥५८॥

इत्यादिष्टः स्पृष्ट्वा तत्पादौ मौलिना सोऽयम्।
उत्थाय विरचिताञ्जलिरित्थमवादीत् प्रसादयन् पितरम्॥५९॥

शूलक्षेपं क्षिपामि क्षितिधरनिकरं दूरमालूनमूलं
शूलप्रोतं हरिष्ये नभसि समुदितामेष नक्षत्रमालाम्।
आशादन्तावलौघं व्यसुमनुकलये पाणिनैकेन पिष्ट्वा
नाशक्यं विद्यते मे जगति तव जगन्नायकस्य प्रसादात्॥६०॥

सहस्राक्षो रक्षां वहतु सह सर्वैः सुरगणैः
सहस्रं दक्षाणां भवतु च तपःशक्तिमहताम्।
अहं दक्षः शिक्षां विरचयितुमस्याध्वरविधे
र्महादेव स्वामिन्नयि तव कृपा किं न कुरुते॥६१॥

प्रमथितयूपचषालं प्रमृदितशालं गणैः क्षणेनैव।
विहतं विद्धि वितानं हतमपि दक्षं हतात्मानम्॥६२॥

इत्युदीरयन्नत्युदारभुजाभारभद्रो वीरभद्रो रुद्रानुचरवरिष्ठैर्निष्ठुरतराट्ट-हासभरितहरिदष्टकैर्दुष्टदमेनशिष्टभरणपरमेनिष्ठैरष्टभिर्महाभैरवैरपरैरपि कुम्भनिकुम्भकुम्भोदर भानुकम्पननन्दिकेशसुकेशादिभिः प्रमथप्रधानैः ससैन्यसन्नाहैरन्वीयमानः समुद्धतयुद्धपिशुनमद्दलमुरवमड्डुकादिमहातोद्य-धिमिन्धिमितसन्धुक्षितसुभटोत्साहः सत्रायमाणदक्षपक्ष्यसपत्राकरणाय-सकलगणप्रष्ठः प्रातिष्ठत।

कैलासाद् रुद्रसैन्ये विचलति चलितं दक्षदक्षेतराक्ष्णा
संजाते सैन्यरेणौ समजनि रजसा धूसरा सत्रशाला।
शैवानां सिंहनादे विसरति रुदितं विस्वराभिः शिवाभि-
र्भूयः केतावुदस्ते नभसि समुदितो नाशकृत् केतुरन्यः॥६३॥

निर्गता रुद्रविधादुग्रवेगा वरूथिनी।
तत्क्षणादेव सम्प्राप्ता दक्षयज्ञक्षमान्तिकम्॥६४॥

ततश्च–

बन्धुः कल्पान्तसिन्धुध्वनितपरिणतेरेष घोषः कुतस्त्यो
रन्ध्रं व्योम्नः पिधत्ते कपिशरुचिरसौ रेणुपूरः किमेतत्।
दृश्यन्ते केचिदेते प्रतिभयतनवो धिग् धिगित्यालपन्त-
श्चेलुः सम्भ्रान्तचिन्ताः सुरमुनिनिवहाः सत्रशालान्तराले॥६५॥

हा कष्टं ब्रह्मबन्धोरविनयजलधेरस्य दक्षस्य दोषात्-
सर्वेषामापदेषा नियतमुपगता कोपयोगात् पुरारेः।
यास्यामः कुत्र साकं शिशुभिरिति मुहुर्भीतिभाजो वदन्तो
धावन्ति स्म द्विजौघाः करगलितबृसीद-
ण्डिकाकुण्डिकाद्याः॥६६॥

अर्धप्राप्ताध्वरांशाः कतिचन कतिचित् कृत्स्नमुत्सृज्य भागं
त्यक्ताकल्पायुधाद्याः कतिचन कतिचित् संगृहीतान्यरूपाः।
उद्वीक्ष्योद्दामभीतिप्रसरपरवशाः प्रायशो रौद्ररूपं
रुद्रानीकं पुरस्तादहमहमिकया विद्रुता निर्जरौघाः॥६७॥

पर्याप्तो न समस्तलोकविलयप्रस्तावघस्रागमे
यत्प्राणाहुतिपूरणाय निखिलब्रह्माण्डपिण्डोत्करः।
त्र्यक्षं तं प्रतिकूलयन्नयमहो दक्षः स्वपक्ष्यैः समं
न क्षेमी भवितेति तत्र वनिताजल्पो जजृम्भेतराम्॥६८॥

इति बहुविधवाचि भीतिभाजि
भ्रमति जने यजनाजिरोपकण्ठे।
प्रमथततिरदृश्यताग्रभागे
प्रतिघभरप्रसरेण दुर्निरीक्षा॥६९॥

तदनु प्रथिताः प्रमथप्रथमाः पृथुलपदाहतिविचिलित- धरणीभरण-निपीडितफणिवरकुलगिरिदिक्करिकमठं निर्धावन्तः फणिवरपीवरभुजशि-

खरोद्धृतमुसलमुसृण्ठीशूलशतघ्नीपरशुकृपाणीपट्टसयष्टिप्रमुखमहायुधविधुतिषु विसरद्दहनकणोत्करदीपितदिक्काः सत्रं रक्षितुमत्रायातः कुत्र निलीनः सुत्रामासौ अन्तक किं नो जानीषे भवदन्तककिङ्करसङ्घानस्मान् आशापालः पाशधरः स च नाशं यातु चिराय दुरात्मा धनदस्त्वधुना विधनः कार्यस्तूर्णमुपेत्य विमृद्य कराभ्यां चूर्णीकुरुत दिवाकरचन्द्रौ वसवः सर्वे व्यसवः कार्याः विद्याधरततिरद्योच्छेद्या निःशेषयत च विश्वान् देवान् पितरः सुतरां विधुरास्त्याज्या दक्षपशो त्वं रक्षात्मानं भृगुवटुरधुना दक्षिणवह्नौ पुनरपि किं न जुहोति दुरात्मा रुद्रस्याहुतिभागमिदानीं कुत्र निधाय क्रियते सत्रं त्रिपुरहरस्य त्रिजगच्छ्लाघ्यां महिषीं द्रष्टुं वयमुपयाताः बहुविधमित्थं दुर्वचनोत्करनिर्विवरीकृतसकलदिगन्ताः सरभसमभिपत्याध्वरशालां विमृदितसकलपदार्थां चक्रुः। मेहनसलिलैराहवनीयाद्याग्निविशेषान् केचित् सिषिचुः। सङ्गतविप्रसतीनां कतिचन मङ्गलभूषणभङ्गमकुर्वन्।

ओदनतेमनभाजनसङ्घे ष्ठीवनमपरे तरसा चक्रुः। वटुपटलानां वलतां भीत्या चटुलचपेटानपरे तेनुः। सम्भ्रमभाजामतिथिगणानामम्बरहरणं कतिचन चक्रुः। अतिभयभाजं भगमथ वेगादपहृननयनं कतिचन चक्रुः। लुञ्छितसकलश्मश्रुकलापं तं च वितेनुर्भृगुमुनिमपरे। पूषणमनुचिभाषणभाजं विमृदितरदततिमपरे चक्रुः। किं बहुवाचा सम्प्रति फलमिह सत्रगृहान्तरदत्तमहत्तरसप्तमयूखशिखाभरदीपितभारलुपादिककीचकनिकर-स्फुटनप्रसरच्चटचटरटितप्रकटितभुजबलपरमाटोपा भस्ममयीं तामध्वरशालां घस्मरवीर्याः सपदि वितेनुः।

त्र्यक्षात्मभूरदयमुग्रबलो गृहीत्वा
दक्षं विपक्षमधिकक्षुभितान्तरात्मा।
तत्कण्ठखण्डनविधौ परमप्रयत्नं
चक्रे शशाक न च शस्त्रशतप्रहारैः॥७०॥

अक्षतगात्रं शस्त्रैर्दक्षमवेक्ष्यातिविस्मितस्य विभोः।
पशुसंज्ञपनविधानं पशुपतिसूनोर्मनस्यभूदुदितम्॥७१॥

दोर्यन्त्रान्तर्निरोधाधिकपरवशितं पातयित्वा धरित्र्यां
पादेनाक्रम्य वक्षः शिव शिव सुभृशं क्रोशतः क्रोधशाली।
पिष्ट्वा त्रुट्यत्सिरासन्ततिचटचटितध्वानमुत्कृत्य कण्ठं
सद्यो रुद्रात्मजन्मा तदथ रिपुशिरो दक्षिणाग्नावहौषीत्॥७२॥

इत्थं निर्वृत्य दक्षाध्वरमथनविधिं संयुतः स्वीयसैन्यैः
कैलासं प्राप्य शैलं पशुपतिपदयोर्द्वन्द्वमानम्य मूर्ध्ना।
वार्तामावेद्य कृत्स्नामभिमतदयिताहानिशोकेन दूतं
तातं वीतातिखेदं विपुलभुजमहावीरभद्रो वितेने॥७३॥

रुद्रानीकावलोकादधिकभयजुषो विद्रुता ये पुरस्तात्
ते सम्भूयाम्बुजाक्षद्रुहिणपरिवृताः साधु संमन्त्रितार्थाः।
वाचा विष्णोर्विरिञ्चं विनयभयनताश्चारयन्तः पुरस्तात्
प्रापुः कैलासशैलं पुरुषमपरुषं कर्तुकामास्त्रिणेत्रम्॥७४॥

स्रष्टा चतुर्मकुटकोटिभिरङ्घ्रिपीठं
स्पृष्ट्वा हरस्य चकितैः सह दैवतौघैः।
अर्घ्याभिरागमशिरोवचनावलीभिः
स्तुत्वा प्रसन्नमकरोत् प्रभवं दयायाः॥७५॥

आशुतोषोऽथ भगवानाशुशुक्षणिलोचनः।
वाचमूचे सुधाधारामाधुरीचातुरीसखीम्॥७६॥

रोषेणैव कृतं मखस्य मथनं सोऽपि प्रशान्तोऽधुना
तद् यज्ञः क्रियतां पुरेव विधिवज्जीवन्तु सर्वे मृताः।
हे ब्रह्मन्! भवतो हरेश्च मतमेवास्मन्मतं नापरं
मद्भागेन समन्विता विरहिता वा सन्तु सर्वाः क्रियाः॥७७॥

बस्तश्मश्रुर्भवतु स भृगुः पिष्टभागोऽस्तु पूषा
मित्रस्याक्ष्णा भजतु च भगो नेत्रकृत्यं समस्तम्।

दक्षो यज्ञे विशसितपशोराननेनाकबन्धो
भूयात् स्फायद्विनयमहिमा कर्मठो धर्ममार्गे॥७८॥

इत्थं वाचा पुरारेरधिकमधुरया वीतकम्पा निलिम्पाः
सद्यः सम्प्राप्य सत्रक्षितिमनुमिलिताः प्राङ्मृतैः प्राप्तजीवैः।
दत्त्वा रुद्रस्य भागं विधिवदवहिताः सत्रशेषं समाप्य
स्वस्थाः स्वं स्वं निवासं प्रययुरतिसुखः सोऽपि दक्षो बभूव॥७९॥

इति दक्षयागप्रबन्धः समाप्तः।

## त्रिपुरदहनप्रबन्धः

नीते पावकिनाथ दानववरे कालालयं तारके
तत्पुत्रास्तपसा सुदुश्चरतरेणाराध्य गौरीपतिम्।
हेमायोरजतात्मिकामपि ततो गेहत्रयीं कामगां
लब्ध्वा हन्त चतुर्दशानि भुवनान्यालोलयाञ्चक्रिरे॥१॥

विधिं साधिं शम्भुं भ्रमिणमलसं चानलमपां
पतिं भीतं रक्षश्शमनमपि संजातशमनौ।
सहस्राक्षं सास्रं मरुतमुरुतापं फणिपतिं
गुणैरूनं चक्रुर्धनदमधनं चापि दनुजाः॥२॥

चक्रे स्वस्सुन्दरीणां घनकुटिलमनोहारिधम्मिल्लभार-
प्रध्वंसः कल्पशाखीप्रमुखविटपिमूलातिभङ्गो वितेने।
देहे प्रत्युप्तनानाविधमणिनिकरप्रोद्यदच्छांशुजा-
लग्रस्ताशामण्डलीका दितिजपरिवृढैर्गेहपाली सुराणाम्॥३॥

तदानीं च यातुधानाधिपैर्बाधिता विबुधा वसुन्धरायां धारितधरासुररूपः प्रक्षीणमन्युमपि प्रबर्धितमन्युं गतमन्युं पुरोधसं च पुरोधाय सर्वैरपि निन्दितनरकनिकरमदृष्टपूर्वं कलिकालेनाप्रदर्शितमनङ्गेनाश्रुतपूर्वमधर्मेणादृत-भक्तवर्गमानम्रविबुधकुलमनालीढवेदबाह्यमास्वादितविश्ववेदं महत् समाजमिव सद्भिरुपशोभितं ग्रहगणमिव बुधोपेतं सत्यस्थानं सत्यस्थलमुपेत्य आगमनिगमनिस्सरणनिर्घोषबधिरितदिशामुखाय चतुर्मुखाय निजामापाद-मावेदयांचक्रुः॥४॥

ततो धाता सुरैस्सार्धं प्राप्य विष्णुमवेदयत्।
सोऽपि सर्वैर्वृतो देवैः कैलासं समुपागमत्॥५॥

कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन।
आलोकमात्रेण सुरानशेषन् सम्भावयामास यथाप्रधानम्॥६॥

कीर्तिः शारदपूर्णचन्द्रसदृशी सर्वङ्कषोदित्वरं
शौर्यं कामगमं च मन्दिरवरं जन्मापि वंशेऽमले।
भक्तित्वय्यनपायिनी च सकलं तत्साधु तेषां पुन-
र्नोचेध्यक्ष्यति मामकीनवचनोपन्यासदावानलः॥७॥

हे गीर्वाणा विषादं विजहत परिजानीत कार्यं कृतं वो
धानुष्कः शम्भुरद्रिर्धनुरिपुरपरः कोऽपि मौर्वी फणीन्द्रः।
वेदा वाहाः विधिः सारथिरथधरणिस्यन्दनस्तत्र कार्यः
चक्रे पीयूषधामा द्युमणिरपि ततो यूथमग्रेसराश्च॥८॥

मायी मायामयं शास्त्रं ग्रन्थं षोडशलक्षणम्।
श्रौतस्मार्तविरुद्धं च वर्णाश्रमविवर्जितम्॥९॥

भगवन् पार्वतीकान्तः दैत्याः त्रिपुरवासिनः।
त्यक्त्त्वा त्रैलोक्यनाथं त्वां पाषण्डाः पर्यवस्थिताः॥१०॥

सुमेरोरभवच्चापं ज्याबभूवाथ वासुकी।
पत्रं वायुर्मुखं वह्निः शरकाण्डं जनार्दनः॥११॥

एकबाणेन तं वीरः त्रिपुरं परमेश्वरः।
विजघ्ने सासुरगणं देवदेवो महेश्वरः॥१२॥

यस्य चक्रीकृते चापे स्वर्गपातालवासिनः।
चक्रुरन्योन्यसंलापं नमस्तस्मै पुरद्विषे॥१३॥

इति त्रिपुरदहनप्रबन्धः समाप्तः।

# तारकवधप्रबन्धः

अस्त्यस्तशत्रुत्रिदशोऽसुरेन्द्रः महाबलस्तारकनामधेयः।
सन्त्रस्तदेवेन्द्रकिरीटकोटिसंघृष्टपादो नियतं नितान्तम्॥१॥

तदानीं तेन यातुधानाधिपेन बाधिता विबुधा वसुन्धरायां धारितधरासुररूपाः प्रवर्धितमन्युं शतमन्युं पुरोधसं च पुरोधाय सर्वैश्च निन्दितनरकनिकरं अदृष्टपूर्णं कलिकालेन अप्रदर्शितमनङ्गेन, अपरिचितमनृणेन, अश्रुतपूर्वमधर्मेण, आदृतभक्तवर्गं, आनम्रसकललोकमाश्रितविबुधसंघं, अनालीढवेदबाह्यम्, आस्वादितविश्ववेदं, महत्समाजमिव सद्भिरुपशोभितं, ग्रहसमूहमिव बुधोपेतं, धरणिमण्डलमिव द्विजेन्द्रमण्डितं, सत्यास्थानं सत्यस्थानमुपेत्य आगमानिगमनिस्सरणनिर्घोपबधिरितदिशामुखाय चतुर्मुखाय तारकासुरावलेपदुःखं सकलमावेदयामासुः॥२॥

पूर्वं मया दत्तवशासुरेन्द्रः जेतुं न शक्यो निखिलैरिदानीम्।
ते महेशस्य सुतादुदारात्तस्माद्यतध्वं हितमर्थमद्य॥३॥

ततस्सुरेन्द्रस्त्रिदशैरुपेतः वाचं समाकर्ण्य पयोजयोनेः।
तपः क्षयार्थं गिरिशस्य तूर्णं संप्रेषयामास च पुष्पबाणम्॥४॥

रत्या च सैन्यैस्सहितो मनोभूर्गत्वा महेशस्य महाश्रमं तम्।
पुनर्हिमाद्रेस्सुतयास्य चित्तं बाणेन साकं शिथिलीचकार॥५॥

हरस्तु-इत्यादि-अपूर्णतयैवोपलब्धः॥

# अष्टमीमहोत्सवप्रबन्धः

शैलेन्द्रकन्याकुचकुम्भशुम्भत्-
कस्तूरिकाकर्दमपिच्छिलानि।
व्याघ्रालयस्थानि भवन्तु भूत्यै-
तत्त्वावबोधद्रुमपल्लवानि॥१॥

वैदेहीपीनतुङ्गस्तनभरयुगलीगाढगाढाङ्कपाली-
केलीसम्मर्दमिश्रीकृतघुसृणलसच्चारुदोरन्तरालः।
कौसल्याभाग्यसीमा वलमथनमणिश्यामलः कोमलाङ्गः
कश्चित् सच्चिन्मधूलीरसनवलहरीस्यन्दगन्धः समिन्धे॥२॥

क्वामी वयं सरससूक्तिरसानभिज्ञाः
क्वासौ पुनः पुरहरस्य महोत्सवोऽपि।
नूनं तदत्र परिहास्यजनेषु लब्धुं
मूर्धाभिषेकमधुना परमुद्यताः स्मः॥३॥

अथवा कृतमात्ममान्द्यशङ्कापिशुनैर्मे वचनैरिह प्रयुक्तैः।
पुरवैरिचरित्रवर्णनायां ननु दोषोऽपि गुणायते जनानाम्॥४॥

सन्तः सन्तन्यमानामिह सपदि मया गद्यपद्यस्वरूपा-
मास्वाद्यास्वाद्य वाणीं गलदमृतरसां सन्तु सन्तुष्टचित्ताः।
फुल्लन्मल्लीलताया इव मृदुपवनस्पन्दनादोलिताया
मन्दं मन्दं स्रवन्तीं मधुरसलहरीं पुष्पतः षट्पदौघाः॥५॥

अस्ति प्रशस्ततरनिस्तुषकीर्तिजाल-
ज्योत्स्नाकरम्बितसमस्तदिगन्तरालः।

**विद्याधरः सरसकाव्यरसप्रवीणः**
**सङ्गीतदेशिक इति प्रथितस्त्रिलोक्याम्॥६॥**

स कदाचित् शृङ्गाररसतरङ्गिण्या सङ्गीतसुधारसपारावारपारीणया सकलकलाप्रवीणया वीणया विलसितकरपल्लवया सह वल्लभया पुरन्दरपुरं प्रति जगाम।

गत्वा च तत्र विचित्रतरवितानविलसितानल्पकल्पप्रसूनमालानिकरविशृङ्खलप्रसृमरबहलपरिमलविभवसुभगम्भावुकायां सभायां सिंहासनमध्यमध्यासीनस्य सकलसुरगणपरिवृतस्य विविधविलासिनीजनझणझणितमणिवलयावलीविलसितमृदुभुजलतान्दोलितबहलचामरनिकरभासुरपर्यन्तभागस्य भगवतः पुरुहूतस्य परिसरमुपसृत्य प्रत्यग्रगुणस्तबकितैरस्तोकरसभरितैः स्तुतिपदैस्तमस्तावीत्।

तदनु निखिलविष्टपनिरङ्कुशप्रसृमरशासनः पाकशासनः किञ्चिदिव समुदञ्चितमृदुहसितः सबहुमानमित्थमवोचत्–

**त्वज्जन्मना कथय किं नु कुलं पवित्रं**
**को वा कृती परिजहौ स्वमृणं पितृणाम्।**
**त्वन्नामधेयपदवीमधिरूढवन्ति**
**वर्णानि कानि वद सम्प्रति पुण्यवन्ति॥७॥**

तदनु 'भगवन्नहमस्मि निखिलविद्याधरचूडामणेः शृङ्गारकेतोः पुत्रः सङ्गीतदेशिको नाम विद्याधरकिशोरकः। तत्तद्देशावलोकनकुतूहलेन च समस्तेषु लोकेषु सञ्चरन्नत्रभवतश्चरणारविन्दमभिवन्दितुकामः पुनरत्र समुपागतोऽस्मि' इति विज्ञापितवति सङ्गीतदेशिके स पुरुहूतः पुनरपीदमवादीत्–

**कथय तदिह लोकेष्वस्ति चेदद्भुतं ते**
**किमपि विषयभूते नेत्रयोः श्रोत्रयोर्वा।**
**सुचिरमिह मदीयौ क्रीडतामद्य कर्णौ**
**मुहुरमृतपयोधौ मज्जनोन्मज्जनाभ्याम्॥८॥**

इत्युक्त्वा विरमति सुरपतौ 'महानय प्रसाद' इति तामाज्ञां शिरसा समुद्वहन् सङ्गीतदेशिकः कामपि कथां वक्तुं प्रक्रान्तवान्।

भगवन्! इतस्ततः स्वच्छन्दमेव सञ्चरता मया विविधानि सुबहूनि च दृष्टानि श्रुतानि चाद्‌भुतानि। किन्तु सनकसनन्दादिभिर्महर्षिभिः सह संवदतो नारदस्य मुखाद् यं व्याघ्रग्रामनाथस्य भगवतो भवानीवल्लभस्य अष्टमीमहोत्समश्रौषं तस्मादन्यन्न किञ्चिदद्‌भूततमं पश्यामि। पश्य.

**स मूर्धा किमु नो येन व्याघ्रग्रामेश्वरो नतः।**
**स पुमान् किं न यस्तस्य दृष्टवानष्टमीमहम्॥९॥**

तदनु 'तमेव तावदष्टमीमहोत्सवं वर्णयता त्वया विनोदनीया वयम्' इत्युक्तवति पुरन्दरे तेनापीत्थमभापि–

**वर्ण्यं पुण्यं मनसिजरिपोस्तच्चरित्रं विचित्रं**
**दिष्ट्या प्रष्टा समजनि भवान् निस्तुषेयं सभा च।**
**साध्वेवैतत् सकलमपटुः किन्त्वहं तस्य वक्ता**
**दोषो ह्येको व्रजति विलयं सन्निपाते गुणानाम्॥१०॥**

तथापि, अत्रभवता तावदवधानदानेनानुगृहीतव्योऽयं जनाः।

**अस्त्युत्तमं केरलभूमिभागे**
**क्षेत्रं महद् व्याघ्रपुराभिधानम्।**
**जुष्टं विशिष्टैरनिशं प्रशान्तैः**
**सङ्घैरसङ्ख्यैरवनीसुराणाम्॥११॥**

**यस्मिन्नजस्त्रमवनीसुरवेदघोषान्**
**संशृण्वतो निवसतः सुखमिन्दुमौलेः।**
**कैलासशैलसुखवासकथाप्रसङ्गो-**
**ऽप्याकाशपुष्पतुलनाविषयं जगाहे॥१२॥**

**अभ्रंलिहाग्रः पुरतः पुरारेर्विराजते यत्र स केतुदण्डः।**
**निजं पदाब्जं भजतां जनानां निश्रेणिकेव त्रिदिवाय गन्तुम्॥१३॥**

यत्र च वृत्रारिमणिशकलविशदवर्णया मण्डलितकुण्डलिगण-विरचितकुण्डलमण्डितकर्णया चण्डतरमण्डलाग्रमण्डितोद्दण्डभुजदण्डया अतिविकटमकुटतटविलसदचण्डभानुखण्डया मुण्डमालापण्डकृतमण्डनया अतिधवलरुचिरविलसदरालकरालदंष्ट्रायुगलभीपणवक्त्रया मधुमदाभोग-परिघूर्णमानवर्तुलारक्तनेत्रया अतिबहलरुधिरधारासिक्तगात्रया अरालधारालक-रालकरवालधाराविदारितदारिकासुरगलगलितबहलशोणितभरितपृथुलपिचण्डचण्डया अतिघोराट्टहासत्रुटितजगदण्डया सकलभयनिवारिण्या भक्तजनचित्तरङ्ग-विहारिण्या भवजलधितारिण्या निखिलदुरितहारिण्या त्रिशूलधारिण्या सकलासुरनाशकारिण्या चटुलकटाक्षाविगलदपारकारुण्यामृतधारिण्या सन्ततपरिपालितत्रिजगत्या भगवत्या भद्रकाल्या सततमलङ्क्रियते दक्षिणभागः।

**दिवानिशं तत्र शशाङ्कमौलेः प्रदक्षिणान्यादधतो जनौघाः।**
**अच्छिन्नरूपेण गतेन नित्यं वितन्वते जङ्गमसालशङ्काम्॥१४॥**

**कदाचित् तत्र तत्रत्यैर्विप्रैरप्रतिमात्मभिः।**
**आरभ्यते स्म सुमहानुत्सवो विश्वपावनः॥१५॥**

तथाहि तस्मिन्नेव क्षेत्रे तुलामतिक्रम्य वर्तमाने भगवति भानुमालिनि शुक्लद्वादश्यां तिथावतिकान्ते मध्याह्ने दिवसे क्रमेण प्रतीचीदिशमनुसरति दिवाकरे करतलकलितमार्जनीभिः अविरलकुरलभारपरिकलितमा-लतीदामोदरपरिगलदामोदलहरीवासितनिखिलाशामुखाभिः मृदुलगण्ड-मण्डलस्खलितविमलमणिकुण्डलाभिः भासुरमुखारविन्दाभिरतिपृथु-लकुचभरपरिखिन्दानमृदुलमध्यलताभिः मन्दहासुसुधानिष्यन्दैरितस्ततः सिञ्चन्तीभिः भगवदुपचारिकाभिर्विलासिनीभिर्निजनिजभवनाभ्यन्तरादुपागम्य परिमृष्टेपु तेपु तेपु प्रदेशेपु अतिबहलपरिमलसंभारसंभ्रान्तमत्ता-लिनिकरोत्तालकलकलकवलीकृतनिखिलदिगन्तरालेपु इतस्तो व्याकीर्णेपु कुसुमेपु अनवरतपरिगलितमधूलीरसास्वादनलोललोलम्बनिकुरुम्बचुम्बि-ताभिस्तोरणमालाभिरालम्बितेप्वम्बरमार्गेपु पूर्णकुम्भमणिदर्पणदीपिका-पूर्णपात्रादिभिर्निखिलैर्मङ्गलशतैरलङ्कृतेपु केतुमूलस्थलेपु

भगवन्निकेतनाभ्यन्तरादभ्युपागम्य तमेव केतुमूलं निजचरणविन्यासैर्धन्यतरमातन्वानेन यथाविधिविहितनिखिलपूजाविशेषेण केनापि भूसुराग्रेसरेण समुच्छ्रिता पश्यतामेव निखिलजनानामुत्तरलमत्तकाशिनीजनचटुलकटाक्षकान्तिकन्दलीसन्तानकुवलयमालालङ्कृता पताका।

ततश्च, अस्ताचलप्ररूढकङ्केलीप्रवालशङ्कावहेषु भाविवियोगखिन्दानकमलिनीकुचतटपरिमार्जनमिलितकुङ्कुमपङ्कसङ्गादिव नलिनीसङ्गकुपितदिनलक्ष्मीपादग्रहणमिश्रितलाक्षारसोन्मेलनादिव शोणिमानमुपगतेषु दिनकरस्य करेषु अभिसारिकाजनप्रमोदेन सह समुन्निपतति कोकलोकशोके तरणिकिरणैः सह तरुशिखरमधिरूढेषु चरणायुधेषु पश्चिमाशाचुम्बितनिजरमणदर्शनासहतयेव मीलन्मुखीषु पद्मिनीषु चक्रवाकमिथुनसुखासिकया सह अस्तमुपगते भगवति सहस्त्ररश्मौ योगिन्यामिव पीताम्बरधारिण्यामुपगतायां सन्ध्यायां सत्वरं प्रयान्त्या वासरश्रियः धम्मिल्लविगलितकुसुमेष्विव गगनाङ्कणे भासमानेषु तारकानिकरेषु विहाय धवलमम्बरं तिमिरनिकरच्छलादसितपटकृतावकुण्ठना समुपजगाम निशाभिसारिका।

ततश्च क्रमेण गतेषु केषुचिन्नाडिकान्तरेषु प्रत्यासन्नाभूत् प्रभातवेला।

**अनन्तरं दीपमहोत्सवाय निर्यास्यतो विश्वपतेस्तदानीम्।**
**निध्वाननिर्धूतसमस्तलोका प्रस्थानभेरी तरसा ररास॥१६॥**

तदनु तदाकर्णनजनितकुतूहलतरलितहृदयैः ससंभ्रमविरचितविविधमण्डनैरहमहमिकया समागच्छद्भिराबालवृद्धैर्महद्भिर्जनसमाजैश्चचालेव वसुन्धरा। ततश्च–

**उद्यन्मन्दस्मिताभिः सुललितपदविन्यासलीलाविलोल-**
**न्मञ्जीरद्वन्द्वमञ्जुस्वनमधुरसुधासारनिष्यन्दिनीभिः।**
**उत्तालोत्तुङ्गपीनस्तनभरपरिखिन्दानमध्याङ्कुराभि-**
**स्तत्रायातं नितम्बालसमृदुगतिभिर्वारसीमन्तिनीभिः॥१७॥**

**तदनु निखिलविद्यासारनाडिन्धमानां**
**सुभणितिगुणरत्नश्रेणिशाणोपलानाम्।**
**निखिलनिगमपरावारपारङ्गतानां**
**परिषदपि समागाद् व्याघ्रदेशद्विजानाम्॥१८॥**

ततश्च लोकालोकमहीधरवलयस्येव दावानलज्वालावलिस्तस्य देवायतनस्य समन्ततो जज्वाल दीपावलिः।

अनन्तरं च,

**आरादारुह्य तुङ्गं कमपि करिवरं चामरैस्तालवृन्तैः**
**शुम्भत्पर्यन्तभागो दिवमपि च सितैर्भासयन्नातपत्रैः।**
**निर्यन्निस्साणभेरीमुखरवमुखरीभूतनिश्शेषविश्वः**
**स्वामी विश्वैकनाथः सपदि स निजदीपोत्सवाय प्रतस्थे॥१९॥**

प्रस्थाय चायं निस्तन्द्रीभवदस्तोकविस्मयस्तिमितविलोचनैः चूडापदाबद्धकराञ्जलिपुटैः अविरलहर्षाश्रुवर्षजम्बालितधरणिमण्डलैरतिबहलपुलकसञ्चयकञ्चुकितकलेबरैः समस्तैर्भक्तजनैरनुगम्यमानः विविधविलासिनीजनकरकलितमणिदीपिकाभासुरपुरोगभागः सपदि दक्षिणाभिमुखश्चचाल।

तदनु संभ्रमचलितसकलराजन्यमण्डलीमकुटतटपरस्परसंघट्टनजनितरवेण प्रचलितदन्तावलनिकरकण्ठालङ्कृतघण्टानिकरस्य घणाघ्रणितेन निखिलकामिनीजनस्य मणिनूपुरझणत्कारेण भक्तजनवक्त्रगलितैश्च स्तोत्रैर्विचित्रैः सकलेन वाद्यघोषेण समजनि महान् कोलाहलः।

अथवा किं बहुना,

**कुर्वाण एव निखिलस्य तदा जनस्य**
**निर्वाणनिश्चलपुटानि विलोचनानि।**
**निश्शेषवाद्यपटलीरवबन्धुराणि**
**त्रीणि प्रदक्षिणगतानि चकार देवः॥२०॥**

ततश्च तस्य गन्धसिन्धुरस्य स्कन्धादवरुह्य निजायतनाभ्यन्तरं गतवति भगवति भवानीवल्लभे ससंभ्रमचलितचरणाघातविधूतधरणीतलनिरर्गलोद्गच्छदच्छिन्नधूलीपालीजम्बालीकृताम्बरसरिदम्बुजालैः विविधकोलाहलस्थगितजगत्कटाहैः तमेव दीपोत्सवं प्रशंसद्भिर्यथागतमगामि समस्तैर्जनसमाजैः।

अथवा किं बहुभिरुक्तैः,

**प्रातः प्रभूतवटमूलमहोत्सवानि**
**मध्याह्नबद्धधरणीविबुधाशनानि।**
**रात्रावपि प्रथितदीपमहोत्सवानि**
**यातान्यहो दश दिनानि मनोहराणि॥२१॥**

ततश्च प्राप्तायामष्टम्यां तिथौ क्वचिदनर्घमाणिक्यवैडूर्यवज्रप्रवालमुक्ताफलविद्रुमशिखरनिखिलरत्नविक्रयैकधुरन्धरैः अतिसूक्ष्मधवलतराम्बरनिर्मितोष्णीपपट्टैः अतिसुरभिपाटीरविरचितोर्ध्वपुण्ड्रमण्डितफालस्थलैः कर्णावलम्बितसुवर्णकुण्डलालग्नरत्नश्रेणीकिरणच्छुरणारुणकपोलमूलैः परिसरदङ्गुलीयकरत्नमयूखतल्लजोल्लसितकरपल्लवैः सर्वाङ्गीणप्रसृमरघनसारमृगमदादिबहलामोदविभ- वविशदव्याख्यातनिरतिशयसौख्यानुभूतिभिः प्रथमं दृष्टितुलयैव क्रेतारं जनं तुलयित्वा पश्चात् तदीप्सितं द्रविणं तुलामारोपयद्भिः 'अयि भद्र! इतस्तावदागम्यतां, अस्मादृशामप्यापणस्थली किमपि सनाथीक्रियतां, कथमनासीनो भवानस्मानाकुलयति, इष्टानि सर्वाण्यभिधीयन्तां, नह्यस्मादृशा युष्मादृशान् दृष्ट्वा लाभच्छेदान् गणयन्ति, स्वप्नेऽपि न वञ्चनां सञ्चिन्तयामः, मिथ्यावचनस्य कथामपि न जानीमः, अयमेव खल्वस्मादृशां परमो लाभः यद् भवादृशैः सह वाणिज्यकर्म क्रियते, न पुनर्द्रविणलाभः' इत्यादिभिरतिमधुरैर्वचनैः समस्तजनचित्तानि विलोभयद्भिः विविधधनभूयिष्ठैः श्रेष्ठिभिरधिष्ठितैकदेशेषु, क्वचिदानाभिलम्बिश्मश्रुभिर्विकटतरलोमशदोरन्तरालैःअतिविरलमांसलगात्रैः आरक्तचिल्लीनेत्रैः मलिनतरवसनधारिभिः "अयि तन्तुधारिन्! इतस्तावदेहि, ब्रूहि

वेदवाक्यानि, कथय च सिद्धान्तरहस्यं, कैवल्यस्य कति पदानि, रक्तो वा श्वेतो वा भवति मोक्षः, क्व नु ते तच्चक्षुः येन परं ब्रह्म पश्यसि" इत्यादिनिन्दाकन्दलितैर्वचनैः वैदिकजनान् परिहसद्भिः विरचितद्यूतपटताटङ्का-दिविविधवाणिज्यकर्मविशेषैः म्लेच्छजनैरलङ्कृतैकदेशेषु, क्वचिद्रणरणा-यमानमणिवलयावलीविलसितमृदुलकरकिसलयनखरनिकरविकीर्य-माणवेणीभरप्रविसरदतिबहलतरामोदसंभारसंभ्रान्तमधुकरझंकारश्रृङ्गारिता-शामुखाभिः उत्तरलकटाक्षविक्षेपलीलाश्रङ्खलितनिखिलजनचित्तवृत्तिभिः विपुलतरनितम्बभारगौरवमन्दमन्दचरणनलिनविन्यासानुकूलक्वणितमणिनूपुराभिः आपीवरपयोधरभारालसालसमध्याङ्कुराभिः चटुलतरनिटिलतलविन्य-स्तकस्तूरिकातिलकरमणीयाभिः, दन्तुराभिः कुन्तलेषु ललिताभिरलकेषु चटुलाभिर्निटिलस्थलीषु विलासमयीभिर्विलोकितेषु मधुराभिरधरामृतेषु शोणतराभिः पाणिपल्लवेषु अक्षीणाभिर्वक्षोरुहेषु परिम्लानाभिरवलग्नेषु विपुलाभिर्नितम्बबिम्बेषु चारुतराभिरूरुयुगलेषु अरुणाभिश्चरणयुगलेषु निजनिजवल्लभकरपल्लवविन्यस्तहस्ताम्बुजाभिः विविधवाणिज्य-दर्शनकुतूहलवशादितस्ततः सच्चरन्तीभिः वारविलासिनीभिः अङ्गीकृतश्रृङ्गारसर्वस्वेषु, क्वचिद् विद्रुमवैडूर्यप्रवालमुक्ताफ-लशिखरमाणिक्यमरतकपद्मरागवज्रवलभिदुपलादिभिः, क्वचिदङ्ग-दकङ्कणकुण्डलनूपुरमुक्ताहाराङ्गुलीयकादिभिर्भूषणविशेषैः, क्वचिच्छ-ङ्खताटङ्क . किङ्कणीद्यूतपटादिभिः, क्वचिद्रुद्राक्षभद्राक्षयोग-पट्टवराटिकादिभिः, क्वचिद्विविधकरण्डदर्पणपेटिकासूचिकादिभिः, क्वचिद् अगरुचन्दन- घनसारमृगमदादिभिः, क्वचित् पृथुकतण्डुलगुल-कादलनालिकेरादिभिर्विविधैर्द्रविणसञ्चयैः सञ्चितेषु, क्वचिदिन्द्रनील-मणिसुषमासन्तानैः कलिन्दकन्यकासलिलतरङ्गभङ्गीकुर्वाणेषु, क्वचिद् बहलविद्रुमनिकरप्रसरदरुणकिरणसन्दोहैः शोणनदविभ्रममिव बिभ्राणेषु, क्वचिद् धवलतरस्फटिकमयूखजालैः मन्दाकिनीसलिलाडम्बरमिव बिडम्बयत्सु, वासरेष्विव विराजद्द्रविणोल्लसितेषु, शशहरिणीयोगेष्विव समरतकेषु, गिरिसुताङ्गेष्विव रुद्राक्षलोभनीयेषु, सुकविभणितेष्विव प्रकटितनानार्थेषु, गुरुद्रविणसञ्चितेष्वपि अगुरुद्रविणसञ्चितेषु, वरमणीगणविराजितेष्वपि नवरमणीगणविराजितेषु, विकटेष्वपि

अनेककटकशोभितेषु आपणेषु, नानादिगन्तवास्तव्यानां नानावेषभूषणभाषाविशेषाणां जनानां सुचिरमजनि विविधद्रविणविक्रयक्रयकोलाहलः।

तदनु निखिलजनललाटन्तपातपे गगनमध्यमध्यारूढे भगवति भानुमालिनि स्नानभोजनादिकर्मप्रवृत्तेषु समस्तजनेषु, क्रमेण च मन्दायमानायामूष्मलतायां दिनकरकिरणानां, पञ्चषनाडिकावशेषोऽभूद् दिवसः।

ततश्च—

**कल्पान्तोज्जृम्भमाणप्रतिभयचतुरम्भोधिमध्यावघूर्ण-**
**द्वीचीनिध्वानघोरः प्रतिनिनदपरिध्वस्तरोदःकटाहः।**
**त्रस्यन्निश्शेषदिग्वारणविवशरवैर्दत्तहस्तावलम्बः**
**प्रस्थानोद्योगशंसी सपदि पुररिपोरुत्थितो वाद्यघोषः॥२२॥**

तदनु मदनमहाभाष्यसिद्धान्तसारप्रपञ्चपञ्चिकाभिः अतिनिबिडतरकुन्तलीभरनिरन्तरोद्गच्छदच्छिन्नबहलकान्तिकन्दलीसन्तानदन्तुरितनिखिलदिगन्तरालसमालोकनसञ्जातनीलजलदावलीशङ्काशङ्कुसमाकुलितसकलमरालमहिलावलीगलनालनिर्गलसमुद्गलद्बहलकलकलस्वनमुखरितनिखिलाशान्तरालाभिः उत्फुल्लवदनारविन्दमन्दमनिष्यन्दमानमधुरमन्दहसितमकरन्दबिन्दुकन्दलीसन्दोहसमास्वादनलोललोलम्बमालाविलसितचटुलकुटिलालकावलीसमुल्लसिताभिः अतिविपुलघनभारभरणालसालचङ्क्रमणायासजनितनिर्मलघर्माम्बुबिन्दुनिकुरुम्बकरम्बितललितललाटफलकाभिः प्रपञ्चितपञ्चबाणमदाभोगपरिघूर्णमानचञ्चलनयनाञ्चलवलनलीलानिगलितनिखिलजनचित्तमत्तमतङ्गजाभिःअत्युत्तुङ्गोद्वृत्तपयोधरद्वयभरणपरिम्लानभुग्नावलग्नाभिः श्रोणीमण्डलपरिस्फुरच्चारुकाञ्चनमयकाञ्चीस्यूतविविध मणिगणकिरणजालनिर्मिताखण्डलकोदण्डप्रकाण्डषण्डमण्डितदिङ्मण्डलीभिः अतिमृदुलचरणारविन्दविन्यासलीलाचलितमणिमञ्जीरयुगलमञ्जुलतरशिञ्जितमयामृतरसोत्सेचनोज्जृम्भमाणसकलकामिजनमनोगतमनोभवलताभिः धिक्क्रियाभिरिव शक्रपुरविलासिनीनाम् अवज्ञाभिरिव मनोज्ञवस्तुनां निन्दाकन्दलीभिरिव

सुन्दरीकुलस्य वञ्चनाभिरिव पञ्चबाणस्य स्त्रीवेषधारिणीभिरिव धोरणीभिर्नयनामृतस्य सञ्चारिणीभि (रिव) काञ्चनमयीभिः पाञ्चलिकाभिः कीर्तिभिरिव मूर्तिमतीभिर्मकरध्वजस्य, निगलश्रृङ्खलाभिरिव निखिलजनचित्तमतङ्गजानां, विलासवलभिभिरिव सुकुमारतायाः हर्म्यस्थलीभिरिव निर्मलतायाः विलासद्रुमवाटिकाभिः गुणमणिगणपेटिकाभिः मनसिजरसनाडिकाभिः चन्दनलताभिरिवभुजङ्गाश्लिष्टाभिः अटवीभिरिव पृथुलकुचशोभिताभिः उद्यानस्थलीभिरिव उल्लसत्तिलकाभिः वनराजिभिरिव विविधविटपालीपरिवृताभिः नन्दनस्थलीभिरिव सुरतरुचिताभिः भुजङ्गैरनुम्यमानाभिरपि मन्दगामिनीभिः, रम्भासमानाभिरप्यरम्भासमानाभिः कमपि युवानं कटाक्षविक्षपेण, कमपि वीटिकासमादानेन, निगुढपादाङ्गुष्ठनिपीडनने, कमपि कपटवीक्षितेन, कमपि वीटिकासमादानेन, कमपि वक्रोक्तिभिः, कमपि स्वागतवचनेन, कमपि सव्याजकुचमर्दनने, कमपि निजकृत्यनियोगानुग्रहेण, कमपि च भ्रूलतावलनलीलाभिरालोभन्तीभिः वेश्याङ्गनाभिः सविलासमुपगम्य सनाथीकृतेपु तेपु मणिकुट्टिमप्रदेशेपु, मदभरमन्थरगन्धसिन्धुरपङ्क्तिदन्तमुसलपरस्परसंघट्टनस्फुटितविस्फुलङ्ग-मयखद्योतनिकरविद्योतितनिखिलाशामुखेपु उद्दामतुरगखुरकु-द्दालनिकरोद्दलितकुम्भिनीतलसम्भ्रान्तरेणुजालधूसरितवासरमणिकिरणेषु अत्युद्भटभटनिवहभुजदण्डषण्डसमुदस्तकरालधारालकरवालसुणमाक-न्दलीकदम्बकबलिताम्बरमार्गेषु अतिबहलकोलाहलस्थगितजगत्कटाहेपु आन्ध्रकलिङ्गतुरुष्कतुण्डीरगौडघुर्घुरचोलनेपालप्रमुखेषु समागतेपु निखिलराजन्यलोकेपु, अन्येषु च नानादिगन्तवास्तव्येपु महत्सु सङ्गतेपु जनसमाजेषु निखिलनिगमपुण्डरीकषण्डचण्डभानुभिः अपारसा-हित्यजलधिलङ्घनजङ्घालैः सकलशास्त्रपारीणैः पुराणपरायणैः काव्यनाटकालङ्कारसङ्केतभूमिभिः पा(त) ञ्जलमतजलधिकुम्भसम्भवैः श्रुतिस्मृतिस- मुदितमहापथपथिकैः निखिलवेदान्तश्रवणदान्तस्वान्तैः सन्ततमन्तरुपलक्षितपरब्रह्मस्वरूपैः दुश्चरतपश्चरणनिश्चलबुद्धिभिः सुभणितिरत्नाकरैः विलासमन्दिरैरिवेन्दिरायाः क्रीडाशैलैरिव सकलविद्यानां कुलदैवतैरिव सकलकलानां सौधश्रृङ्गैरिव शृङ्गाररसस्य विपिनैरिव नानागमशलिभिः मधुकरैरिव नालीकसक्तचित्तैः नयशालिभिरपि

विनयशालिभिः सङ्ख्यावद्भिरपि असङ्ख्यैः व्याघ्रग्रामललामभूतैः समुपागतं तत्र कैश्चन विपश्चिदग्रेसरैः भूसुरैः।

अथवा किं बहुना,

आकुम्भीजन्मसम्पादितचटुलकुटीमुद्रितादद्रिराजा-
दा शैलादप्यशेषाचलमकुटमणेरम्बिकाजन्मभूमेः।
आ च क्षोणीधराभ्यां शशधरमिहिरोत्तंसकाभ्यामुभाभ्यां
तत्रायातं समस्तैरपि धरणितले वर्तमानैर्जनौघैः॥२३॥

ततश्च,

शुम्भत्कौसुम्भरागैरतिमृदुलपटैर्निर्तितोष्णीषपट्टा
लिप्ता रक्ताङ्गरागैर्मणिगणविलसत्कुण्डलोल्लासिगण्डैः।
सङ्घाः प्रोत्क्षिप्यमाणस्फुरदसिलतिकाभासुरा भूसुराणा-
मारोहन्ति स्म विस्मापितनिखिलजना मञ्चमञ्चद्विलासाः॥२४॥

चञ्चत्कराञ्चलविराजितवेत्रदण्डौ
डोलायमानमणिकुण्डललोभनीयौ।
निर्जग्मतुः सुललितौ पुरुषौ युवाना-
वभ्यन्तरात् सपदि देवनिकेतस्य॥२५॥

तदनु अतनुराज्यसंसिक्तजाज्वल्यमानहुतवहप्रतिभटतेजसा अतिबहलधवलतरभसितविरचितत्रिपुण्ड्रमण्डितफालस्थलेन विशदतरदन्तपङ्क्तिमयूखनिकरस्तबकिताधरपल्लवेन निखिलजननयनकृतसुकृतसञ्चयेनेव सञ्चारिणा, मूर्तिमतेव ब्रह्मवर्चसेन, विधृतमानुषगात्रेणेव वीतिहोत्रेण, व्याघ्रग्रामनाथमहोत्सवदर्शनकुतूहलादिव वसुधातलमवतीर्णेनेव बृहस्पतिना केनापि भूसुराग्रेसरेण भासुरपुरोभागः भसितावकुण्ठितात्रैः परिगलदानन्दबाष्पसलिलविलुलितनेत्रैरुद्घुष्यमाणविविधस्तोत्रैः विस्मयविकसितवक्त्रैः निखिलैश्च भक्तजनैरनुगम्यमानः सपदि निजायतनाभ्यन्तरान्निर्जगाम भगवान् निखिललोकशङ्करः शिवशङ्करः।

निर्गम्य च अतिविकटकरटोपान्तनितान्तवान्तमदजलधारातरलचञ्चलीकसञ्चयकलकलनिनदमुखरितककुभं चलाचलकर्णतालयुगलान्दोललीलावधूतललितकर्णचामरमण्डितगण्डमण्डलं घणघणायमानघण्टायुलपरिष्कृतबन्धुरकन्धरम् अत्युज्जृम्भमाणमदभराभोगपरिघूर्णमानविपुलनयनान्तम् अत्यायतदन्तमुसलच्छलेन निखिलदन्तावलमदकन्दलदलनकुद्दालद्वितयमिव दधानं विविधकिङ्किणीनिनदव्याजेन सकलकरिकुलविजयघोपमिवोद्घाटयन्तं विवर्तमिव पुष्कलावर्तकानां परिणाममिव कुलगिरीणां विभ्रमसर्वस्वमिवाभ्रमुवल्लभस्य जन्मान्तरमिव दिङ्मतङ्गजानां व्यत्यासमिवाञ्जनशैलस्य मस्तकाग्रालङ्कृताभिः सुवर्णमयीभिः शशिकलाभिर्निजनामधेयमिव यथार्थमातन्वानं चन्द्रशेखरनामकं कमपि गन्धसिन्धुरमधिरुरोह। ततश्च,

**उद्दाममद्दलमृदङ्गगभीरभेरी-**<br>
**निस्वानकाहलमुखाखिलवाद्यजन्मा।**<br>
**मिश्रीकृतःसकलसज्जनसाधुवादैः**<br>
**कोलाहलः समुदजृम्भत कोऽपि घोषः॥२६॥**

ततश्च विशदशारदनीरदसन्दोहसन्देहकारिणा शुभ्रतरेणाभ्रंलिहेनातपत्रषण्डेन मण्डितगगनमण्डलः "जय जय निखिलजगदेकनाथ भक्तजनचित्तदुस्तरजननमरणमहार्णवकर्णधार चण्डिकाहृदयपुण्डरीकचण्डभानो अत्युद्भटनिटिलस्थलानलज्वालावलीबलावलीढकन्दर्पदर्पमुनिजनहृदयकुमुदाकरनिशाकर प्रणवपङ्केरुहकुहरविहरणमधुकरपोतसच्चिदानन्दकन्दल नमस्ते नमस्ते" इत्यादि स्तुतिमुखरमुखैर्निखिलैश्च भक्तजनैरनुगम्यमानः प्रादक्षिण्येन गच्छन् निजायतनस्योत्तरभागमलञ्चकार।

तदनु,

**त्वङ्गत्तुरङ्गमतरङ्गचयैरुपेता**<br>
**चञ्चत्कृपाणमयमीनकुलं दधाना।**<br>
**काचिन्नदीव सहसैव षडाननस्य**<br>
**सेना तमेव जनताजलधिं जगाहे।२७॥**

उद्यन्मद्दलशङ्खदुन्दुभिमृदङ्गध्वानकोलाहल-
श्चञ्चच्चामरतालवृन्तपटलीसन्दर्शितप्राभवः।
नानासिन्धुरपङ्क्तिबन्धुरतरैः सैन्यैरशेषैर्वृतः
सेनानीः सहसैव मन्मथरिपोरभ्याशमभ्यागमत्॥२८॥

ततश्च निखिलकामिनीजनचरणरणरणायमानमणिमञ्जीरशिञ्जितरञ्जितेन सकलदन्तावलघण्टानिकरक्वणितद्विगुणितेन समस्ततुरगगलगलितभीषणहेषितमिश्रेण निखिलवाद्यनिनदाम्रेडितेन सकलसिद्धगन्धर्वयक्षपन्नगकिन्नरादिसंघुष्यमाणेन जयजयशब्देन समुदजृम्भि।

ततश्च,

स्फीतैः श्वेतातपत्रैः परिलसितवियत्कन्दरः सुन्दरीणां
वृन्दैरान्दोलयद्भिर्मणिवलयघणत्कारिभिश्चामरौघान्।
नानागन्धर्वविद्याधरविबुधनरैः सादरं सेव्यमानः
प्रीतस्तत्रैव तस्थौ वटतरुनिकटे विश्वनाथः सलीलम्॥२९॥

उद्यत्कराम्बुजलसन्मणिदीपिकानां
वृन्दैः स्फुरत्परिसरो वरसुन्दरीणाम्।
पार्श्वे तु तस्य मदबन्धुरसिन्धुरेन्द्र-
स्कन्धे स्थितश्चिरमराजत षण्मुखोऽपि॥३०॥

ततश्च कल्पावसानसमयमुज्जृम्भमाणचतुरम्भोधिगम्भीरनिध्वानसहाध्यायिना अत्युद्वृत्तपुष्कलावर्तकनिकरगम्भीरगर्जितनिर्जयकर्मठेन विपुल- तरमन्थाचलक्षुब्धदुग्धसागरध्वानबद्धस्पर्धेन भयचकितपलायमानवला- रिपुपुरविलासिनीजनधम्मिल्लविगलितबहलकल्पप्रसूननिकरपरिस्तीर्णधरणिमण्डलेन पाषण्डजनेनेव निरुद्धनिखिलश्रुतिव्यापारेण विहितक्रतुशतेनेवाधिरूढस्वर्गेण शङ्खदुन्दुभिमृदङ्गमद्दलकाहलीमुरलीनिस्साणपणवमुखाद्यखिलसम्भवेन केनापि भैरवेण रवेण निखिलजनप्रमोदेन सह समुदजृम्भि।

ततश्च,

झणज्झणितमेखलं मधुरशिञ्जिमञ्जीरकं
श्लथन्निबिडकुन्तलं मृदुलसंक्वणत्कङ्कणम्।
श्रमाम्बुलुलितालकं ललितगीतिशृङ्गारितं
ननर्त च नभस्तले सपदि किन्नरीणां गणः॥३१॥

सद्यश्च हृद्यतरचारुमरन्दधारा-
सौरभ्यलुभ्यदलिसञ्चयसञ्चितान्ता।
स्वःस्त्रीकदम्बपरिकल्पितकल्पवल्ली-
पुष्पावली भुवि रराज दिवः पतन्ती॥३२॥

तदनु च वर्षावसानवेलायामिव घनगर्जितेषु चिरेण विरतेषु निखिलवाद्यविरुतेषु,

जगुर्विगलदस्तोकरसायनमनोहरम्।
उत्तरङ्गितनिश्शेषमानसास्तत्र गायकाः॥३३॥

चतुर्मुखनितम्बिनीकरतलोल्लसद्वल्लकी-
निनादमधुराः सुधारसझरीधुरीणस्वराः।
विरेजुरतिपेशला विकचमल्लिकावल्लरी-
मरन्दरसमाधुरीसरसरीतयो गीतयः॥३४॥

तदनु च, अत्युज्जृम्भितप्रहर्षप्रकर्षकलितहृदयानां भक्तजनानां वक्त्रारविन्दाद् हृदयरङ्गे नृत्यन्त्या भक्तिलासिकाया नूपुरशिञ्जितमिव सञ्जगाम स्तोत्रावलिः।

जय जय जगदेकनाथ प्रभो देवदेव प्रसीद त्रिशूलिन् कपालिन् भवाम्भोधिमध्ये सदा बद्धखेदं मुहुर्मज्जनोन्मज्जनैर्मुह्यते मह्यमाशु प्रदेहि प्रमोदेन तं पादपङ्केरुहं नावमाविर्दयं, त्वत्पदाम्भोरुहादन्यदस्मादृशां किं समालम्बन सान्द्रकारुण्यसिन्धो सतामेकबन्धो जगत्सृष्टिरक्षाविनाशैकदीक्षा-धुरीणामरीणार्द्रकारुण्यधारासुधाधोरणी भक्तिभाजा जनानामहन्तालताकर्तरीं मृत्युजन्मादिसन्तापविध्वंसर्सासद्धौषधिं देहि तुष्टामिता दृष्टिमिष्टप्रदां नौमि नित्यम्।

क्वचिच्चञ्चदञ्चज्जटामण्डलीहिण्डमानस्फुरत्स्वस्सरिन्निःसरल्लोलकल्लोलहल्लोहलध्वाननिर्धूतलोकं, क्वचिच्चारुधम्मिल्लभारोल्लसन्मल्लिकावल्ल रीनिर्यदामोदसम्भारसंभ्राम्यदुत्तालमत्तालिझङ्कारश्रृङ्गारिताशान्तरालं, क्वचिन्मुण्डमालागणैर्मण्डितं, कुत्रचित् फुल्लमल्ल्युत्करैरुल्लसन्तं, क्वचिद् भस्मपुण्ड्रोल्लसत् फालदेशं, क्वचिन्नीललोलाळकालीसमुल्लासि वक्त्रारविन्दं क्वचित् फाालनेत्रोज्ज्वलत् वीतिहोत्रं, क्वचित् चित्रकस्तुरिका चित्रकालङ्कृतं, कुत्रचिद् भक्ततृष्णालताकन्ददात्रायितारक्तनेत्राञ्चलं, क्वचिद्वित्रसद्बालसारङ्गयोषिच्चलापाङ्गभङ्गीभिरङ्गीकृतं, क्वचिद् भूरिभूतिस्फुरत्पाण्डुगण्डस्थलं कुत्रचिच्चित्रपत्राङ्कुरैरङ्कितं, कुत्रचित् कण्ठभूषापदोद्भासितस्थूलकद्रूसुतं, क्वापि गण्डस्खलत्कुण्डलालग्नरत्न- प्रभाभासुरं, कुत्रचित् संभृतक्ष्वेलकालप्रभालीमिलत्कन्धरामन्थरं, कुत्रचिच्चारुरेखात्रयीभासुरं, क्वापि च स्फीतवक्षःस्थलाकुण्डभस्माव- कुण्ठोज्ज्वलं, क्वापि चोत्तुङ्गपीनस्तनासक्तकस्तूरिकाकर्दमं, कुत्रचिल्लम्बमानास्थिमालागणं, क्वापि चामुक्तमुक्तावलीबन्धुरं, कुत्रचिद् भस्मना भासमानोदरं, क्वापि चापीनवक्षोरुहक्लान्तभुग्नावलग्नं, क्वचिद् व्याघ्रचर्माम्बराकम्प्रशोभं, क्वचिच्चापि शुम्भन्नितम्बस्थलोद्यद्दुकूलाञ्चला- बद्धकाञ्चीकलापं, क्वचिद्भोगिवृन्दस्फुरत्पादपद्मं, क्वचिन्मञ्जुशिञ्जा- नमञ्जीरकालङ्कृतं, गोत्रराजात्मजांगात्रमिश्रीभवन्तं भवन्तं सदा मानसे शीलयामः। सदा त्वत्पदाम्भोरुहद्वन्द्वसंसेवनादन्यदेकं न वाञ्छाम्यहम्। कृन्धि तृष्णालताम्। छिन्धि संसारबन्धम्। मनोवागलभ्यस्वरूपाय तुभ्यं नमः। सच्चिदानन्दकन्दाय तुभ्यं नमः। सर्ववेदान्तसिद्धान्ततत्त्वार्थसारस्वरूपाय तुभ्यं नमः। नित्यशुद्धप्रबुद्धाय तुभ्यं नमः। रज्जुसर्पाभमेतत् समस्तं प्रपञ्चं सदा पश्यतां योगभाजां जनानामिडापिङ्गलानाडिसन्नद्धशुम्भत्सुषुम्नामहानाडिमध्ये विशुद्धे समाधौ स्फुटं भासमानाय संवित्प्रकाशाय तुभ्यं नमः। पाहि पाहि प्रभो मन्मथारे महादेव शम्भो कृपां भो निधेहि प्रभो विश्वमूर्ते नमस्ते नमस्ते नमस्तेऽस्तु शम्भो नमः।

अथवा किं बहुना–

**केचिन्नृत्तेन वाद्यैः कतिचन कतिचिच्चापि गीतैर्मनोज्ञैः**
**केचित् स्तोत्रैर्विचित्रैः कतिचिदपि तथा बन्धनैरञ्जलीनाम्।**
**केचिच्चानल्पपुष्पाञ्जलिविरचनया कीर्तनैश्चापि नाम्नां**
**तत्रैवाश्वत्थमूले पुरमथनमसेवन्त सर्वे जनौघाः॥३५॥**

तस्मिन्नन्तरे,

**आयाता कुङ्कुमारक्तपयोधरविराजिता।**
**सन्ध्या तत्रोत्सवालोककुतूहलवशादिव॥३६॥**

ततश्च, ससंभ्रमप्रचलितैर्महद्भिर्जनसमाजैः परिवृतः प्रादक्षिण्येन निजायतनस्योत्तरभागमलञ्चकार भगवता शिखिवाहनेन विराजितोपकण्ठः शितिकण्ठः।

तदनु,

**तुरङ्गमखुराहतिक्षुभितमेदिनीमण्डली-**
**निरर्गलसमुद्गतप्रचुरधूलिकाधूसरैः।**
**यथागतपथागमन्निरुपमैः स्वसैन्यैर्वृतो**
**गभीरपटहध्वनिस्थगितदिङ्मुखः षण्मुखः॥३७॥**

तदनु, क्रमेण निखिलजनपरीतः सपदि निजायतनद्वारं सनाथीचकार भगवान् निरुपमकारुण्यशाली त्रिशूली।

अनन्तरम्-

**तस्मात् सलीलमवरुह्य गजाधिपस्य**
**स्कन्धान्नितान्तविगलन्मदबन्धुरस्य।**
**अन्तर्दधौ स च पतिर्जगतां त्रयाणा-**
**मस्ताचलस्य शिखरादिव भानुमाली॥३८॥**

ततश्च समुन्मिषन्निद्रापरिश्रान्तेषु तत्र विश्रान्तेषु समस्तेषु जनेषु क्षणादिव समुपजगाम निशीथिनी।

**ततः समस्तोऽपि जनः प्रभाते गम्भीरशङ्खध्वनिभिः प्रबुद्धः।**
**क्रमेण पूर्वाचलमस्तकाग्रादाविर्बभूव स्फुटमंशुमाली॥३९॥**

तदनु,

नानापादातदन्तावलमनुजमुखैराशु सैन्यैः परीते
गत्वा तत्रोत्तरस्यां दिशि विपुलमतिस्वच्छतोयं तटाकम्।
कृत्स्नं स्वस्त्रानपूतैर्जनमपि सलिलैः स्नापयित्वा स्वकीयं
स्थानं सद्यः प्रविष्टः पुनरमितदयास्यन्दशाली त्रिशूली॥४०॥

इत्थं रसालकलिकान्तरमन्दमन्द-
निष्यन्दमानमकरन्दझरीधुरीणाम्।
शृङ्गारकेतुतनयस्य गिरं निशम्य
प्रीतिं जगाम परमां स पतिः सुराणाम्॥४१॥

इति अष्टमीमहोत्सवप्रबन्धः समाप्तः॥

# स्वाहासुधाकरप्रबन्धः

मङ्गल्यं वः करोतु ज्वलनदयितया संगमे भर्तृभीत्या
ग्रस्ताङ्गो हन्त तस्यामपि च हुतभुजा ग्रस्ततां प्रापितायाम्।
निश्चन्द्रे व्योममार्गे सदसि च हरिणा कौशलाद्दर्शितात्मा
वासोभिः सोपहासं सकलसुरगणैरर्चितोऽयं मृगाङ्कः॥१॥

जिह्वायां कमलोद्भवः स्वगृहिणीं वाणीं दधत्यादरा-
त्कृष्णो वक्षसि सिन्धुराजतनयामाधाय धत्ते मुदम्।
देहार्धे गिरिकन्यकां च गिरिशो गृह्णाति मोहाद्यथा
स्वाहां हव्यभुगादधाति जठरे कामातुरोऽयं तथा॥२॥

एतावानस्ति विशेषः-

ब्रह्मादयस्त्रयो देवाः सदा दधति वल्लभाम्।
दधाति याममात्रं न पावकः संध्ययोर्द्वयोः॥३॥

अथ कदाचित्-

संध्योपासनकर्मणे सपदि तां निक्षिप्य कान्ते गते
चन्द्रस्तामवलोक्य मन्मथशरैः संतापितात्मा चिरम्।
मल्लीचन्दनमन्दमारुतरसेष्वाहन्त निन्दापरः
कष्टे कांश्चन वासरानगमयत्प्रत्येकमब्दोपमान्॥४॥

तदनु कदाचन दिवसावसानवेलायां मन्दमन्दमायाति च मलयशिख-रिशिखरशेखरितसुन्दरतरचन्दनतरुमञ्जुलतरमञ्जरीविसृमरमकरन्द-बिन्दुभरणमन्दगमने मन्दपवने, झंकुर्वाणे च संध्यासमयविनम-

दुन्नमदतिकोमलदलपेशलसकलकमलकुमुदकुलमधुरतरमकरन्दरसतुल्यकालसमास्वादनजनितानन्दकन्दलितविरहिवर्गव्यलीके चञ्चरीके, वियुज्यमाने च विरहवेदनाविदीर्णहृदंये समाक्रन्दवाचालिताशाचकवाले चक्रवाके, संप्रयाते च कुहचन सहचरीं निक्षिप्य विक्षेपादिकर्मकृतादरे स्वाहासहचरे पुष्पायुधनिष्पादितपीडाकुल एष दोषाकरः कुमुदिनीरोहिणीभ्यामप्यविज्ञातवृत्तान्तं स्वाहया सनाथीकृतमुटजाङ्गणमभिससार।

**दृष्ट्वा सा कामसेनापतिमतिसुकुमाराङ्गमारादकाण्डे**
**चन्द्रं नारीजनानामतिशयसुलभादाकुला चित्तलौल्यात्।**
**तस्थौ गत्वा गृहाभ्यन्तरममरमुखेनास्य संचारयन्ती**
**वक्त्रे मन्दस्मितार्द्रानतिमधुरसुधाशीतपातान्कटाक्षान्॥५॥**

**किमिह बहुभिरुक्तप्रक्रमैः पक्ष्मलाक्ष्याः**
**सकलभुवनबन्धोश्चातिमुग्धाः कटाक्षाः।**
**हृदयहरणदक्षाः प्रोचुरन्योन्यमेत्य**
**प्रणवगतिमशेषां दुतिकातुल्यरूपाः॥६॥**

अनन्तरममृतगुरेवमवादीत्-

**पश्य त्वं भृङ्गपोतं कमपि कुमुदिनीतीरभागे चरन्तं**
**सौरभ्यं मन्दवातैरुपहृतमतुलं किंचिदास्वादयन्तम्।**
**एतस्या हन्त माध्वीरसमतिमधुरं जातु पातुं नितान्तं**
**मुग्धे वक्त्रे विकासं दिवसपरिणतिप्राप्तमाकाङ्क्षमाणम्॥७॥**

अथ स्वाहयाप्येवमभिहितम्-

**रविरयमस्तं यातः समागतो हन्त हन्त चन्द्रोऽयम्।**
**याति विकासमपीयं कुमुद्वती किं विलम्बसे भृङ्ग॥८॥**

अनयोरेवमादिभिः संल्लापैरुल्लासितमल्लिकायुधविलासयोः सपदि परस्परगृहीतहस्ताम्बुजयोरालिङ्गनचुम्बनाडम्बरैः संभृतानन्दयोरतिमधुरमधरबिम्बमास्वादयतोरतिकोमलवदनकमलसमवलोकनविधुतविरहवेदनयोरन्तरान्तरासंसभ्रमज्वलनसमागमनावलोकनव्यापृतैकेकनेत्रयोः स्वाहाचन्द्रमसोर्मन्द-

मन्दनिष्पन्दमानमञ्जुलतरमिलितसीत्कारमनोहरा मञ्जुशिञ्जानवलय-नूपुरमेखलागुणा दशननिपातविदलितसकलावयवा: प्रसृमरघर्मलेश-मिलितनिखिलशरीरा: शनैर्म्लायमानसकलावयवा: सुरतोत्सवा: संबभूवु:। ततश्च-

भूयादेवं प्रभाते दिवसपरिणतौ चावयोरङ्गजन्म-
क्रीडाभेदो निगूढो मुहुरिति सदयं सस्पृहं सप्रमोदम्।
संभाषन्तौ युवानौ विरहहुतवहग्रस्तदेहावभूतां
स्वाहा हाहन्त पश्चादपि च हुतवहग्रस्तदेहा बभूव॥९॥

तदनु तयोरेवमेव चौर्यसुरतमनुसेवतोरनुक्षणविजृम्भिताभिलाक्यो: कदाचिदप्यपरिपूर्णमनोरथयो: स्वाहासुधा करयोराज्यधारयेव महानलो मदनानल: प्रतिक्षणं समजृम्भत।

अथ निपुणमतीनामग्रणीरुग्ररूप:
स्मरशरपरितापव्याकुलाङ्गो मृगाङ्क:।
प्रतिदिनमवियोगे कल्पयन्नभ्युपायं
प्रणयपरवशां ता वल्लभामेवमूचे॥१०॥

ह्वद्यां विद्यामधीष्व त्वमिह सहचरात्पावकाव्याजपूर्वं
धत्ते सोऽयं यथा त्वामनुदिनमुदरे सादरं हन्त पश्चात् ।
धत्ते मां याहि नित्यं जठरकुहरमेतस्य जातानुमोदा-
वावां तस्मिन्वसन्तौ तदनु विहरणं कुर्वहे सर्वकालम्॥११॥

अथ सा हुतवहसहचरी मधुरां जारभारतीं तथेति प्रतिगृह्य स्त्रीजनसुलभेन निर्बन्धेन निबध्य सुदुर्लभामपि तां विद्यां जडात्मनो हुताशनादधिजगाम।

संध्यायामथ निर्गते पुनरहो कामाहवं कुर्वतो:
स्वाहाचन्द्रमसो: क्षणेन स गतो यामोऽयमामोदिनो:।
संप्राप्ते परिणेतरि क्षणमिव स्वाहानु विद्यावशा-
त्संजग्राह निजोदरे शशधरं तामप्यसौ पावक:॥१२॥

ततश्च–

कथं वा राकायामिह नहि समायाति गगने
शशाङ्को रात्र्यर्धं गतमिति मिथो हन्त गदताम्।
नितान्तं तिथ्यर्क्षग्रहणगणनाव्याकुलधियां
जनानां संजाताः कतिचन महान्तः कलकलाः॥१३॥

हा हा नः प्राणनाथः क्व नु स्वलु विगतः संत्यजन्कष्टमस्मा-
नित्थं तारावलीनां क्व नु मम जनको हन्त हन्तेति चान्द्रेः।
आहारो हन्त हा हा गत इति च सुराणां नितान्तातुराणां
वाक्यैरश्रुप्रवाहैरपि च सुरकुलं व्याकुलं संबभूव॥१४॥

अथ शतमखचतुर्मुखैरखिलैरमरैरस्मदापन्निवारणप्रवीणौ नारायणान्नान्यः कश्चिदिति निश्चिन्वानैरनवरतस्तुतिरवमुखरितहरिदन्तरालैः संचिन्तितो भगवानम्बुजाक्षः।

विज्ञायाथ दयानिधिः स भगवानाकाङ्क्षितं नाकिनां
सद्यः प्रादुरभूदपारमहिमा मन्दस्मितार्द्राननः।
नीलाम्भोधरजालकोमलतरैरानन्दयन्नङ्गकै-
श्चन्द्रालोकनकौतुकं सुमनसां वक्त्रेन्दुना पूरयन्॥१५॥

स्वाहाग्रस्तं मृगाङ्कं तुलितमहदकूपारगाम्भीर्ययासौ
बुध्द्या निध्याय देवान्मुकुलितकरपङ्केरुहानेवमूचे।
विज्ञातं वः सुरेन्द्राः सकलमिह मया कारणं मत्प्रणामे
संजातं घोरघोरं व्यसनमिदमहं नूनमुन्मूलयामि॥१६॥

यूयं यात बहिः क्षणं हुतभुजा संभाषणं कुर्महे
नास्माकं वचनं तदन्तरगता स्वाहापि गृह्णातु सा।
षट्कर्णश्रुतमन्त्ररक्षणविधौ को वा विदग्धः पुमा-
नित्थं नीतिविदां वचो न किमिदं युष्माभिराकर्णितम्॥१७॥
नारायणेन गदिता मुदितानुभावा-
मेवंविधामथ गिरं विबुधा विचार्य।

स्वाहागतं निखिलचापलमाकलय्य
 व्रीडापरा नतमुरारिपदाः प्रयाताः॥१८॥

स्वाहां विन्यस्य याते कुहचन दहने पार्श्वभागं मुरारे-
 र्देवाः स्वाहासमीपं निभृतमुपगतास्तस्थुरत्यन्तगूढाः।
सापि प्रीता समन्तात्पथि मुहुरवलोक्याशु लब्धावकाशा
 वासोलेशेन हीनं गगनपथमथो यापयामास चन्द्रम्॥१९॥

अथ निभृतमवस्थिताः सुरेन्द्राः परिहसनाभिमुखाः सहस्ततालम्।
 वसनमुरुतरं समुत्क्षिपन्तो विविधतरां गिरमेवमूचिरे ते॥२०॥

तव हन्त वियोगपीडितं जनमेनं प्रविहाय किं भवान्।
 गमनं विदधाति गृह्यतां वसनं चेति च केचिदूचिरे॥२१॥

निहितं वसनं क्व तावकं रचयामोऽस्य गवेषणं वयम्।
 अथवा वसनं प्रगृह्यतामिदमेवेति च केचिदूचिरे॥२२॥

व्यसनं वसनापहारजं कथमेतद्भवतः समागतम्।
 त्वरितं च मदीयमंशुकं परिधेहीति च केचिदूचिरे॥२३॥

देवो नारायणोऽथ ज्वलनमुपगतं मन्दमन्दं बभाषे
 चन्द्रालोकाभ्युपायं कथयितुमधुना बुद्धिकौशल्यशाली।
आनीतः स्वं समीपं स किल शशधरो लक्षितो देववृन्दै-
 स्तस्माद्याहीति याते तदनु च दहने देवदेवस्तिरोऽभूत्॥२४॥

निन्दन्तः केचिदिन्दुं कतिचन दयितां पावकस्य क्षिपन्तः
 स्वाहानाथस्य जाड्यं महदिति च परे निर्विशङ्कं वदन्तः।
चित्रं चित्रं चरित्रं सकलसुरपतेर्माधवस्येति भक्त्या
 वैकुण्ठं संस्तुवन्तो निजमथ विबुधा मन्दिरं भेजिरे ते॥२५॥

स्वाहासुधाकरं नाम प्रबन्धमतिकोमलम्।
 अकरोदचिरेणैव नारायणमहीसुरः॥२६॥

इति स्वाहासुधाकरप्रबन्धः समाप्तः।

# कोटिविरहप्रबन्धः

भङ्ग्या निजाङ्गकानामङ्गजमपि मानहीनमाकलयन्।
संगीतकेतुनामा धीमानासीद्द्विजोत्तमः श्रीमान्॥१॥

कलाभिरपि पूर्णात्मा कुमुदामोदमावहन्।
सतां प्रीतिकरः सोऽयं द्विजेन्द्रः शुशुभेतराम्॥२॥

तस्मिन्नेव समये

संकेतभूमिः सुकुमारतायाः संगीतसाहित्यसरोमराली।
श्रृङ्गारलक्ष्मीरिव संभृताङ्गी श्रृङ्गारलीलेति बभूव बाला॥३॥

अधिककुतुकदात्री पश्यतां सा समेषा-
ममृतकिरणलेखेवान्वहं वर्धमाना।
अभजत वयसस्तामत्युदारामवस्था-
मतुलितमपदानं तन्वतीमङ्गयोनेः॥४॥

यथा यथा वक्षसि पक्ष्मलाक्ष्याः कुचद्वयी वृद्धिमवाप तस्याः।
तथा तथावर्धत कामुकानां विलोकने कापि कुतूहलश्रीः॥५॥

आकर्णयन्तावनघान्गुणौघानाम्रेड्यमानाननिशं जनौघैः।
आकाङ्क्षितान्योन्यविलोकनौ तावास्ताममन्दप्रणयौ युवानौ॥६॥

हृदयगूढनिरूढमनोजयोरिति तयोर्वसतोः कुतुकार्द्रयोः।
अभवदभ्युदयाय महो महाननतिदूरगते गिरिजालये॥७॥

आकल्पजालसविशेषमनोहरश्रीः
साकं वयस्यनिवहैश्च समानवेषैः।
सोऽयं विवेश गिरिजाभवनं विलासी
तामुत्सवश्रियमुदीक्षितुमुत्सुकात्मा॥८॥

आकाङ्क्षितार्थजननीमभिवन्द्य गौरी-
मालोकयन्नभिनवानयममुत्सवौघान्।
अन्यूनकौतुकभरैः सहितो वयस्यै-
रध्यारुरोह ललितामथ रत्नवेदीम्॥९॥

आलीवृन्दैरधिकनिपुणैरात्मना निर्विशेषैः
केलीशीलैः सततवशगैरावृता च स्वकान्तैः।
नानाभूषामणिगणरुचा भासयन्ती दिगन्तं
सा च प्रागादुदितकुतुका द्रष्टुमेवोत्सवं तम्॥१०॥

नत्वा देवीभभिमतफलप्राप्तिहेतुं भवानीं
मुग्धाक्षी सा सह सहचरैः संचरन्ती सहेलम्।
प्राप्ता दैवात्सपदि पुरतस्तस्य संगीतकेतो-
रत्रानन्दप्रसरमपरां वेदिकामारुरोह॥११॥

विलोकयन्ती तमतीव कान्तं विलोचनासेचनकं युवानम्।
सा कोऽयमित्यन्तरुदीतचिन्ता बाला क्षणं व्याकुलतामवाप॥१२॥

स च तामवलोकयन्नुपेतामतिमात्रायतलोचनामदूरे।
हृदि केयमिति प्ररूढचिन्तः क्षणमासीत्प्रतिपत्तिमूढचेताः॥१३॥

स इति सेति च तौ परिबोधितो सवयसा शनकैः श्रवणान्तिके।
अतनुतां परिरम्भणमञ्चलैर्नयनयोर्नवविभ्रमचञ्चलैः॥१४॥

उद्भिद्यमानपुलकौ निटिलप्ररोह-
दाकम्रघर्मकणसुन्दरवक्त्रबिम्बौ।
धन्याविमौ विगलितान्यसखौ युवाना-
वन्योन्यदर्शनमहोत्सवमन्वभूताम्॥१५॥

अत्यायतैर्गुणगणैर्निबिडं निबद्धा-
वाकृष्यतामभिमुखौ तरसा विधाय।
अव्याजविक्रमधनो विललास संख्ये
सव्यापसव्यमिषुभिर्विकिरन्मनोभूः॥१६॥

तदनु कतिपयानां नाडिकानां विरामे
विरतिमुपगतोऽभूदुत्सवश्चण्डिकायाः।
विततकुतुकभाजोरेतयोर्नेत्रकोण-
व्यतिकररसजन्मा तूत्सवो न व्यरंसीत्॥१७॥

अपयत्सु जनेषु तावतृप्तावववरूढौ गमनाय वेदिकायाः।
मृदहाससुधानुलिप्तवक्त्रौ मितमापृच्छ्य यथागतं प्रयातौ॥१८॥

किमपि किमपि सख्याः श्रोत्रमूले वदन्ती
वलितवदनमेनं वीक्षमाणा युवानम्।
कपटकृतविलम्बा कामिनी सा कथंचि-
न्निजनिलयमयासीन्निह्नुतानङ्गपीडा॥१९॥

सेयं सायं प्राप्य गेहं नताङ्गी
भेजे तल्पं कल्पितं तत्सखीभिः।
अत्यारूढां चित्तजन्मव्यथांता-
मध्वश्रान्तिव्याजतो गूहमाना॥२०॥

पश्यन्ती तं हृदि सुकृतिनं निःश्वसन्ती सुदीर्घं
नश्यद्धैर्या नयनकमलादश्रुधारां किरन्ती।
विस्त्रस्ताङ्गी विदलितमनाः सायके मीनकेतो-
रस्वस्था सा समजनि मनोमोहना मुग्धगात्री॥२१॥

विदितविगतिमूलैः सा सखीनां निकायैः
सततमथ वचोभिः सम्यगाश्वास्यमाना।
कथमपि धृतशोका वासरान्वत्सराभा-
न्परिचितधृति निन्ये पञ्चषानञ्चिताङ्गी॥२२॥

स्फुटमिव कथयन्तीमन्तरुज्जृम्भमाणां
कुसुमविशिखपीडां मुग्धपातैः कटाक्षैः।
स च मधुरमुखीं तां वीक्षमाणः प्रयान्तीं
युगपदभिहतोऽभूदायुधैरङ्गयोनेः॥२३॥

चतुरवचनभेदव्यञ्जितातीतवृत्तै-
स्तदनु सह वयस्यैरेष मन्दं जगाम।
गलदतिगुरुकैश्यं गन्धमातङ्गमन्दं
गमनमनघगात्र्याश्चिन्तयन्नन्धचेताः॥२४॥

गत्वा गेहं प्रियसहचरैः साकमारूढमूलं
मारातङ्कं मनसि सततं गूहमानोऽपि धीमान्।
तामेवान्तस्तरलनयनां कल्पयन्नल्पधैर्यं
क्षामक्षामः समजनि दिनैः पञ्चषैरेष कामी॥२५॥

वक्त्रं तदुद्गतमनोहरमन्दहासं
वक्षोरुहावपि च तौ क्रमवर्धमानौ।
विस्तारितं जघनमित्यनुवेलमस्य
चित्तं क्रमेण तरुणीमयमेव जातम्॥२६॥

तस्मिन्ननुक्षणमिति प्रविजृम्भमाणे
मारामये स तु कदाचिदुदारधामा।
व्याजेन केनचिदनन्यगतिः स्वगेहा-
देकः प्रियामवलुलोकयिषुः प्रतस्थे॥२७॥

अंसे वहन्नधिककोमलमङ्गनानां
चिंल्लीविलासचतुरं मधुरं शरासम्।
अध्वानमन्तिकचरं कथयन्नक्रं
साहाय्यमस्य विदधे सहकारबाणः॥२८॥

स्फुरद्रागोन्मेषे चरमगिरिसौधाग्रवलभी
नभोमध्यादद्धा विशति नलिनीजीवितसमे।

असावक्षीणश्रीरधिकलुलिताङ्गोऽपि शनकैः
प्रपेदे प्रेयस्याः प्रकृतिरमणीयं निलयनम्॥२९॥

तदनु मुदितचेताः प्राप्य वापीमदूरे
विमलसलिलपूरस्पर्शवीताध्वखेदः।
अधिकसुभगपातैः सेवितो वातपोतैः
सकुतुकमभिपेदे मन्दिरं सुन्दराङ्ग्याः॥३०॥

आवृण्वानामुरसिजभरोत्सेधमेकेन दोष्णा
विन्यस्यन्ती तदितरकरे वक्त्रमापाण्डुगण्डम्।
अङ्के सख्या निहितचरणामध्वनि न्यस्तनेत्रा-
मद्राक्षीत्तां मृदुनि तलिमे मुग्धगात्रीं शयानाम्॥३१॥

तदनु मदनपीडां मानसे देहकान्त्या
स्फुटमिव कलयन्तीं प्रेक्ष्य कान्तामदूरे।
कुतुकभरमनोजातङ्कमिश्रीकृतात्मा
द्रुतमभजत कामी वामनेत्रासकाशम्॥३२॥

अभ्यर्थ्यमानमनिशं मनसा पुरस्ता-
दभ्यागतं समवलोक्य युवानमेनम्।
सा स्वागतोक्तिमकरोदमृतद्रवार्द्र-
मन्दारकान्तिलहरीसुहृदा स्मितेन॥३३॥

ततः श्रान्ते कान्ते सविधभुवि सख्या चतुरया
समानीतं नव्यं तृणकटमलंकुर्वति शनैः।
न्यषीदत्या चारान्मितमधुरवाणीविलसितै-
र्हरन्ती तच्चेतो हरिणतरुणीमुग्धनयना॥३४॥

लपन्तावन्योन्यं किमपि समुदाचारसरसं
दिशन्तौ ताम्बूलं परिमिलितकर्पूरशकलम्।
वदन्तावाकाङ्क्षामधिकचतुरैरक्षिवलनै-
र्युवानौ तावास्तामुदयदधिकामोदसरसौ॥३५॥

वाङ्मात्रेण प्रतिष्ठासुमप्रतिष्ठासुमात्मना।
कामिनी कामुकं प्राह यामिनीकामुकानना॥३६॥

यातप्रायमिदं दिनं कमलिनी दीनेयमालोक्यतां
नीरन्ध्रश्च पयोधरः स च शशी दूरेऽधुना वर्तते।
विप्रागारमिदं तटाकसविधे स्वायत्तमेतञ्च ते
गेहं तत्क्षपय क्षपामिह महान् कार्यातिपातो न चेत्॥३७॥

अध्वा निर्मल एव नापि सहसा संवर्धते वा तमो
विद्यन्ते च निकेतनानि सुहृदामृद्धानि मध्येपथम्।
मुग्धापाङ्गि पयोधरः परमसौ संध्यागमे सांप्रतं
प्रस्थानोद्यममुन्नमत्परिगलद्धारो रुणद्ध्येव मे॥३८॥

वदतोरिति मुग्धहामाध्वन्मधुरं व्यञ्जितमञ्जुरागबन्धम्।
अरुणं तरणेरवाप बिम्बं वरुणाशातरुणीवतंसभावस्॥३९॥

अथ स विहितसंध्यावन्दनाद्यः समीपे
कथितधरणिदेवस्यालये तन्नियोगात्।
सकुतुकरुचि भुक्त्वा स्वादु संपन्नमन्नं
त्वरितमुपजगाम प्रेयसीवासगेहम्॥४०॥

स्नातानुलिप्ततनुरागमनं तदीयं
सा च प्रगाढकुतुका परिपालयन्ती।
मुग्धेक्षणा निजमसेवत वासगेहं
मुद्रादरिद्रमदनद्युति मुग्धगात्री॥४१॥

उन्निद्रकान्तिलहरीमहनीयगात्रीं
संनाहिनीं सरसिजायुधसंप्रहारे।
तां पश्यतः क्षितिसुरस्य समुज्जजृम्भे
पूर्वाधिका मनसि कापि कुतूहलश्रीः॥४२॥

तल्पोपान्ते तदनु च मिथः संनिविष्टौ दिशन्तौ
कर्पूरैलामिलनसुभगां शुभ्रताम्बूलवीटीम्।
सख्या साकं चतुरवचसा सूचितान्योन्यभावै-
र्वक्रालापैः कमपि समयं यापयांचक्रतुस्तौ॥४३॥

पश्यन्ती पुनरनयोरिङ्गितभेदैरनङ्गपरिपीडाम्।
नातिचिरादतिनिपुणा नाटितनिद्रागमा सखी निरगात्॥४४॥

बहिः स्वल्पं तल्पं तदनु स तया दीपकरया
समादिष्टं भेजे मदनपरिदूनेन वपुषा।
हृदा तु प्रत्यग्रं प्रसवशरकेलीगृहगतं
तदीयप्रत्यन्तं परिहसितपर्वेन्दुसुषमम्॥४५॥

तदनु शशिमुखी सा प्राप्य शय्यानिकेतं
निजमभजत तल्पं निर्भरानङ्गपीडा।
किमपि जनितकम्पैरङ्गकैर्भृङ्गमाला-
वचन ( चरण ) चलितमल्लीवल्लरीतुल्यकुल्यैः॥४६॥

मनसा सदृशानुरागभाजौ मुहुरुद्युक्तपरस्पराभिसारौ।
अवमानभयेन जातचिन्ताववलन्तौ वपुषा च तावभूताम्॥४७॥

तल्पादनल्परसमुच्चलितोऽथ तत्त्वा-
त्पुष्पायुधेन बलिना परिणुद्यमानः।
सोऽयं विवेश शनकैः शफरेक्षणायाः
शय्यागृहं शमितकल्पमणिप्रदीपम्॥४८॥

बद्धोद्यमा तदभिसारविधौ विसोढुं
तत्तादृशं मदनतापमपारयन्ती।
मुग्धा विहाय शयनं स्वयमुत्थिता च
न्यस्तं च तेन विवरे कुचयोः कराब्जम्॥४९॥

पुलकिततनुवल्ली सा ततः प्रीतिवेगा-
न्मृदुलभुजलताभ्यां गाढमालिङ्ग्य कान्तम्।
अधिककुतुकमारादानमय्यादसीयं
वदनमधरबिम्बं चुम्बति स्म प्रकामम्॥५०॥

अनुदिवसमयोगे चेतसा काङ्क्षितं य-
द्यदपि मदननाम्ना देशिकेनोपदिष्टम्।
स्फुरितमभवदन्तर्यत्तदात्वे च यूनोः
सुरतमननुभूतं संबभूवाभिरामम्॥५१॥

मिथुनमिदमुदारस्वेदलेशानुविद्धं
पुलकि गलितधैर्यं पुष्यदानन्दभारम्।
दृढमभजत जाग्रत्स्वप्नयोर्मध्यसंस्थां
मदनरससमुत्थामत्युदारामवस्थाम्॥५२॥

अथ सुरतविरामे विस्मृतान्योन्यभेदं
कृतघनपरिरम्भं कोमलाभ्यां कराभ्याम्।
मिलितवदनबिम्बं मिश्रितोरुप्रकाण्डं
शयनमभजतां तौ श्रान्तिभाजौ युवानौ॥५३॥

नाराचबाण (पात) परुषे चरणायुधानां
नादे ततः सरति कर्णयुगान्तरालम्।
गाढं कुचान्तरगतं परिरभ्य कान्तं
वान्ताश्रुबिन्दु कमनी वचनं बभाषे॥५४॥

आबाल्यादपि कान्त कर्णविवरं प्राप्तैस्त्वदीयैर्गुणै-
रासक्तं त्वयि मानसं द्विगुणितं जातं त्वदालोकनात्।
प्राप्तोऽस्यद्य पुनर्मदीयसुकृतैस्तन्मामनन्याश्रयां
त्यक्त्वाद्यैव न याहि पाहि मदनातङ्केन दूनामिमाम्॥५५॥

तन्व्या तया निगदितं श्रृण्वन्कर्णामृतं वचः।
प्रत्युवाच प्रसन्नात्मा स कामी वामलोचनाम्॥५६॥

अभ्यर्थनीयमतिरागजुषा मया य-
न्मुग्धे त्वयैव गदितं तदिदं तथापि।
एतावदद्य कथयामि शपे कुचाभ्या-
माभ्याममुं जनमवैहि तवैव दासम्॥५७॥

इति कृतसमयोऽसौ कल्यमुत्थाय गत्वा
द्विजवरगृहमारादात्मगेहोपमानम्।
विहितसकलकृत्यो मृष्टमास्वाद्य चान्नं
सपदि मुदितचेताः प्राप कान्तानिकेतम्॥५८॥

सा च स्नानाद्यखिलमविलम्बेन निर्वर्त्य कृत्यं
पत्युः प्रत्यागमनपदवीदत्तनेत्रारविन्दा।
भूयोभूयः किमपि रजनीवृत्तमेव स्मरन्ती
पुष्पामोदात्पुलकिततनुः स्वैरमस्थादलिन्दे॥५९॥

आयातेन समं प्रियेण सुमुखी सा प्राप्य वासालयं
स्वच्छप्रच्छदभाजि केलितलिमे तन्वी शयाना सुखम्।
अन्यूनप्रणयप्रवाहसुभगैराकाङ्क्षितैश्चेतसा
तैस्तैर्नर्मभिरुन्मिषत्परिमलैरह्नाय निन्ये दिनम्॥६०॥

क्षणादस्तं याते दिनकृति शनैर्वाति पवने
समादायामोदं दरदलितजातीसुमनसाम्।
समारूढे चेन्दौ गगनममृतस्यन्दिकिरणे
स्मरोन्मादावेगादधिकविवशौ तावभवताम्॥६१॥

गतनिजपरभावं गाढगाढप्रहारं
मणितभरितगेहं मञ्जुभूषाविरावम्।
सुरतमधिकमासीदुद्धतं चित्तरङ्गं
सति मदनविलासे कामिनां का व्यवस्था॥६२॥

समदिवसनिशीथं क्रीडतोरेवमेव
क्षणवदविदितांशा वत्सराः केऽपि याताः।

न च सुरतसुखे तौ वीततृष्णावभूतां
न खलु विषयसङ्गः शीलनेनैति शान्तिम्॥६३॥

इत्थं निवसतोः स्वैरं नित्यं प्रत्यग्रयोस्तयोः।
कदाचित्स्वगृहं याता वयस्या कार्यगौरवात्॥६४॥

शय्योत्थायमथैकदा प्रियतमे याते प्रभातागमे
निद्राशेषनिमीलिताक्षिकमला तन्वी शयाना क्षणम्।
दुर्वारं खलु दैवदुर्विलसितं स्वप्नं स्वयं सा विलो-
क्यान्यासङ्गिनमात्मवल्लभमतिकुद्धा विबुद्धाभवत्॥६५॥

निद्राविरामसमयेऽपि रुषा स्फुरन्त्या
मुद्रादरिद्रतरया परिवृत्तचेताः।
स्वप्नानुभूतमपि वस्तु तदस्तधैर्या
तन्वी चिराय परमार्थतयैव मेने॥६६॥

सा भामिनी परुषरोषनिवीतचित्ता
नैवोच्चचाल शयनादतिदूयमाना।
क्षौमोपधानममलं नयनान्तवान्तै-
रातन्वती मलिनमश्रुभिरञ्जनाक्तैः॥६७॥

यथापुरमुपस्थितः स तु विलोकयन्प्रेयसीं
विकारमयथापुरं विधृतमानमासेदुषीम्।
विषादभरविह्वलः किमिति चिन्तयन्नन्धधी-
रुवाच कलितादरं सरसया गिरा सान्त्वयन्॥६८॥

किमेतदयि वल्लभे कथय किं न जानासि मा-
ममुं तव पदाश्रयं किमिति मानमालम्बसे।
अकारणसमुद्गमामपनयाशु दूरे रुषं
विषादभरिताशये मयि विधेहि दासे दयाम्॥६९॥

गलितचिकुरबन्धं गण्डसंसक्तबाष्पं
विचलदधरबिम्बं विश्लथन्मुग्धगात्रम्।
शयनमिदमकाण्डे व्यायतश्वासवातं
चकितयति मदीयं चण्डि चेतः प्रकामम्।।७०।।

मुञ्च मानमनिदानमिदानीमञ्चिताक्षि हृदि संचिनु मोदम्।
सिञ्च वाङ्म्यसुधाभिरधीरं पञ्चसायकहतं जनमेनम्।।७१।।

इति विविधतराभिः सान्त्व्यमानापि वाग्भिः
प्रतिवचनमुदश्रुः सा यदा न न्यगादीत्।
अधिकुचतटमस्याः कातराक्ष्यास्तदासौ
मृदु निजकरपद्मं न्यस्तवानस्तधैर्यम्।।७२।।

कितव शठ किमेतन्मा स्पृशेत्यात्तभावा
निजकुचयुगमध्यन्यस्तमुत्सार्य हस्तम्।
तरुणमरुणिताभ्यामश्रुपूर्णान्तराभ्यां
नयनसरसिजाभ्यां वीक्ष्य रूक्षं बभाषे।।७३।।

अपसर शठबुद्धे मामकीनान्निकेता-
दलमतिनयवाचां विस्तरैः कृत्रिमैस्ते।
ऋजुमतिरहमेवं त्वय्युपारूढरागा
ध्रुवमवमतिपात्रं हन्त जाता जनानाम्।।७४।।

तामेव नूतनां याहि किं मया यातयामया।
सति सूने दरोत्फुल्ले कस्या वृन्तश्लथे स्पृहा।।७५।।

का सा कामिनि कथ्यतां तव सदा या मानसे वर्तते
सा चेच्चण्डि यदि त्वमेव समये यातं तदैतद्व्रते।
अद्याप्येवमिदं शपे चरणयोर्दृष्टे विवादैरलं
स्वप्नः किंन्वयमम्बुजाक्षि सकलं स्वप्नोपमं दृश्यते।।७६।।

परिचयवशादस्या रागः श्लथः किमु सांप्रतं
धृतरुचिरभूदन्यस्मिन्वा न वेद्मि नवे जने।
किमु तमुपभोगोद्रेकान्मे गतं किमु शून्यतां (!)
न पुनरधुना मानस्थानं मनागपि लक्षये॥७७॥

गतधृतिरिति तत्तत्तर्कयन्कर्कशेन
स्मरपरिभवशोकेनाकुलीभूतचेताः।
क्षणमथ धृतमौनं यत्नसंस्तम्भितास्रं
नतवदनमतिष्ठत्संनिधौ संनताङ्ग्याः॥७८॥

तथा विषीदन्तमनन्यसंश्रयं न किंचिदेषा निजगाद भामिनी।
अतिप्रमाणारुणितेन केवलं दिधक्षतीवैक्षत चक्षुषा रुषा॥७९॥

आरोपितागसमनागसि मय्यकस्मा-
न्मानोद्धुरामनुनयोक्तिभिरप्यसाध्याम्।
एनां त्यजाम्यहमिति क्षणजातबुद्धिः
क्रुध्यन्नसौ कृतघनश्वसितं प्रतस्थे॥८०॥

अथ विलम्ब्य विलम्ब्य शनैः शनैः
प्रियतमानुगतिं प्रतिपालयन्।
नियतिमेव मुहुः परिगर्हयन्नि-
जमवाप चिरेण निकेतनम्॥८१॥

चिराद्दृष्टैरिष्टैर्विदितनिखिलात्मीयचरितै-
र्वसन्गेहे साकं सुमधुरवचोभिः सहचरैः।
स्मरन्मानाक्रान्तां मनसि दयितामेव सततं
कथाबन्धैस्तस्याः कथमपि स कालं क्षपितवान्॥८२॥

निर्धूतधैर्यविभवे हृदि नित्यमित्थं
निध्यायतः प्रियतमां प्रतिपन्नदैन्यम्।
अल्पीयसैव समयेन समुज्जजृम्भे
पुष्पायुधार्तिरतिमात्रमसह्यतापा॥८३॥

उरसि निहितं मुक्ताहारं क्षिपन्नहिशङ्कया
मलयजरसं मन्वानोऽन्तर्महाविषसोदरम्।
वपुषि सहसा जातस्वेदो हिमाम्बुनिषेचने
शिवशिव बभूवायं सायं क्रमात्सुहृदामसौ॥८४॥

गमिष्याम्येवाहं गतदुरभिमानः परिसरं
प्रियाया ही ही मां पुनरपहसेयुर्ननु जनाः।
कथं वा सोढव्यो मदनपरितापः स्थितमिदं
न सा द्रष्टव्या मे स्फुरति हृदये सैव तरुणी॥८५॥

इति बहुविधविकल्पदोलाधिरूढे कान्ते सा तु-

याते च कोपविवशे दयिते स्वगेहा-
द्याते च चेतसि मनागनुतापलेशे।
सा भामिनी तदनुनीतिधृताग्रहापि
सौभाग्यलोभचकिता न चचाल तल्पात्॥८६॥

उत्थाय सेयमुदितस्मृतिरुत्पलाक्षी
तल्पादनल्पतरसाध्वसनुद्यमाना।
मत्वा बहिस्तमनिरीक्ष्य युवानमारा-
दुद्वेलशोकविवशीकृतमानसाभूत्॥८७॥

अपश्यन्ती कान्तं किमिदमिति चिन्तापरवशा
विनिन्दन्ती दैवं मुहुरधिकदूनेन मनसा।
क्षिपन्ती बाष्पाम्भःप्रसरकलुषे दिक्षु नयने
क्षणं तस्थौ तन्वी कुचनिहितबाहासरसिजा॥८८॥

स्थित्वा किंचन वञ्चितास्मि विधिनेत्युत्कम्पमानान्तरा
पश्यन्ती व्रजतः पदानि कमितुस्तन्वी बहिः प्राङ्गणे।
भूयः स्वीयमुपेत्य वासभवनं मानस्मरातित्रपा-
शोकव्याकुलिता पपात शयने लूनेव मल्लीलता॥८९॥

इतः प्राङ्निर्व्यूढाः प्रणयपरिपाटीसुरभिला
रहः क्रीडास्तास्ताः प्रियदयित विस्मृत्य हृदये।
इदानीं मामीषत्कलहकलुषीभूतहृदया-
मनापृच्छ्याकाण्डे यदसि चलितस्तत्किमुचितम्॥९०॥

यन्निमित्तं परित्यक्ता पूर्वं प्राणसमा मया।
तन्निमित्तं परित्याज्याः प्राणांश्चाद्य न संशयः॥९१॥

तत्तच्चिन्ताशबलहृदयां श्रान्तगात्रीं शयानां
तन्वीमित्थं तपनकिरणालीढवल्लीसकुल्याम्।
प्राप्ता दैवात्सपदि सविधं तत्सखी जातखेदा
श्चोतन्माली (?) सरसवचना सान्त्वपूर्वं बभाषे॥९२॥

प्रियसखि वदनं ते किं गलद्बाष्पमेत-
द्वहति तुहिनसिक्तेनाम्बुजेनाद्य मैत्रीम्।
अयि कथय निदानं संविभक्तं हि दुःखं
ननु भवति जनानां सह्यपीडातिरेकम्॥९३॥

क्व ते यातः प्रेयान्प्रहसितहिमांशुं कुमुदिनीं
गतच्छाया भूयस्तनुरनुकरोतीयमधुना।
शुचा दीनो मौनं भजति च निकामं परिजनः
किमेतन्नो जाने वद सखि वयस्यास्मि ननु ते॥९४॥

इति पृष्टा तया तन्वी कृत्वा निःश्वसितं शनैः।
आदितो दुरवस्थां तामातुरा संन्यवेदयत्॥९५॥

श्रुत्वा वृत्तमुवाच सा च युवयोरस्मिन्नवस्थान्तरे
नागः किंचन विद्यते हतविधेरेतद्विलासान्तरम्।
आयास्यत्यचिरात्तथापि दयितस्त्वत्संनिधिं खिन्नधीः
सौभाग्यं तव तादृशं प्रणयिता तस्यापि तादृग्विधा॥९६॥

विरहानलेन तव मानसं यथा प्रियमानसं च परितप्यते ध्रुवम्।
युवयोः परस्परविमेलना ततः सुकरा भवेत्सुरभिबाणशिल्पिनः॥९७॥

सततमिति वचोभिः स्निधया केलिसख्या
विदितहृदयपीडोदन्तया सान्त्व्यमाना।
समधिकपरितापक्षीयमाणाङ्गवल्ली
समयमनयदेषा संस्मरन्ती तमेव॥९८॥

इत्थं दैवादधिगतवतोरप्रियं विप्रयोगं
रोषप्रेमव्यतिकरजुषोः सीदतोर्जातखेदम्।
यूनोरासीत्सपदि पुरतो वारिदानामनेहा
मानव्याधिक्षपणनिपुणः कामिनीकामुकानाम्॥९९॥

चातकीमनसि मोदमावहन्केतकीकुसुमसौरभं वहन्।
धूतनूतनघनः समाययौ चूतसायकसखा समीरणः॥१९०॥

सह मदनधनुर्ज्यानिःस्वनेनोज्जजृम्भे
वियति विततिभाजामारवो नीरदानाम्।
अपतदवनिपृष्ठे नूतना तोयधारा
सह च विरहभाजां विश्लथैरश्रुपूरैः॥१०१॥

इत्थं प्रवृत्ते समये घनानामुद्वेलमुद्धूलितसूनरेणुः।
उच्छूनमानं मिथुनं तदुच्चैरुच्चाटयामास मनोजमन्त्री॥१०२॥

विरहमसहमानौ वीतनिःशेषमानौ
तदनु रहसि दीनौ नुद्यमानौ स्मरेण।
निबिडतमसि घोरे जृम्भमाणे निशीथे
निजनिजनिलयात्तौ निःसृतौ निःसहायौ॥१०३॥

श्रृण्वन्तौ श्रुतिकटु निःस्वनं घनानां पन्थानं पदयुगलेन वीक्षमाणौ।
कुर्वाणौ हृदि च मनोरथाननेकान्दुर्वारस्मरविवशौ विचेरतुस्तौ॥१०४॥

स्निग्धश्यामैस्तमालैरविरलदलसंघातनीरन्ध्रशाखै-
राक्रान्ते भ्रान्तभृङ्गीकुलविततगरुन्मण्डलीमण्डितान्ते।

स्फायद्धोरान्धकारस्थगितदिशि निशीथान्तरे तत्र कुत्रा-
प्यारामे मारपीडाभरपरिलुलितैरङ्गकैः संगतौ तौ॥१०५॥

आबद्धमानौ निभृतं चरन्तावाकस्मिकस्पर्शविकम्पिताङ्गौ।
आवेदयामास परस्परं तावानन्दचन्द्रः स्वयमभ्युदञ्चन्॥१०६॥

आमग्नाङ्गममन्दरागमधुरं तावाश्लिषन्तावुभा-
वस्राम्भोविसरैरतीव शिशिरैरासिच्यमानाङ्गकौ।
आमोदादगलद्गिरावभिनवीभूताविवात्युत्सुका-
वानन्दामृतवारिधावकुरुतामव्याजमामज्जनम्॥१०७॥

इति कोटिविरहप्रबन्धः समाप्तः।

# श्लोकानुक्रमणिका

'ई'

